


# भारतस्य संविधानम्

[ १४-१-१९८५ दिनाङ्के यथाविद्यमानम् ]

( द्विपञ्चाशत्तमसंशोधनसहितम् )

विधायीविभागस्य राजभाषाखण्डः
भारतशासनम्
१९८५




# भारतस्य संविधानम्

[ १४-१-१९८५ दिनाङ्के यथाविद्यमानम् ]

( द्विपञ्चाशत्तमसंशोधनसहितम् )

विधायीविभागस्य राजभाषाखण्डः
भारतशासनम्
१९८५

## प्राक्कथनम्

संविधानसभायाः अध्यक्षस्य प्राधिकारेण १९५०-तमे वर्षे प्रणीते संस्कृतपाठे अद्यावधि सञ्जातानि संविधानस्य सर्वाणि संशोधनानि समावेश्य भारतस्य संविधानस्य संस्कृतभाषायां इदं संस्करणं प्रकाशमानीयते। संस्कृतभाषान्तरणाय, शास्त्रीयशब्दानां निर्माणाय च प्रयुक्ता पद्धतिः प्रथमसंस्करणस्य प्राक्कथने वर्णिता आसीत्। सर्वेषां सौकर्याय तत्प्राक्कथनं अत्र उद्ध्रियते।

संविधानस्य केषांचिदध्यायानां पद्यमये संस्कृते भाषान्तरकारेण मुम्बय्याः उच्चन्यायालयस्य अधिवक्तृणा श्री०एम०एम० दवेमहोदयेन संशोधनानां एतद् भाषान्तरणं प्रणीतं, केन्द्रीयानुवादकार्यालयस्य पूर्ववर्तिना निदेशकेन श्री०काशिरामशर्ममहोदयेन परिष्कृतं च।

**१४ जान्युआरी, १९८५ ख्रिस्तीयः**
**२४ पौषः, १९०६ शकाब्दः**
**(मकरसङ्क्रान्तिः)**

रु० वेङ्कट सूर्य पेरिशास्त्री
**विधिन्यायमन्त्रालये**
**विधायिविभागे**
**सचिवः**

## प्रथमसंस्करणस्य प्राक्कथनम्

संस्कृतभाषायां संविधानभाषान्तरस्य कीदृशी रीतिरनुसरणीया इत्यस्मिन् विषये संविधानसभायाः सभापतिना संसदः सभापतिना च ये नियमाः कृता साधारणतस्तान् नियमाननुसृत्यैवेदं भाषान्तरं प्रणीतमस्ति। संस्कृतभाषान्तर-समितिः खलु स्वभाषान्तरार्थं स्वाभिमतपरिभाषावलम्बने न स्वतन्त्राऽऽसीत्। यतः भारतीयभाषाणामर्थे संविधानस्य भाषान्तरेषु साधारणपरिभाषाकोशः तदर्थं नियुक्तया समित्या प्रणीत एव प्रायः समवलम्बनीयः इत्येवं संविधान सभायाः संसदश्च सभापतिना निर्दिष्टं नियमं पुरस्कृत्यैवेदं भाषान्तरं कर्तव्यमासीत्। किंच संसदः सभापतिना एवमप्याज्ञापितमस्ति यत् संविधानस्यास्य हिन्दीभाषायां कृते भाषान्तरे ये संस्कृताः शब्दाः त एव यावच्छक्यम्-अन्येषु भाषान्तरेष्वपि प्रयोक्तव्याः इति, तदनुरोधेन यथासंभवं हिन्दीभाषान्तरस्थाः शब्दा अप्यादृताः। भाषान्तरं चेदं शब्दशः वाक्यशः वाक्यखण्डक्रमशश्च कृतम्।

तथापि अत्र निम्नलिखिता विशेषा अवधारणीयाः। साधारणपरिभाषाकोशे परिगणितानां शब्दानां मध्ये ये शब्दाः संस्कृतभाषान्तर्गता न सन्ति, यथा शर्त (condition), आस्तियाँ (assets), मंजूरी (sanction), हक़ (title), जाँच (enquiry), दिवालिया (insolvent), सिपारिश (recommendation), नौकरी (employment), दर (rate), क़रार (agreement), क़ारखाना (factory), फ़ायदा (benefit), दावा (claim), तैयार करना (preparation), व्याज (interest) इत्यादयः शब्दाः; तेषां स्थाने संस्कृताः शब्दाः साधारण-परिभाषाकोशे अपरिगणिता अपि संनिविष्टाः, यथा प्रतिबन्धः (शर्त), सर्वस्वम् (आस्तियां), स्वीकृतिः (मंजूरी), स्वत्वम् (हक़), परिपृच्छा (जाँच), ऋणशोधनाशक्तः (दिवालिया), पुरःप्रशंसनम् (सिपारिश), नियोजनम् (नौकरी), अर्घः मानं वा (दर), समयः (क़रार), कर्मान्तम् (कारखाना); हितम् (फायदा), अध्यर्थना ममत्वावेदनं वा (दावा), परिकल्पनं सज्जीकरणं वा (तैयार करना), वृद्धिः (व्याज) इत्यादयः। किंच, साधारणपरिभाषाकोशे ये शब्दाः संस्कृतभाषान्तर्गता इव भान्ति किन्तु वस्तुतः व्याकरणदृष्ट्या अशुद्धाः सन्ति, यथा अन्तर्कालीन (transitional), वयस्क (adult), अन्तर्राज्यिक (interstate), अन्तर्राष्ट्रीय (international) परन्तुक (proviso), वृत्तिक (professional), राजनैतिक (political) इत्यादयः; तेषां स्थाने क्रमेण संक्रमणकालीन, प्राप्तवयस्क, आन्ताराज्यिक, आन्ताराष्ट्रिक, पारन्तुक, वृत्तिसंबन्धि, राजनीतिक इत्यादयः संनिविष्टाः सन्ति।

यद्यपि अस्मिन् भाषान्तरे बहवः परिभाषिताः शब्दा यमर्थमभिसंधाय प्रयुक्तास्तस्मिन्नर्थे प्राचीनसंस्कृत-भाषाग्रन्थेषु नोपलभ्येरन् तथापि अस्मिन् संविधाने निर्देष्टुमिष्टा अर्थाः कल्पनाश्च नूतना विद्यन्ते इति नवीनं संकेतमभिप्रेत्य कृतस्तेषां प्रयोगो न दोषमावहेत् ।

अथ च, इदं भाषान्तरम् आङ्ग्लभाषायां विद्यमानस्य संविधानस्य शब्दशः वाक्यशः वाक्यखण्डक्रमशश्च कृतमिति, या हि प्रसिद्धानां संस्कृतग्रन्थानां प्रसिद्धा शब्दवाक्यक्रमनिवेशनरीतिः सात्र नोपलभ्येत । इत्यतः सुबहुपरिचयात् प्रागर्थबोधः क्लेशेनैव जायेत । कतिपयेषु स्थलेषु च बोधोऽपि न जायेत । ये हि आङ्ग्लसंविधान-चतुरास्ते तु प्रभवेरन् अस्यार्थग्रहणे यदि संस्कृतभाषाप्रवीणाः, इति विश्वसिमः ।

संसदः सभापतिना 'संस्कृतभाषान्तरसमित्या नियुक्तः एकः भाषान्तरकर्ता भाषान्तरं करोतु द्वौ वा कुरुतां संस्कृतभाषान्तरसमितिश्च तद् भाषान्तरं संस्कृत्य स्वीकुर्यात्' इत्येतादृशं कृतं नियममनुसृत्य संस्कृतभाषान्तर-समित्या समितेः सदस्यावेव द्वौ भाषान्तरकर्तारौ नियुक्तौ, संविधानपूर्वार्धस्य (अनुच्छेदाः १—२६३) कृते श्री० लक्ष्मणशास्त्री जोशीत्युपाह्वः, अनुसूचीसहितस्योत्तरार्धभागस्य (अनुच्छेदाः २६४—३९५) कृते श्री० मङ्गलदेवशास्त्री च । संविधानसंशोधनाधिनियमस्यापि भाषान्तरं श्री० लक्ष्मणशास्त्रिभिः कृतम् । ताभ्यां प्रणीतं भाषान्तरं संस्कृतभाषान्तरसमित्या दिनद्वाविंशतिपर्यन्तं कृतेऽधिवेशने पठित्वा स्वीकृतम् । बहुषु स्थलेषु समित्याः सर्वेषां सभासदानामैकमत्यमासीत् । क्वचित् नैकमत्यं दृष्टं तत्र बहूनां मतेनेदं भाषान्तरं पुनर्निरीक्ष्य संस्कृत्य च स्वीकृतमिति ।

**संस्कृतभाषान्तरसमितिः**

| | |
|---|---|
| १. म० म० पाण्डुरङ्ग वामन काणे, एम० ए०, एल्एल्० एम्०, मुम्बई | सभापतिः |
| २. तर्कतीर्थ लक्ष्मणशास्त्री जोशी, धर्मकोशस्य प्रधानसंपादकः, वाई | भाषान्तरकारः संस्कृतभाषान्तरसमितेरामन्त्रकश्च |
| ३. डॉ० मङ्गलदेवशास्त्री, एम्० ए०, डी० फिल्०, बनारस | भाषान्तरकार |
| ४. डॉ० सुनीतिकुमार चतर्जी, एम्० ए०, डी० लिट्०, (लंडन), कलकत्ता | सभासदः |
| ५. श्री के० बालसुब्रह्मण्यं अय्यर, बी० ए०, बी० एल्०, अॅडव्होकेट, मद्रास | ,, |
| ६. म० म० गिरिधरशर्मा चतुर्वेदी, डायरेक्टर संस्कृतस्टडीज्, हिन्दूयुनिव्हर्सिटी, बनारस | ,, |
| ७. डॉ० बाबूराम सक्सेना, एम्० ए०, डी० लिट्०, अलाहाबाद | ,, |
| ८. पण्डित राहुल सांकृत्यायन, मसूरी | ,, |
| ९. डॉ० रघुवीर, नागपूर | ,, |
| १०. श्री मुनिजिनविजयजी, डायरेक्टर भारतीय विद्याभवन, मुम्बई | ,, |
| ११. डॉ० कुन्हनराजा, मद्रास | ,, |

# भारतस्य संविधानम्

## प्रस्तावना

वयं, भारतस्य जनाः, भारतं सम्पूर्णप्रभुत्वसम्पन्नं, समाजवादिनं, सम्प्रदायनिरपेक्षं, लोकतन्त्रात्मकं गणराज्यं विधातुं, तस्य समस्तान् नागरिकांश्च

सामाजिकं, आर्थिकं, राजनीतिकं च न्यायं,
विचारस्य, अभिव्यक्तेः, आस्थायाः, धर्मस्य,
उपासनायाश्च स्वतन्त्रतां,
प्रतिष्ठायाः, अवसरस्य च समतां

प्रापयितुं;
तेषु सर्वेषु च

व्यक्तिगौरवस्य राष्ट्रस्य एकतायाः,
अखण्डतायाश्च सुनिश्चायिकां बन्धुतां

वर्धयितुं;
कृतदृढसङ्कल्पाः अस्यां अस्मदीयायां संविधानसभायां
अद्य, ख्रिस्तीये १९४९- तमे वर्षे नवम्बर-मासस्य २६- तमे दिने
(२००६- तमे विक्रमसंवत्सरे मार्गशीर्षे शुक्लपक्षे सप्तम्यां तिथौ)
एतेन इदं संविधानं अङ्गीकृतं, अधिनियमितं, आत्मार्पितं च कुर्महे।

# भारतस्य संविधानम्

## विषयसूची

अनुच्छेदः पृष्ठसंख्या

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|

भागः ४

## राज्यनीतेः निदेशकानि तत्त्वानि



भागः ४अ

## मूलकर्त्तव्यानि



भागः ५

## सङ्घः

### अध्यायः १—कार्यपालिका

#### राष्ट्रपतिः, उपराष्ट्रपतिश्च

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|



**संसदः अधिकारिणः**



**कार्य-सञ्चालनम्**



**सदस्यानां निरर्हता**



**संसदः, तस्याः सदस्यानां च शक्तयः, विशेषाधिकाराः, उन्मुक्तयश्च**



**विधानप्रक्रिया**

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|

अनुच्छेदः पृष्ठसंख्या



## अध्यायः ५—भारतस्य नियन्त्रकमहालेखापरीक्षकः



## भागः ६

## राज्यानि

## अध्यायः १—साधारणम्



## अध्यायः २—कार्यपालिका

### राज्यपालः

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|

**मन्त्रिपरिषत्**



**राज्यस्य महाधिवक्ता**



**शासनकार्यस्य सञ्चालनम्**



अध्यायः ३—राज्यस्य विधानमण्डलम्

**साधारणम्**



**विधानमण्डलस्य अधिकारिणः**

### अध्यायः ६—अधीनस्थाः न्यायालयाः



### भागः ७

## प्रथमानुसूचीस्थानि (ख) भागीयराज्यानि

अनुच्छेदः पृष्ठसंख्या

भागः ८

## सङ्घराज्यक्षेत्राणि



भागः ९

## प्रथमानुसूचीस्थ (घ) भागीयराज्यक्षेत्राणि तस्यां अनुसूच्यां न विनिर्दिष्टानि राज्यक्षेत्राणि च



भागः १०

## अनुसूचितक्षेत्राणि जनजातिक्षेत्राणि च



भागः ११

## सङ्घस्य राज्यानां च परस्परं सम्बन्धाः

21,249

अध्यायः १—विधायिनः सम्बन्धाः

**विधायिनीनां शक्तीनां वितरणम्**

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|



**प्रकीर्णाः वित्तीयोपबन्धाः**



## अध्यायः २—ऋणग्रहणम्



## अध्यायः ३—सम्पत्तिः, संविदः, अधिकाराः, दायित्वानि, आभाराः, वादाश्च

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|



## अध्यायः ४—सम्पत्तेः अधिकारः



## भागः १३

## भारतराज्यक्षेत्रस्य अभ्यन्तरे व्यापारः, वाणिज्यं, समागमश्च



## भागः १४

## सङ्घस्य राज्यानां च अधीनाः सेवाः

## अध्यायः १—सेवाः

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|
| ३३७. | आङ्ग्लभारतीयसमुदायस्य हिताय शिक्षणानुदानार्थं विशेषोपबन्धाः | १२१ |
| ३३८. | अनुसूचितजात्यनुसूचितजनजातिप्रभृतीनां कृते विशेषाधिकारी | १२१ |
| ३३९. | अनुसूचितक्षेत्राणां प्रशासने तथा अनुसूचितजनजातीनां कल्याणस्य विषये सङ्घस्य नियन्त्रणम् | १२२ |
| ३४०. | अप्रगतवर्गाणां दशानां अन्वेषणार्थं आयोगस्य नियुक्तिः | १२२ |
| ३४१. | अनुसूचिताः जातयः | १२२ |
| ३४२. | अनुसूचिताः जनजातयः | १२३ |

भागः १७

## राजभाषा

### अध्यायः १—सङ्घस्य भाषा



### अध्यायः २—प्रादेशिकभाषाः



### अध्यायः ३—उच्चतमन्यायालयस्य उच्चन्यायालयादीनां च भाषा



### अध्यायः ४—विशेषनिदेशाः



भागः १८

## आपातीयाः उपबन्धाः

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|
| ३५५. | बाह्याक्रमणात्, आभ्यन्तर्याः अशान्तेश्च, राज्यानां संरक्षणस्य सम्बन्धे सङ्घस्य कर्तव्यता | १३० |
| ३५६. | राज्येषु सांविधानिकतन्त्रस्य विफलतादशायां उपबन्धाः | १३० |
| ३५७. | ३५६-तमानुच्छेदस्य अधीनं कृतायाः उद्घोषणायाः अधीनं विधायिनीनां शक्तीनां प्रयोगः | १३२ |
| ३५८. | आपातकाले १९-तमानुच्छेदस्य उपबन्धानां निलम्बनम् | १३३ |
| ३५९. | आपातकाले तृतीयभागेन प्रदत्ताधिकाराणां प्रवर्तनस्य निलम्बनम् | १३४ |
| ३६०. | वित्तीयस्यापातस्य विषये उपबन्धाः | १३५ |

## भागः १९

## प्रकीर्णकम्

| | | |
|---|---|---|
| ३६१. | राष्ट्रपतेः, राज्यपालानां, राजप्रमुखानां च संरक्षणम् | १३७ |
| ३६१अ. | संसदः राज्यानां विधानमण्डलानां च कार्यप्रवृत्तीनां प्रकाशनस्य संरक्षणम् | १३७ |
| ३६२. | [निरस्तः] | १३८ |
| ३६३. | कतिपयसन्धिसमयादिभ्यः उद्भूतेषु विवादेषु न्यायालयानां हस्तक्षेपस्य निषेधः | १३८ |
| ३६३अ. | देशीयराज्यानां शासकेभ्यः प्रदत्तायाः मान्यतायाः समाप्तिः, तेषां निजकोशानां समापनं च | १३८ |
| ३६४. | महावेलापत्तनानां विमानक्षेत्राणां च कृते विशेषोपबन्धाः | १३८ |
| ३६५. | सङ्घेन दत्तानां निदेशानां अनुवर्तने प्रभावित्वापादने वा असफलतायाः प्रभावः | १३९ |
| ३६६. | परिभाषाः | १३९ |
| ३६७. | निर्वचनम् | १४२ |

## भागः २०

## संविधानस्य संशोधनम्

| | | |
|---|---|---|
| ३६८. | संविधानस्य संशोधनाय संसदः शक्तिः, तदर्थं प्रक्रिया च | १४४ |

## भागः २१

## अस्थायिनः, सङ्क्रमणकालिकाः, विशेषाश्च उपबन्धाः

| | | |
|---|---|---|
| ३६९. | राज्यसूच्याः केषांचिद् विषयाणां सम्बन्धे ते विषयाः समवर्तिसूच्याः इव इति विधिनिर्माणस्य संसदः अस्थायिनी शक्तिः | १४६ |
| ३७०. | जम्मूकश्मीरराज्यस्य सम्बन्धे अस्थायिनः उपबन्धाः | १४६ |
| ३७१. | महाराष्ट्रराज्यस्य, गुजरातराज्यस्य च सम्बन्धे विशेषोपबन्धाः | १४७ |
| ३७१अ. | नागालैंडराज्यस्य सम्बन्धे विशेषोपबन्धाः | १४८ |
| ३७१आ. | असमराज्यस्य सम्बन्धे विशेषोपबन्धाः | १५१ |
| ३७१इ. | मणिपुरराज्यस्य सम्बन्धे विशेषोपबन्धाः | १५१ |
| ३७१ई. | आन्ध्रप्रदेशराज्यस्य सम्बन्धे विशेषोपबन्धाः | १५१ |
| ३७१उ. | आन्ध्रप्रदेशे केन्द्रीयविश्वविद्यालयस्य स्थापना | १५४ |
| ३७१ऊ. | सिक्किमराज्यस्य सम्बन्धे विशेषोपबन्धाः | १५४ |

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|



## भागः २२

## संक्षिप्तं नाम, प्रारम्भः, निरसनानि च

पृष्ठसंख्या

# भारतस्य संविधानम्

**प्रस्तावना**

**वयं, भारतस्य जनाः**, भारतं [1][**सम्पूर्णप्रभुत्वसम्पन्नं, समाजवादिनं, सम्प्रदाय-निरपेक्षं, लोकतन्त्रात्मकं गणराज्यं**] विधातुं
तस्य समस्तान् नागरिकांश्च
सामाजिकं, आर्थिकं, राजनीतिकं च **न्यायं**;
विचारस्य, अभिव्यक्तेः, आस्थायाः,
धर्मस्य उपासनायाश्च **स्वतन्त्रतां**;
प्रतिष्ठायाः, अवसरस्य च **समतां**
प्रापयितुं;
तेषु सर्वेषु च
व्यक्तिगौरवस्य [2][राष्ट्रस्य एकतायाः,
अखण्डतायाश्च] सुनिश्चायिकां **बन्धुतां**
वर्धयितुं;
कृतदृढसङ्कल्पाः **अस्यां अस्मदीयायां संविधानसभायां** अद्य, खिस्तीये १९४९-तमे वर्षे नवम्बर-मासस्य २६-तमे दिने (२००६-तमे विक्रमसंवत्सरे मार्गशीर्षे शुक्लपक्षे सप्तम्यां तिथौ) **एतेन इदं संविधानं अङ्गीकृतं, अधिनियमितं, आत्मार्पितं च कुर्महे।**

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः १९७६ इत्यस्य २-अनुभागेन "सम्पूर्ण प्रभुत्व-सम्पन्नं लोकतन्त्रात्मकं गणराज्यं" इति एतेभ्यः शब्देभ्यः प्रति एते शब्दाः संनिवेशिताः।

२. उपर्युक्तस्य अधिनियमस्य उक्तेन अनुभागेन "राष्ट्रस्य एकतायाः" इति एताभ्यां शब्दाभ्यां प्रति एते शब्दाः संनिवेशिताः।

## भागः १

## सङ्घः, तस्य राज्यक्षेत्रं च

१. (१) भारतं, अर्थात् इण्डिया, राज्यानां सङ्घः भवेत् । **सङ्घस्य नाम, राज्यक्षेत्रं च ।**

[1][(२) राज्यानि, तेषां राज्यक्षेत्राणि च तथा भवेयुः यथा प्रथमानुसूच्यां विनिर्दिष्टानि ।]

(३) भारतस्य राज्यक्षेत्रे—

(क) राज्यानां राज्यक्षेत्राणि;

[2][(ख) प्रमथानुसूच्यां विनिर्दिष्टानि सङ्घस्य राज्यक्षेत्राणि; तथा च]

(ग) तादृशानि अन्यानि राज्यक्षेत्राणि यादृशानि समर्जितानि स्युः,

समाविष्टानि भवेयुः ।

२. संसद् विधिना तादृशैः निबन्धनैः प्रतिबन्धनैश्च नूतनानि राज्यानि प्रवेशयितुं स्थापयितुं वा क्षमते यादृशानि सा उचितानि मन्येत । **नूतनराज्यानां प्रवेशः, स्थापना वा ।**

२अ. [3][सिक्किमस्य सङ्घेन सह संयोजनम्] संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य पञ्चमेन अनुभागेन २६-४-१९७५ दिनाङ्कात् निरसितः ।

३. संसद् विधिना— **नूतनानां राज्यानां निर्माणं; विद्यमानानां राज्यानां क्षेत्राणां, सीम्नां, नाम्नां वा परिवर्तनम् ।**

(क) कस्माद् अपि राज्यात् तस्य राज्यक्षेत्रं पृथक् कृत्य,अथवा द्वे राज्ये अधिकानि वा राज्यानि, राज्यानां भागान् वा संयोज्य, अथवा कस्यापि राज्यस्य भागेन किमपि राज्यक्षेत्रं संयोज्य, नूतनं राज्यं निर्मातुम्;

(ख) कस्यापि राज्यस्य क्षेत्रं वर्धयितुम्;
(ग) कस्यापि राज्यस्य क्षेत्रं ह्रासयितुम्;
(घ) कस्यापि राज्यस्य सीमाः परिवर्तयितुम्;
(ङ) कस्यापि राज्यस्य नाम परिवर्तयितुम्

क्षमते—

[4][परन्तु एतत् प्रयोजनाय किमपि विधेयकं संसदः कतरस्मिन् अपि सदने तावत् न पुरःस्थाप्येत यावद्

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २-अनुभागेन (२) खण्डात् प्रति एषः खण्डः संनिवेशितः ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन (ख) उपखण्डात् प्रति एषः उपखण्डः संनिवेशितः ।

३. संविधानस्य (पञ्चत्रिंशत्तमं संशोधनं) अधिनियमः, १९७४ इत्यस्य २-अनुभागेन १-३-१९७५ दिनाङ्कात् अन्तर्वेशितः ।

४. संविधानस्य (पञ्चमं संशोधनं) अधिनियमः, १९५५ इत्यस्य २-अनुभागेन पारन्तुकात् प्रति एषः पारन्तुकः संनिवेशितः ।

राष्ट्रपतेः पुरः प्रशंसनं न लभ्यते, यावत् च यत्र विधेयकान्तर्निविष्टायाः प्रस्थापनाया प्रभावः [1] * * * कस्यापि राज्यस्य, राज्यानां वा क्षेत्रस्य, सीम्नां, नाम्नः वा विषये भवति तत्र राष्ट्रपतिना तद्राज्यस्य विधानमण्डलाय तद्विषये विनिर्दिष्टकालावधेः अभ्यन्तरं, अथवा तस्मात् परं, यावत् तेन अनुज्ञप्तं भवेत् तावत् कालाभ्यन्तरं स्वाभिमताभिव्यक्तये, निर्देशितं न भवेत्, तथा च विनिर्दिष्टः कालावधिः, तत्परं अनुज्ञप्तकालावधिः वा समाप्तः न भवेत् ।]

[2][**स्पष्टीकरणम् १**—अस्मिन् अनुच्छेदे (क) खण्डात् (ङ) खण्डान्तेषु भागेषु "राज्य" शब्दः सङ्घस्य राज्यक्षेत्रं अन्तर्भावयति, किन्तु पारन्तुके "राज्य" शब्दः सङ्घस्य राज्यक्षेत्रं न अन्तर्भावयति ।

**स्पष्टीकरणम् २**—(क) खण्डेन संसदे प्रदत्तः अधिकारः कस्यापि राज्यस्य भागं वा, सङ्घस्य राज्यक्षेत्रस्य भागं वा, अन्यस्य राज्यस्य, सङ्घस्य वा राज्यक्षेत्रस्य भागेन संयोज्य नूतनराज्यनिर्माणस्य, नूतनसङ्घराज्यक्षेत्र-निर्माणस्य वा अधिकारं अन्तर्भावयति ।]

**प्रथमानुसूचीं चतुर्थानुसूचीं च संशोधयितुं, अनुपूरकप्रासङ्गिकानुषङ्गिकविषयेषु उपबन्धयितुं च द्वितीय-तृतीयानुच्छेदयोः अधीनं प्रणीताः विधयः ।**

४. (१) द्वितीये, तृतीये वा अनुच्छेदे निर्दिष्टः कोपि विधिः प्रथमानुसूच्याः चतुर्थानुसूच्याश्च संशोधनार्थं तादृशान् उपबन्धान् अन्तर्वेशयेत् यादृशाः तस्य विधेः उपबन्धान् क्रियान्वितान् कर्तुं आवश्यकाः स्युः ; तथाच तादृशान् अनुपूरकान्, आनुषङ्गिकान्, पारिणामिकान् अपि उपबन्धान् (तादृशेन विधिना प्रभावितस्य राज्यस्य विधानमण्डले वा राज्यानां विधानमण्डलेषु वा संसदि वा प्रतिनिधित्वसम्बद्धैः उपबन्धैः सहितान्) अन्तर्वेशयेत्, यादृशान् संसद् आवश्यकान् मन्येत ।

(२) पूर्वोक्तसदृशः कोपि विधिः ३६८-तमानुच्छेदस्य प्रयोजनानां कृते अस्य संविधानस्य संशोधनं इति न मन्येत ।

---

१. 'प्रथमसूच्याः "क" भागे "ख" भागे वा उल्लिखितस्य' इति एतत् संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च लोपितम् ।

२. संविधानस्य (अष्टमं संशोधनं) अधिनियमः, १९६६ इत्यस्य २-अनुभागेन एते स्पष्टीकरणे अन्तर्वेशिते ।

भागः २

# नागरिकता

५. अस्य संविधानस्य प्रारम्भे सः प्रत्येकं जनः यस्य भारतस्य राज्यक्षेत्रे अधिवासः विद्यते, तथा च— **संविधानस्य प्रारम्भे नागरिकता।**

(क) यस्य भारतस्य राज्यक्षेत्रे जन्म अभूत्; अथवा

(ख) यस्य मातापित्रोः अन्यतरस्य भारतस्य राज्यक्षेत्रे जन्म अभूत् ; अथवा

(ग) यः तादृशात् प्रारम्भात् अव्यवहितपूर्वं पञ्चवर्षेभ्यः अन्यूनं भारतस्य राज्यक्षेत्रे सामान्यतः निवसन् वर्तते,

भारतस्य नागरिकः भवेत् ।

६. पञ्चमानुच्छेदे यत् किमपि सत्यपि यः पाकिस्ताने इदानीं अन्तर्भावितात् राज्यक्षेत्रात् भारतस्य राज्यक्षेत्रं प्रति प्रव्रज्य आगतः अस्ति, स जनः अस्य संविधानस्य प्रारम्भे भारतस्य नागरिकः इति मन्येत यदि— **पाकिस्तानतः प्रव्रज्य भारतं आगतानां केषांचित् जनानां नागरिकताधिकाराः।**

(क) सः अथवा तस्य मातुः पितुः अन्यतरः, पितामह्याः पितामहस्य वा अन्यतरः, मातामह्याः मातामहस्य वा अन्यतरः, १९३५-वर्षस्य भारतशासनाधिनियमेन (यथामूलाधिनियमितरूपेण) परिभाषिते भारते अजनिष्ट, तथा च

(ख) (१) यदि सः जनः तादृशः अस्ति यः १९४८-वर्षस्य जुलायिमासस्य एकोनविंशात् दिनात् पूर्वं एवं प्रव्रजितः अस्ति, तर्हि यदि सः प्रव्रजनदिनात् आरभ्य भारतस्य राज्यक्षेत्रे सामान्यतः निवसन् वर्तते; अथवा

(२) यदि स जनः तादृशः अस्ति यः १९४८-वर्षस्य जुलायिमासस्य एकोनविंशतितमे दिने, ततः परं वा एवं प्रव्रजितः अस्ति, तर्हि यदि भारतीयाधिनिवेशशासनेन तदर्थं नियुक्तेन अधिकारिणा, तादृश अधिकारिणे अस्य संविधानस्य प्रारम्भात् पूर्वं तत् शासनेन विहिते प्ररूपे विहितया रीत्या च तदर्थं तेन कृतावेदनानन्तरं भारतस्य नागरिकः इति पञ्जीबद्धः अस्ति—

परन्तु कोपि जनः एवं पञ्जीबद्धः न भवेत् यदि सः स्वीयावेदनदिनात् अव्यवहितपूर्वं न्यूनात् न्यूनं षण्मासान् भारतस्य राज्यक्षेत्रे निवसन् न वर्तते ।

७. पञ्चम-षष्ठानुच्छेदयोः यत् किमपि सत्यपि १९४७-वर्षस्य मार्चमासस्य प्रथमात् दिनात् परं भारतस्य राज्यक्षेत्रात् पाकिस्ताने इदानीं अन्तर्भावितं राज्यक्षेत्रं प्रव्रजितः यः जनः अस्ति, सः भारतस्य नागरिकः न मन्येत— **पाकिस्तानं प्रव्रजितानां केषांचित् नागरिकताधिकाराः।**

परन्तु एतदनुच्छेदगतं किमपि तं जनं न विषयीकुर्यात् यः पाकिस्ताने इदानीं अन्तर्भावितं राज्यक्षेत्रं एवं प्रव्रजितः भूत्वा कस्यापि विधेः प्राधिकारेण, तदधीने वा दत्तायाः अनुज्ञायाः अधीनं पुनर्निवासार्थं, स्थायिप्रत्यावर्तनार्थं वा भारतस्य राज्यक्षेत्रं प्रतिनिवृत्तः अस्ति; किञ्च एतादृशः प्रत्येकं जनः षष्ठानुच्छेदगतस्य (ख) खण्डस्य प्रयोजनानां कृते १९४८-वर्षस्य जुलायिमासस्य एकोनविंशात् दिनात् परं भारतस्य राज्यक्षेत्रं प्रव्रजितः अस्ति इति मन्येत ।

८. पञ्चमानुच्छेदे यत् किमपि सत्यपि यः कोपि जनः, यस्य मातुः पितुः अन्यतरः; पितामह्याः, पितामहस्य अन्यतरः, मातामह्याः मातामहस्य अन्यतरः वा १९३५-वर्षस्य भारतशासनाधिनियमेन (यथामूलाधिनियमितरूपेण) परिभाषिते भारते अजनिष्ट, यश्च एवं परिभाषितात् भारतात् बहिः कस्मिन् अपि देशे सामान्यतः निवसन् अस्ति **भारतात् बहिः निवसतां भारतीयसमुद्भववत केषांचित् जनानां नागरिकताधिकार :।**

सः जनः भारतस्य नागरिकः इति मन्येत्, यदि अस्य संविधानस्य प्रारम्भात् पूर्वं, परं वा भारताधिनिवेशस्य शासनेन, भारतस्य शासनेन वा, विहिते प्ररूपे विहितया रीत्या च, तेन तदानीं अध्युषिते देशे विद्यमानाय भारतस्य राजनयिकाय वाणिज्यदूतकाय वा प्रतिनिधये नागरिकतावाप्त्यर्थं तेन आवेदने कृते सति, तादृशेन राजनयिकेन, वाणिज्यदूतकेन वा प्रतिनिधिना सः भारतस्य नागरिकः इति पञ्जीबद्धः अस्ति ।

**यैः स्वेच्छयार्जिता वैदेशिकनागरिकता, न तेषां जनानां नागरिकता ।**

९. यदि केनापि जनेन स्वेच्छया वैदेशिकनागरिकता अर्जिता अस्ति, तर्हि सः पञ्चमानुच्छेदस्य आधारेण भारतस्य नागरिकः न भवेत्; न च षष्ठानुच्छेदस्य सप्तमानुच्छेदस्य वा आधारेण भारतस्य नागरिकः इति मन्येत ।

**नागरिकताधिकाराणां अनुवृत्तिः ।**

१०. यः कोपि जनः एतस्य भागस्य पूर्वगामिनां उपबन्धानां अन्यतमस्य कस्यापि अधीनं नागरिकः अस्ति तथा वा मन्यते सः संसदा यः कोपि विधिः प्रणीतः भवेत् तस्य उपबन्धानां अधीनं भारतस्य नागरिकतया अनुवर्तेत ।

**संसदा विधिना नागरिकताधिकार-विनियमनम् ।**

११. एतस्य भागस्य पूर्वगामिनां उपबन्धानां किमपि नागरिकतार्जन-समापने, नागरिकतासम्बद्धान् अन्यान् सर्वान् विषयान् च उद्दिश्य कस्यापि उपबन्धस्य निर्माणे संसदः शक्तिं न अल्पीकुर्यात् ।

भागः ३

# मूलाधिकाराः

## साधारणम्

१२. अस्मिन् भागे, यावत् सन्दर्भेण अन्यथा अपेक्षितं न भवेत् तावत्, "राज्य" इति शब्दः भारतस्य शासनं, संसदं च, प्रत्येकं राज्यानां शासनं, विधानमण्डलं च, तथा भारतस्य राज्यक्षेत्राभ्यन्तरान् भारतस्य नियन्त्रणाधीनान् वा, सर्वान् स्थानीयान् अन्यान् च प्राधिकारिणः अन्तर्भावयति । **परिभाषा ।**

१३. (१) अस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं भारतस्य राज्यक्षेत्रे प्रवृत्ताः सर्वे विधयः तावन्मात्रं शून्याः भवेयुः यावत् ते अस्य भागस्य उपबन्धैः असङ्गताः भवेयुः । **मूलाधिकारैः असङ्गताः तेषां अल्पीकराः वा विधयः ।**

(२) राज्यं तादृशं कमपि विधिं न प्रणयेत्, यः एतेन भागेन प्रदत्तान् अधिकारान्, अपहरति, अल्पीकरोति वा; अथ च अस्य खण्डस्य उल्लङ्घनेन प्रणीतः विधिः उल्लङ्घनमात्रां यावत् शून्यः भवेत् ।

(३) एतस्मिन् अनुच्छेदे यावत् सन्दर्भेण अन्यथा अपेक्षितं न भवति तावत्—

(क) "विधि" शब्दः भारतस्य राज्यक्षेत्रे विधिशक्तिधरं यं कमपि अध्यादेशं, आदेशं, उपविधिं, नियमं, विनियमं, अधिसूचनां, रूढिं, प्रथां च अन्तर्भावयति;

(ख) "प्रवृत्ताः सर्वे विधयः" इति शब्दसमूहः केनापि विधानमण्डलेन, अन्येन च क्षमेण प्राधिकारिणा भारतस्य राज्यक्षेत्रे, अस्य संविधानस्य प्रारम्भात् पूर्वं पारितान्, प्रणीतान् वा, पूर्वं अनिरस्तान् च विधीन् अपि अन्तर्भावयति, यद्यपि तादृशः कोपि विधिः, तस्य कोपि भागो वा पूर्णतया, विशिष्टेषु क्षेत्रेषु वा; तदा प्रवृत्तः न भवेत् ।

[1][(४) एतद् अनुच्छेदगतं किमपि ३६८-तमानुच्छेदाधीनं अस्य संविधानस्य किमपि संशोधनं न विषयीकुर्यात् ।]

## समतायाः अधिकारः

१४. भारतस्य राज्यक्षेत्रे राज्यं कमपि जनं विधिसमक्षे समतायाः विधीनां समसंरक्षणात् वा वञ्चितं न कुर्यात् । **विधिसमक्षे समता ।**

१५. (१) राज्यं कमपि नागरिकं प्रति केवलं धर्मस्य, मूलवंशस्य, जातेः, लिङ्गस्य, जन्मस्थानस्य वा, एतेषां अन्यतमस्य वा कस्यापि आधारतः विभेदं न कुर्यात् । **धर्मस्य, मूलवंशस्य, जातेः लिङ्गस्य, जन्मस्थानस्य वा, आधारतः विभेदस्य प्रतिषेधः ।**

(२) कोपि नागरिकः केवलं धर्मस्य, मूलवंशस्य, जातेः, लिङ्गस्य, जन्मस्थानस्य वा, एतेषां अन्यतमस्य वा कस्यापि आधारतः—

(क) आपणेषु, सार्वजनिकभोजनालयेषु, विश्रामालयेषु, सार्वजनिकमनोरञ्जनस्थानेषु च प्रवेशविषये;

(ख) राज्यनिधितः पूर्णतः अंशतः वा पोषितानां साधारणजनतायाः उपयोगाय समर्पितानां कूपानां, तडागानां, स्नानतीर्थानां, मार्गाणां सार्वजनिकसमागमस्थलानां वा उपयोगस्य विषये,

निर्योग्यतायाः, दायित्वस्य, निर्बन्धनस्य, प्रतिबन्धनस्य वा अधीनः न भवेत् ।

(३) एतदनुच्छेदगतं किमपि स्त्रीणां, बालानां च कृते कस्यापि विशेषोपबन्धस्य करणात् राज्यं न निवारयेत् ।

---

१. संविधानस्य (चतुर्विंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य २-अनुभागेन एषः खण्डः संनिवेशितः ।

[1][(४) एतदनुच्छेदगतं वा, २९-तमानुच्छेदस्य (२) खण्डगतं वा किमपि सामाजिकदृष्ट्या, शैक्षणिक-दृष्ट्या वा, अप्रगतनागरिकाणां केषाञ्चित् वर्गाणां उन्नतिकृते, अनुसूचितजातीनां कृते, अनुसूचितजनजातीनां कृते वा, कस्यापि विशेषोपबन्धस्य करणात् राज्यं न निवारयेत् ।]

**लोकनियोजन-विषयेषु अवसर-समता ।**

१६. (१) राज्याधीने कस्मिन्नपि पदे नियोजनस्य, नियुक्तेः वा सम्बन्धिषु विषयेषु सर्वेषां नागरिकाणां कृते अवसरस्य समता भवेत् ।

(२) केवलं धर्मस्य, मूलवंशस्य, जातेः, लिङ्गस्य, उद्भवस्य, जन्मस्थानस्य, निवासस्य वा, एतेषां अन्यतमस्य कस्यापि वा आधारतः राज्याधीनस्य नियोजनस्य पदस्य वा विषये कस्यापि नागरिकस्य अपात्रता न भवेत्, न वा तं प्रति विभेदः करणीयः भवेत् ।

(३) एतदनुच्छेदगतं किमपि [2][कस्यापि राज्यस्य, सङ्घराज्यक्षेत्रस्य वा शासनस्य, अथवा एतेषां अन्यतरस्य राज्यक्षेत्राभ्यन्तर्गतस्य कस्यापि स्थानीयस्य अन्यस्य वा प्राधिकारिणः अधीने] कस्मिन् अपि पदे नियोजनस्य नियुक्तेः वा, प्रकारस्य प्रकाराणां वा सम्बन्धे एतादृशस्य नियोजनस्य, एतादृश्याः नियुक्तेः वा पूर्वं, तस्मिन् राज्ये, सङ्घस्य राज्यक्षेत्रे वा निवासस्य अपेक्षां विदधानस्य कस्यापि विधेः प्रणयनात् संसदं न निवारयेत् ।

(४) एतदनुच्छेदगतं किमपि राज्याधीनासु सेवासु, यस्य कस्यापि अप्रगतस्य नागरिकवर्गस्य प्रतिनिधित्वं, सम्बन्धिराज्यमत्या, अपर्याप्तं अस्ति तस्य कृते नियुक्तीनां पदानां वा आरक्षणार्थं कस्यापि उपबन्धस्य करणात् राज्यं न निवारयेत् ।

(५) एतदनुच्छेदगतं किमपि कस्यापि तस्य विधेः प्रवृत्तौ प्रभावं न आपादयेत् यः एवं उपबन्धयति यत् कस्यापि धर्मविशेषस्य अनुयायी, सम्प्रदायविशेषेण सम्बद्धः एव वा जनः, कस्याः अपि धार्मिक्याः साम्प्रदायिक्याः वा संस्थायाः कार्यसम्बन्धेन पदधारी तत्शासिनिकायस्य सदस्यः वा भवेत् ।

**अस्पृश्यतायाः निराकरणम् ।**

१७. "अस्पृश्यता" समाप्यते; तस्याश्च केनापि रूपेण आचरणं निषिध्यते । अस्पृश्यतया उत्पद्यमानायाः कस्याः अपि निर्योग्यतायाः प्रवर्तनं विधेः अनुसारेण दण्डनीयः अपराधः भवे ।

**सम्मानपदानां निराकरणम् ।**

१८. (१) सेनाविषयकं, विद्याविषयकं वा वैशिष्ट्यं व्यतिरिच्य किमपि सम्मानपदं राज्येन न प्रदीयेत ।

(२) कोपि भारतस्य नागरिकः कस्मादपि वैदेशिकराज्यात् किमपि सम्मानपदं न स्वीकुर्यात् ।

(३) यः कोपि जनः भारतस्य नागरिकः न अस्ति, सः यावत् राज्याधीनं लाभस्य वा विश्वासस्य वा पदं धारयति तावत्, राष्ट्रपतेः सम्मतिं विना कस्मादपि वैदेशिकराज्यात् किमपि सम्मानपदं न स्वीकुर्यात् ।

(४) लाभस्य विश्वासस्य वा किमपि पदं धारयमाणः कोपि जनः वैदेशिकराज्यात्, तदधीनं वा केनापि रूपेण किमपि उपायनं, उपलब्धिं, पदं वा राष्ट्रपतेः सम्मतिं विना न स्वीकुर्यात् ।

## स्वातन्त्र्याधिकारः

**वाक्स्वातन्त्र्यादि-विषयकाणां केषांचित् अधिकाराणां संरक्षणम् ।**

१९. (१) सर्वेषां नागरिकाणां—

(क) वाक्-स्वातन्त्र्ये, अभिव्यक्तिस्वातन्त्र्ये च;
(ख) शान्तिपूर्वकं, निरायुधं च सम्मेलने;
(ग) सङ्गमानां, सङ्घानां च निर्माणे;

---

१. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य २-अनुभागेन एषः खण्डः परिवर्धितः ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन "प्रथमानुसूच्यामुल्लिखितस्य कस्यापि राज्यस्य अथवा तद्राज्यक्षेत्रे कस्यापि स्थानीयस्यान्यस्य वा प्राधिकारिणोधीने" इति एतस्मात् प्रति एतत् संनिवेशितम् ।

(घ) भारतस्य राज्यक्षेत्रे सर्वत्र अबाधं सञ्चरणे;

(ङ) भारतस्य राज्यक्षेत्रस्य कस्मिंश्चिदपि भागे निवासे, स्थिरवासे च; [1][तथा]

[2][(च) * * * * ]

(छ) कस्याः अपि वृत्तेः, उपजीविकायाः, व्यापारस्य, कार्यस्य वा अनुवर्त्तने, अधिकारः भवेत्।

[3][(२) (१) खण्डीय (क) उपखण्डगतं किमपि उक्तोपखण्डेन प्रदत्तस्य अधिकारस्य प्रयोगे [4][भारतस्य प्रभुतायाः अखण्डतायाश्च] राज्यस्य सुरक्षायाः, वैदेशिकराज्यैः सह मैत्रीपूर्णसम्बन्धानां, लोकव्यवस्थायाः, शिष्टाचारस्य, सदाचारस्य वा हितानां अर्थे; अथवा न्यायालयावमानस्य, मानहानेः, अपराधोद्दीपनस्य वा सम्बन्धे, कोपि विद्यमानः विधिः यावत् युक्तियुक्तानि, निर्बन्धनानि अधिरोपयति, तावत् एतस्य प्रवर्तनं न प्रभावयेत् न वा एतादृशानि निर्बन्धनानि अधिरोपयतः कस्यापि विधेः प्रणयनात् राज्यं निवारयेत्।]

(३) उक्तखण्डस्य (ख) उपखण्डगतं किमपि उक्तोपखण्डेन प्रदत्तानां अधिकाराणां प्रयोगे [4][भारतस्य प्रभुतायाः अखण्डतायाश्च] लोकव्यवस्थायाः वा हितानां अर्थे कोपि विद्यमानः विधिः, यावत् युक्तियुक्तानि निर्बन्धनानि अधिरोपयति, तावत् एतस्य प्रवर्तनं न प्रभावयेत्, न वा एतादृशानि निर्बन्धनानि अधिरोपयतः कस्यापि विधेः प्रणयनात् राज्यं निवारयेत्।

(४) उक्तखण्डस्य (ग) उपखण्डगतं किमपि उक्तोपखण्डेन प्रदत्तानां अधिकाराणां प्रयोगे, [4][भारतस्य प्रभुतायाः अखण्डतायाश्च] लोकव्यवस्थायाः सदाचारस्य वा हितानां अर्थे कोपि विद्यमानः विधिः यावत् युक्तियुक्तानि निर्बन्धनानि अधिरोपयति तावत्, एतस्य प्रवर्तनं न प्रभावयेत्, न वा एतादृशानि निर्बन्धनानि अधिरोपयतः कस्यापि विधेः प्रणयनात् राज्यं निवारयेत्।

(५) [5][उक्तखण्डस्य (घ) उपखण्डे, (ङ) उपखण्डे वा] गतं किमपि उक्तोपखण्डाभ्यां प्रदत्तानां अधिकाराणां प्रयोगे साधारणजनतायाः हितानां अर्थे, कस्यापि अनुसूचितायाः जनजातेः हितानां संरक्षणाय कोपि विद्यमानः विधिः यावत् युक्तियुक्तानि निर्बन्धनानि अधिरोपयति, तावत् एतस्य प्रवर्तनं न प्रभावयेत्; न वा एतादृशानि निर्बन्धनानि अधिरोपयतः कस्यापि विधेः प्रणयनात् राज्यं निवारयेत्।

(६) उक्तखण्डस्य (छ) उपखण्डगतं किमपि उक्तोपखण्डेन प्रदत्तानां अधिकाराणां प्रयोगे साधारणजनतायाः हितानां अर्थे, कोपि विद्यमानः विधिः यावत् युक्तियुक्तानि निर्बन्धनानि अधिरोपयति तावत् एतस्य प्रवर्तनं न प्रभावयेत्, न वा एतादृशानि निर्बन्धनानि अधिरोपयतः कस्यापि विधेः प्रणयनात् राज्यं निवारयेत्;

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २-अनुभागेन एषः शब्दः अन्तर्वेशितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन (च) उपखण्डः लोपितः (२०-६-१९७९ दिनाङ्कात् प्रवर्त्तमानप्रभावेण)।

३. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य ३-अनुभागेन द्वितीयखण्डात् प्रति एषः खण्डः भूतलक्षिप्रभावेण संनिवेशितः।

४. संविधानस्य (षोडशं संशोधनं) अधिनियमः १९६३ इत्यस्य २-अनुभागेन एते शब्दाः संनिवेशिताः।

५. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २-अनुभागेन "उक्तखण्डीय (घ) (ङ) (च) उपखण्ड"—इत्येतत् प्रति एतत् संनिवेशितम् (२०-६-१९७९ दिनाङ्कात् प्रवर्त्तमानप्रभावेण)।

तथा च विशिष्टतया [1][उक्तोपखण्डगतं किमपि—

(प्रथमः) कस्याः अपि वृत्तेः, उपजीविकायाः, व्यापारस्य, कार्यस्य वा करणे आवश्यकीः वृत्ति-सम्बन्धिनीः शिल्पसम्बन्धिनीः वा अर्हताः,

(द्वितीयः) राज्येन, राज्यस्य स्वामित्वे नियन्त्रणे वा स्थितेन केनापि निगमेन, नागरिकाणां पूर्णतः अंशतः वा अपवर्जनं कृत्वा, अन्यथा वा, कस्यापि व्यापारस्य, कार्यस्य उद्योगस्य, सेवायाः वा अनुसरणं,

कोपि विद्यमानः विधिः यावत् विषयीकरोति तावत् एतस्य प्रवर्तनं न प्रभावयेत् न वा एतद्विषयकस्य कस्यापि विधेः प्रणयनात् राज्यं निवारयेत् ।]

**अपराधानां हेतोः दोषसिद्धेः सम्बन्धे संरक्षणम् ।**

२०. (१) कोपि जनः अपराधत्वेन आरोपितायाः क्रियायाः करणसमये प्रवृत्तस्य विधेः अतिक्रमणं अन्तरेण केनापि अपराधेन सिद्धदोषः न क्रियेत, न वा तावत्याः शास्तेः अधिकतरायाः शास्त्याः भागी भवेत्, यावती तदपराधस्य करणस्य समये प्रवृत्तस्य विधेः अधीनं अधिरोपिता भवेत् ।

(२) कोपि जनः एकस्य एव अपराधस्य कृते एकवारात् अधिकं अभियोजितः दण्डितश्च न भवेत् ।

(३) केनापि अपराधेन अभियुक्तः कोपि जनः स्वात्मनः विरुद्धं साक्षित्वेन बलात् प्रवर्तितः न भवेत् ।

**प्राणानां दैहिक-स्वतन्त्रतायाश्च संरक्षणम् ।**

२१. कोपि जनः स्वस्य प्राणेभ्यः, दैहिकस्वतन्त्रतायाः वा, विधिना स्थापितायाः प्रक्रियायाः अनुसारेण एव वियोजितः भवेत्, नान्यथा ।

**अवस्थाविशेषेषु बन्दीकरणात्, निरोधात् च संरक्षणम् ।**

[2]२२. (१) यः जनः बन्दीकृतः अस्ति सः एतादृशस्य बन्दीकरणस्य कारणानि यथाशक्यं शीघ्रं न चेद् अवबोधितः, अभिरक्षायां निरुद्धः न तिष्ठेत्; न वा सः स्वेष्टेन विधिव्यवसायिना सह परामर्शस्य, तेन कर्त्तव्यायाः आत्मप्रतिरक्षायाश्च अधिकारात् वञ्चितः भवेत् ।

(२) यः कोपि बन्दीकृतः अभिरक्षायां निरुद्धश्च अस्ति, सः नेदिष्ठस्य दण्डाधीशस्य समक्षं, तादृशबन्दी-करणात् आरभ्य, बन्दीकरणस्थानात् दण्डाधीशस्य न्यायालयं गमनार्थं आवश्यकं कालं विहाय, चतुर्विंशति होराकालावधौ, उपस्थाप्येत; किं च एतादृशः कोपि जनः दण्डाधीशस्य प्राधिकारं विना उक्तकालावधेः परं अभि-रक्षायां निरुद्धः न भवेत् ।

(३) (१) खण्डगतं, (२) खण्डगतं च किमपि—

(क) यः तत् काले वैदेशिकः शत्रुः अस्तिः, अथवा

(ख) यः निवारकनिरोधाय उपबन्धं कुर्वतः विधेः अधीनं बन्दीकृतः, निरुद्धः वा अस्ति,

तं कमपि जनं न विषयीकुर्यात् ।

(४) निवारक निरोधाय उपबन्धं कुर्वन् कोपि विधिः, कस्यापि जनस्य मासत्रयकालावधेः परं निरोधं तावत् प्राधिकृतं न कुर्यात्, यावत्—

(क) ये जनाः उच्चन्यायालयस्य न्यायाधीशाः सन्ति आसन् वा, एवं नियुक्त्यर्हाः सन्ति वा, तैः

---

१. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य ३-अनुभागेन "उक्तोपखण्डगतं किमपि" इत्येतस्मात् प्रारभ्य "राज्यं निवारयेत्" यावत् इत्येतेभ्यः शब्देभ्यः प्रति एतत् संनिवेशितम् ।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३-अनुभागस्य प्रवर्तने एतस्मिन् अनुभागे निर्देशितरूपेण २२-तमः अनुच्छेदः संशोधितः भविष्यति । ३-अनुभागस्य पाठः तृतीयपरिशिष्टे निवेशितः अस्ति ।

सम्भूय संवृत्ता मन्त्रणामण्डली, उक्तस्य मासत्रयकालावधेः समाप्तेः प्राक्, न प्रतिवेदयेत् यद् अस्याः मते निरोधस्य कृते पर्याप्तं कारणं अस्ति इति—

परन्तु एतदुपखण्ड गतं किमपि (७) खण्डीय (ख) उपखण्डस्य अधीनं संसदा प्रणीतेन केनापि विधिना विहितात् अधिकतमात् कालात् परं कस्यापि जनस्य निरोधं प्राधिकृतं न कुर्यात्; अथवा

(ख) एतादृशः जनः (७) खण्डीय (क) उपखण्डस्य (ख) उपखण्डस्य वा अधीनं संसदा प्रणीतस्य कस्यापि विधेः उपबन्धानां अनुसारं न निरुद्धः अस्ति ।

(५) निवारकनिरोधाय उपबन्धं कुर्वतः कस्यापि विधेः अधीनं प्रदत्तस्य आदेशस्य अनुसारं यदा कोपि जनः निरुध्यते तदा तस्य आदेशस्य प्रदाता प्राधिकारी, यथाशक्यं शीघ्रं, तं जनं तान् आधारान् संसूचयेत् यान् आश्रित्य स आदेशः कृतः अस्ति; किंच तस्मै तस्य आदेशस्य विरुद्धं अभ्यावेदनं कर्तुं यथाशक्यं शीघ्रं अवसरं दद्यात् ।

(६) (५) खण्डगतं किमपि न अपेक्षते यत् तस्मिन् खण्डे निर्दिष्टस्य आदेशस्य प्रदाता प्राधिकारी, तानि तथ्यानि प्रकटीकुर्यात् येषां प्रकटीकरणं तादृशः प्राधिकारी लोकहितविरोधीति मन्यते ।

(७) संसद् विधिना विधातुं क्षमते यत्—

(क) कासां परिस्थितीनां अधीनं, कस्य प्रकारस्य, केषां वा प्रकाराणां विषयेषु, कश्चित् जनः (४) खण्डीय (क) उपखण्डस्य उपबन्धानां अनुसारं मन्त्रणामण्डल्याः मतं अनासाद्य निवारकनिरोधाय उपबन्धं कुर्वतः कस्यापि विधेः अधीनं, मासत्रयात् अधिककालावधि निरुद्धः कर्तुं शक्यते ;

(ख) कस्य प्रकारस्य विषये, केषां प्रकाराणां वा विषयेषु कोपि जनः निवारकनिरोधाय उपबन्धयतः कस्यापि विधेः अधीनं अधिकतमं कियत्कालावधि निरुद्धः कर्तुं शक्यते; तथा च

(ग) मन्त्रणामण्डल्या (४) खण्डीय (क) उपखण्डाधीनं, परिप्रश्ने अनुसरणीया प्रक्रिया का भवेत् इति ।

## शोषणविरोधी अधिकारः

**मानवदुर्व्यापारस्य, बलात् श्रमस्य च प्रतिषेधः ।**

२३. (१) मानवस्य दुर्व्यापारः, विष्टि (बेगार) श्च, बलात् गृहीतस्य श्रमस्य एतादृशाः अन्ये प्रकाराश्च प्रतिषिद्धाः सन्ति तथा च अस्य उपबन्धस्य किमपि उल्लङ्घनं विधेः अनुसारं दण्डनीयः अपराधः भवेत् ।

(२) एतद् अनुच्छेदगतं किमपि सार्वजनिकप्रयोजनार्थं अपरिहार्यसेवायाः अधिरोपणात् राज्यं न निवारयेत्; किंच राज्यं एतादृश्याः सेवायाः अधिरोपणे, केवलं धर्मस्य, मूलवंशस्य, जातेः, वर्गस्य, एतेषां अन्यतमस्य वा कस्यापि आधारतः कमपि विभेदं न कुर्यात् ।

**कर्मान्तादिषु बालानां नियोजनस्य प्रतिषेधः ।**

२४. चतुर्दशभ्यः वर्षेभ्यः अर्वाग्वयः कोपि बालकः कस्मिन् अपि कर्मान्ते, खनौ वा कर्मणि न नियोज्येत, न वा अन्यस्मिन् परिसङ्कटमये नियोजने व्यापृतः क्रियेत ।

## धर्मस्वतन्त्रतायाः अधिकारः

**अन्तःकरणे, धर्मस्य अबाधं अभ्युपगमे, आचरणे, प्रचारे च स्वतन्त्रता ।**

२५. (१) लोकव्यवस्थायाः, सदाचारस्य, स्वास्थ्यस्य, एतद्भागीयानां अन्येषां उपबन्धानां च अधीनं, सर्वेजनाः अन्तःकरणस्य स्वतन्त्रतायां, धर्मस्य अबाधं अभ्युपगमे, आचरणे, प्रचारकरणे च, समानतया स्वत्ववन्तः सन्ति ।

(२) एतद् अनुच्छेदगतं किमपि, तस्य कस्यापि विद्यमानस्य विधेः प्रवर्तनं न प्रभावयेत् न वा तस्य कस्यापि विधेः प्रणयनात् राज्यं निवारयेत् यः—

(क) कस्यापि आर्थिकस्य, वित्तीयस्य, राजनीतिकस्य अन्यस्य वा लौकिकस्य धार्मिकाचरणेन सम्बद्धस्य क्रियाकलापस्य विनियमनं, निर्बन्धनं वा करोति;

(ख) सामाजिककल्याणाय, सामाजिकसुधारणायै च उपबन्धयति; हिन्दूनां सर्वेभ्यः वर्गेभ्यः विभागेभ्यश्च सार्वजनिकरूपाणां हिन्दूधार्मिकसंस्थानां अपावरणं वा करोति ।

**स्पष्टीकरणम्** १—कृपाणस्य धारणं वहनं च सिक्खधर्मस्य अभ्युपगमे अन्तर्भावितं इति मन्येत ।

**स्पष्टीकरणम्** २—(२) खण्डीय (ख) उपखण्डे हिन्दूनां प्रति निर्देशः, सिक्खस्य, जैनस्य, बौद्धस्य च धर्मस्य अभ्युपगन्तॄणां जनानां प्रति निर्देशं अन्तर्भावयति इति अर्थः कृतः भवेत्; हिन्दूधार्मिक संस्थानां प्रति निर्देशस्य अर्थश्च तदनुसारेण कृतः भवेत् ।

**धार्मिककार्याणां प्रबन्धे स्वतन्त्रता ।**

२६. लोकव्यवस्थायाः, सदाचारस्य, स्वास्थ्यस्य च अधीनतया, प्रत्येकं धार्मिकसम्प्रदायः तस्य विभागः वा—

(क) धार्मिकाणां, पूर्तसम्बन्धिनां वा प्रयोजनानां कृते संस्थानां स्थापने पोषणे वा;

(ख) धार्मिकविषयैः सम्बद्धानां स्वकार्याणां प्रबन्धकरणे;

(ग) जङ्गमायाः स्थावरायाश्च सम्पत्तेः अर्जने स्वामित्वे च; तथा

(घ) एतादृश्याः सम्पत्तेः विधेः अनुसारेण प्रशासने च,

अधिकारवान् भवेत् ।

**कस्यापि धर्मविशेषस्य अभिवृद्ध्यर्थं कराणां सन्दाये स्वतन्त्रता ।**

२७. केनापि जनेन ते कराः बलात् न सन्दापनीयाः येषां आगमाः कस्यापि विशिष्टस्य धर्मस्य, धार्मिकस्य सम्प्रदायस्य वा अभिवृद्ध्यर्थं, पोषणार्थं वा करणीयानां व्ययानां कृते विनिर्देशपूर्वकं विनियोजिताः सन्ति ।

**कासुचित् शिक्षासंस्थासु धार्मिकशिक्षार्थं धार्मिकोपासनार्थं वा उपस्थितौ स्वतन्त्रता ।**

२८. (१) राज्यनिधितः पूर्णतः पोषितायां कस्यामपि शिक्षासंस्थायां कापि धार्मिकी शिक्षा न वितीर्णा भवेत् ।

(२) (१) खण्डगतं किमपि, तां शिक्षासंस्थां न विषयीकुर्यात् यस्याः प्रशासनं राज्येन क्रियते, किन्तु या कस्यापि तस्य न्यासस्य, विन्यासस्य वा अधीनं स्थापिता अस्ति, येन एतस्यां संस्थायां धार्मिकशिक्षावितरणं आवश्यकं कृतं अस्ति ।

(३) राज्यतः मान्यताप्राप्तायां, राज्यनिधितः साहाय्यं अधिगच्छन्त्यां वा, कस्यामपि शिक्षासंस्थायां उपतिष्ठन् कोपि जनः, तस्यां प्रदीयमानायां धार्मिकशिक्षायां भागी भवितुं, तादृश्यां संस्थायां, तत् संलग्ने स्थाने वा प्रवर्तितायां धार्मिकोपासनायां वा उपस्थातुं तावत् न विवशीकृतः भवेत् यावत् एतादृशः जनः—यदि च एतादृशः जनः अप्राप्तवयस्कः स्यात्, तर्हि तस्य संरक्षकः वा—स्वस्य सहमतिं तत्र न दत्तवान् ।

## सांस्कृतिकाः शैक्षिकाश्च अधिकाराः

**अल्पसङ्ख्यकवर्गाणं हितसंरक्षणम् ।**

२९. (१) भारतस्य राज्यक्षेत्रे, तस्य कस्मिन् अपि भागे वा निवसतां नागरिकाणां कोपि विभागः, यस्य स्वीया विशिष्टा भाषा, लिपिः, संस्कृतिः वा अस्ति, तस्याः परिपालने अधिकारवान् भवेत् ।

(२) केवलं धर्मस्य, मूलवंशस्य, जातेः, भाषायाः एतेषां अन्यतमस्य कस्यापि आधारतः, कोपि नागरिकः राज्येन पोषितायां, राज्यनिधितः साहाय्यं अधिगच्छन्त्यां वा कस्यामपि शिक्षासंस्थायां प्रवेशात् वञ्चितः न भवेत् ।

**शिक्षासंस्थानां स्थापने प्रशासने च अल्पसङ्ख्यक वर्गाणां अधिकारः।**

३०. (१) धर्मे, भाषायां वा अधिष्ठिताः सर्वे अल्पसङ्ख्यकाः वर्गाः स्वेष्टशिक्षासंस्थानां स्थापने प्रशासने च अधिकृताः भवेयुः

[1][(१अ) (१) खण्डनिर्दिष्टेन केनापि अल्पसङ्ख्यकेन वर्गेण स्थापितायाः, प्रशासितायाः वा शिक्षासंस्थायाः सम्पत्तेः अनिवार्यतया अर्जनार्थं उपबन्धं कुर्वतः विधेः प्रणयने, राज्यं एतत् सुनिश्चितं कुर्यात् यत् तादृश्याः सम्पत्तेः अर्जनार्थं, तादृशेन विधिना, तदधीनं वा अवधारितः राशिः एतावान् अस्ति यः उक्तखण्डस्य अधीनं प्रत्याभूतं अधिकारं निर्बन्धितं निराकृतं वा न करोति।]

(२) राज्यं शिक्षासंस्थाभ्यः साहाय्यस्य अनुदाने, कस्याः अपि शिक्षा संस्थायाः विरुद्धं, इयं धर्मे, भाषायां वा अधिष्ठितस्य अमुकस्य अल्पसङ्ख्यकवर्गस्य व्यवस्थाधीना अस्ति इति आधारतः विभेदं न कुर्यात्।

[2] * *

३१. सम्पत्तेः अनिवार्यं अर्जनम् संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ६-अनुभागेन २०-६-१९७९ दिनाङ्कात् निरसितः।

21,249

## [3][केषांचित् विधीनां व्यावृत्तिः]

**सम्पदां अर्जनाय उपबन्धकानां विधीनां व्यावृत्तिः।**

[4][३१. अ [5][(१) १३-तमे अनुच्छेदे यत् किमपि अन्तर्विष्टे सत्यपि—

(क) कस्याः अपि सम्पदः तत् सम्बन्धि केषामपि अधिकाराणां वा राज्येन अर्जनार्थं, एतादृशानां अधिकाराणां निर्वापणार्थं, परिवर्तनार्थं वा; अथवा

(ख) कस्याः अपि सम्पत्तेः लोकहितार्थं, तत्सम्पत्तेः उचितप्रबन्धस्य सुनिश्चितकरणोद्देश्येन वा परिसीमितकालावधि यावत् राज्यद्वारा तस्य प्रबन्धस्य, ग्रहणार्थं; अथवा

(ग) कस्यापि निगमद्वयस्य, तदधिकनिगमानां वा लोकहितार्थं, अथवा एतेषां अन्यतमस्य उचितं प्रबन्धं सुनिश्चेतुं, समामेलनार्थं; अथवा

(घ) निगमानां प्रबन्धाभिकर्तॄणां, सचिवानां, कोषाध्यक्षाणां, प्रबन्धनिदेशकानां, निदेशकानां, प्रबन्धकानां वा केषामपि अधिकाराणां, तेषां भागधारकाणां केषांचित् मतदानाधिकाराणां वा निर्वापणार्थं, परिवर्तनार्थं; अथवा

(ङ) कस्यापि खनिजस्य, खनिजतैलस्य वा अन्वेषणस्य सम्प्राप्तेः वा प्रयोजनार्थं कृतस्य समयस्य, पट्टस्य, अनुज्ञप्तेः वा आधारेण प्रोद्भवतां केषामपि अधिकाराणां निर्वापणाय परिवर्तनाय वा, अथ च एतादृशस्य कस्यापि समयस्य, पट्टस्य, अनुज्ञप्तेः वा अप्राप्तकाले समाप्तिकरणाय, शून्यीकरणाय वा,

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ४ अनुभागेन (२०-६-१९७९ दिनाङ्कात् प्रवर्तमान प्रभावेण अन्तर्वेशितः)।

२. उपर्युक्ताधिनियमस्य ५-अनुभागेन "सम्पत्तेः अधिकारः" इति उपशीर्षकं लोपितं (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

३. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ३-अनुभागेन अन्तर्वेशितः (३-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

४. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य ४-अनुभागेन अन्तर्वेशितः भूतलक्षिप्रभावेण।

५. संविधानस्य (चतुर्थं संशोधनं) अधिनियमः, १९५५ इत्यस्य ३-अनुभागेन (१) खण्डात् प्रति संनिवेशितः भूतलक्षिप्रभावेण।

उपबन्धं कुर्वन् कोपि विधि : [1][१४-तम अनुच्छेदेन, १९-तम अनुच्छेदेन वा] प्रदत्तानां अधिकाराणां कतमस्य असङ्गतः अपहारकः, न्यूनीकारकः वा अस्ति इति आधारेण शून्यीभूतः न मन्येत—

[2][परन्तु यदि सः विधिः, कस्यापि राज्यस्य विधानमण्डलेन प्रणीतः विधिः अस्ति तर्हि अस्य अनुच्छेदस्य उपबन्धाः तस्य विषये तावत् अनुप्रयुक्ताः न भवेयुः यावत् सः राष्ट्रपतेः विचारार्थं आरक्षितः सन् तस्य अनुमतिं न लब्धवान् ] —

[3][अपरं च, यदि कोपि विधिः केनापि राज्येन, कस्याः अपि सम्पदः अर्जनार्थं कमपि उपबन्धं करोति, यत्र च सम्पदि समाविष्टा कापि भूमिः केनापि जनेन स्वीयकृषिकर्मकृते धृता अस्ति, तत्र राज्येन एतादृश्याः भूमेः एतादृशः भागः यः, तदानीं प्रवर्तमानस्य कस्यापि विधेः अधीनं, तस्मै जनाय अनुप्रयुक्तायाः अधिकतमसीमायाः अभ्यन्तरं अस्ति, तर्हि एतादृश्याः भूमेः कस्यापि भागस्य, अथवा एतदुपरिनिर्मितस्य अथवा एतेन अनुलग्नस्य कस्यापि भवनस्य, संरचनायाः वा अर्जनं केवलं तदा विधिपूर्णं भवेत् यदा एतादृश्याः भूमेः, भवनस्य, संरचनायाः वा अर्जनविषयकः विधिः एतादृशस्य प्रतिकरस्य प्रदानाय उपबन्धयति यस्य परिमाणं तेषां आपणमूल्यपरिमाणात् न्यूनतरं न अस्ति ।]

(२) एतस्मिन् अनुच्छेदे—

[4][ (क) "सम्पद्" शब्दस्य कस्यापि स्थानिकक्षेत्रस्य सम्बन्धे स एव अर्थः भवेत् यः तस्य अथवा तस्य स्थानीयस्य समतुल्यस्य शब्दस्य एतस्मिन् क्षेत्रे प्रवृत्तभूधृतीनां सम्बन्धे विद्यमानविधौ अस्ति; तथा च एषः शब्दः—

(प्रथमः) कमपि "जागीरं", "इनामं", "मुआफीं" अथवा तादृशं अन्यत् अनुदानं तथा च [5][तमिलनाडु] राज्ये केरलराज्ये च कमपि "जन्मं" अधिकारं;

(द्वितीयः) "रैयतवाडी" संस्थापनाधीनं धृतां कामपि भूमिं;

(तृतीयः) कृषेः प्रयोजनस्य अथवा एतत् सहायकप्रयोजनानां कृते धृतां, पट्टेन प्रदत्तां वा, तथा च अनुर्वरभूमिं, वनभूमिं, गोचरभूमिं तथा च भूमेः कृषकैः, कृषिकश्रमिकैः, ग्रामीण शिल्पिभिः अधिभोगे धृतानि भवनस्थलानि अन्यानि संरचनास्थलानि च समावेशयन्तीं भूमिं च,

अन्तर्भावयेत् ।]

(ख) "अधिकाराणां" इति पदे कस्याः अपि सम्पदः सम्बन्धे, कस्मिन् अपि स्वत्वधारिणि, उपस्वत्व-धारिणि अवरस्वत्वधारिणि, भूधृतिधारके, [6][रैयते, अवररैयते] अन्यस्मिन् मध्यवर्तिनि न्यस्तानां अधि-काराणां तथा च भूराजस्वविषयकाणां विशेषाधिकाराणां च अन्तर्भावः अस्ति ।

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ७-अनुभागेन "१४-तम अनुच्छेदेन, १९-तम अनुच्छेदेन ३१-तमअनुच्छेदेन वा" इत्येतत् प्रति संनिवेशितं (२०-६-१९७९ दिनाङ्कात् प्रवर्तमान प्रभावेण) ।

२. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य ४-अनुभागेन अन्तर्वेशितः भूतलक्षिप्रभावेण ।

३. संविधानस्य (सप्तदशं संशोधनं) अधिनियमः, १९६४ इत्यस्य २-अनुभागेन संनिवेशितः ।

४. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन (क) उपखण्डात् प्रति संनिवेशितः भूतलक्षिप्रभावेण ।

५. मद्रासराज्य (नामपरिवर्तनं) अधिनियमः, १९६८ इत्यस्य ४-अनुभागेन "मद्रास" इत्येतत् प्रति संनिवेशितम् (१४-१-१९६९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

६. संविधानस्य (चतुर्थं संशोधनं) अधिनियमः, १९५५ इत्यस्य ३-अनुभागेन अन्तर्वेशितः भूतलक्षिप्रभावेण ।

**केषांचित् अधिनियमानां, विनियमानां च विधिमान्य-करणम् ।**

[1][३१आ. ३१अ अनुच्छेदे अन्तर्विष्टानां उपबन्धानां व्यापकतायां प्रतिकूलं प्रभावं परिहाय, नवम्यां अनुसूच्यां विनिर्दिष्टानां अधिनियमानां विनियमानां अथवा तदीयानां उपबन्धानां च कोपि एतेन आधारेण शून्यः अस्ति, कदापि शून्यीभूतः आसीत् इति वा न मन्येत, यत् एतादृशः अधिनियमः, विनियमः, उपबन्धः वा अस्य भागस्य कैरपि उपबन्धैः असङ्गतः अस्ति, तैः प्रदत्तानां अधिकाराणां वा कमपि हरति, अल्पीकरोति वा; किंच कस्यापि न्यायालयस्य, न्यायाधिकरणस्य वा कमपि प्रतिकूलं निर्णयं, आज्ञप्तिं, आदेशं वा अविगणय्य, उक्तानां अधिनियमानां, विनियमानां वा प्रत्येकं, क्षमस्य कस्यापि विधानमण्डलस्य तन्निरसने, तत्संशोधने वा शक्तेः अधीनं प्रवृत्तः अनुवर्तेत ।]

**कानिचित् निदेशकानि तत्त्वानि प्रभावयुक्तानि कुर्वतां विधीनां व्यावृत्तिः ।**

[2][३१इ. १३ अनुच्छेदे किमपि सत्यपि [3][चतुर्थभागे अधिकथितानि सर्वाणि कानि अपि वा तत्त्वानि] सुनिश्चेतुं राज्यस्य नीतिं प्रभावयन् कोपि विधिः एतदाधारेण शून्यीभूतः न मन्येत, यत् तादृशः विधिः [4][१४-तम अनुच्छेदेन, १९-तमअनुच्छेदेन वा प्रदत्तानां अधिकाराणां कतमस्य असङ्गतः, अपहारकः, अल्पीकारकः वा] अस्ति; [5][तथा च यदि कोपि विधिः, एतादृशीं घोषणां करोति यत् सः अमुकां नीतिं प्रभावयितुं अस्ति तदा सः विधिः कस्मिन् अपि न्यायालये अनेन आधारेण प्रश्नगतः न क्रियेत यत् सः अमुकां नीतिं न प्रभावयति इति ।]—

परन्तु यदि सः विधिः कस्यापि राज्यस्य विधानमण्डलेन प्रणीतः विधिः अस्ति तर्हि अस्य अनुच्छेदस्य उपबन्धाः तस्य विषये तावत् अनुप्रयुक्ताः न भवेयुः यावत् सः राष्ट्रपतेः विचारार्थं आरक्षितः सन् तस्य अनुमतिं न लब्धवान् ।]

[6]३१ई. [राष्ट्रविरोधिक्रियाकलापविषये विधीनां व्यावृत्तिः] संविधानस्य (त्रिचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७७ इत्यस्य २-अनुभागेन १३-४-१९७८ दिनाङ्कात् निरसितः ।

## सांविधानिकानां उपचाराणां अधिकारः

३२. (१) अनेन भागेन प्रदत्तानां अधिकाराणां प्रवर्तनाय समुचितया कार्यपद्धत्या उच्चतमन्यायालये कार्य-प्रवृत्तेः अधिकारः प्रत्याभूतः अस्ति ।

**अनेन भागेन प्रदत्तानां अधिकाराणां प्रवर्तनाय उपचाराः ।**

(२) निदेशानां, आदेशानां वा, बन्दीप्रत्यक्षीकरण-परमादेश-प्रतिषेध-अधिकारपृच्छा-उत्प्रेषणादिलेखान् अन्तर्भावयतां लेखानां वा एतेन भागेन प्रदत्तानां अधिकाराणां अन्यतमस्य कस्यापि प्रवर्तनाय, ये अपि एषां मध्ये समुचिताः स्युः तेषां प्रदाने, शक्तिः उच्चतमन्यायालये भवेत् ।

---

१. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य ५-अनुभागेन अन्तर्वेशितः ।

२. संविधानस्य (पञ्चविंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य ३-अनुभागेन अन्तर्वेशितः (२०-४-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४-अनुभागेन "३९-तम अनुच्छेदस्य (ख) उपखंडे, (ग) उपखंडे वा अधिकथितानि कानि अपि सिद्धान्तानि" इति एतस्मात् प्रति एतत् संनिवेशितम् (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः १९७८ इत्यस्य ८-अनुभागेन "१४-अनुच्छेदेन, १९-अनुच्छेदेन, ३१-अनुच्छेदेन वा" इति एतस्मात् प्रति एतत् संनिवेशितम् (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. केशवानन्दभारती वि० केरलराज्यं (१९७३) Supp. SCR 1. इतिवादे उच्चतमन्यायालयेन "एतत् अप्रवर्तनशीलं अस्ति" इति उद्घोषितम् ।

६. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५-अनुभागेन अन्तर्वेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमान प्रभावेण) ।

(३) उच्चतमन्यायालयाय (१), (२) खण्डाभ्यां प्रदत्तासु शक्तिषु प्रतिकूलं प्रभावं परिहाय, संसद् विधिना अन्यं कमपि न्यायालयं, स्वीयाधिकारितायाः स्थानीयसीमानां अभ्यन्तरे उच्चतमन्यायालयेन (२) खण्डाधीनं प्रयोक्तव्याः सर्वाः शक्तीः तासां एकतमां वा प्रयोक्तुं शक्तिमन्तं कर्तुं क्षमते ।

(४) अनेन अनुच्छेदेन प्रत्याभूतः अधिकारः, अनेन संविधानेन अन्यथा उपबन्धितं वर्जयित्वा, न निलम्बितः भवेत् ।

[1]३२अ. [राज्यविधीनां सांविधानिकवैधता ३२-तमअनुच्छेदस्य अधीनासु कार्यपद्धतिषु न विचारणीया] संविधानस्य (त्रिचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७७ इत्यस्य ३-अनुभागेन १३-४-१९७८ दिनङ्कात् निरसितः ।

**अनेन भागेन प्रदत्तानां अधिकाराणां बलादिषु अनुप्रयोगे संसदः उपान्तरणे शक्तिः ।**

[2][३३. संसद् विधिना अवधारयितुं क्षमते यद् अनेन भागेन प्रदत्तानां अधिकाराणां अन्यतमः—

(क) सशस्त्रबलानां सदस्येषु;

(ख) लोकव्यवस्थायाः परिपालनार्थं न्यस्तभाराणां बलानां वा सदस्येषु;

(ग) आसूचनायाः प्रत्यासूचनायाः वा प्रयोजनार्थं राज्येन स्थापिते कस्मिंश्चिदपि विभागे सङ्घटने वा नियुक्तेषु जनेषु; अथवा

(घ) (क),(ख),(ग) खण्डेषु निर्दिष्टे कस्यचिद् अपि बलस्य, विभागस्य, संघटनस्य च प्रयोजनार्थं स्थापिते, दूरसञ्चारतन्त्रे तद् विषये वा नियुक्तेषु जनेषु,

अनुप्रयोगे तेषां कर्त्तव्य-समुचितपालनपरतायाः अनुशासनपरतायाश्च सुनिश्चयाय, कियन्मात्रं निर्बन्धितः, निराकृतः वा भवेत् इति ।]

**यावत् कस्मिन् अपि क्षेत्रे सेनाविधिः प्रवृत्तः अस्ति तावत् अनेन भागेन प्रदत्तेषु अधिकारेषु निर्बन्धनम् ।**

३४. पूर्वगामिषु एतद् भागोपबन्धेषु यत् किमपि सत्यपि, संसद् विधिना सङ्घस्य, राज्यस्य वा सेवायां स्थिताय कस्मै अपि जनाय, अन्यस्मै कस्मै वा जनाय सेनाविधिः यस्मिन् प्रवृत्तः आसीत् तस्मिन् कस्मिन् अपि भारतराज्यक्षेत्राभ्यन्तरे क्षेत्रे, व्यवस्थायाः परिपालनार्थं, पुनः स्थापनार्थं वा तेन कृते कस्मिन् अपि कार्ये क्षतिपूर्ति प्रदातुं क्षमते, अथवा तादृशे क्षेत्रे सेनाविधेः अधीनं दत्तं दण्डादेशं, भाजितं दण्डं, आदिष्टं समपहारं, अन्यत् वा कार्यं विधिमान्यं कर्तुं क्षमते ।

**अस्य भागस्य उपबन्धान् कार्यकरान् कर्तुं विधानम् ।**

३५. अस्मिन् संविधाने यत् किमपि सत्यपि—

(क) (प्रथमः) येषां विषयाणां कृते संसदा प्रणीतेन विधिना १६-तमानुच्छेदीय (३) खण्डस्य, ३२-तमानुच्छेदीय (३) खण्डस्य, ३३-तमानुच्छेदस्य, ३४-तमानुच्छेदस्य च अधीनं उपबन्धाः भवितुं क्षमन्ते तेषां विषयाणां अन्यतमं कमपि उद्दिश्य, तथा च

(द्वितीयः) एतद् भागाधीनं अपराधाः इति घोषितानि यानि कार्याणि, तेषु दण्डं विधातुं, विधिं निर्मातुं च संसद् शक्तिं भजेत, नहि कस्यापि राज्यस्य विधानमण्डलम्; तथा च एतत् संविधानस्य प्रारम्भात् परं यथाशक्यं शीघ्रं (२) उपखण्डे निर्दिष्टेषु कार्येषु दण्डं विधातुं संसद् विधीन् प्रणयेत्;

(ख) (क) खण्डीये (प्रथमे) उपखण्डे निर्दिष्टानां विषयाणां अन्यतमेन केनापि सम्बद्धः, तत्खण्डीये (द्वितीये) उपखण्डे निर्दिष्टे कस्मिन् अपि कार्ये दण्डाय उपबन्धं कुर्वन् वा, भारतस्य राज्यक्षेत्रे, अस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं प्रवृत्तः कोपि विधिः, तत्रत्य निबन्धनानां तथा च ३७२-तमानुच्छेदाधीनं तत्र यानि कृतानि भवेयुः तेषां अनुकूलनानां, उपान्तराणां च अधीनं, तावत् प्रवृत्तः अनुवर्तेत यावत् संसदा परिवर्तितः, निरसितः, संशोधितः वा न भवेत् ।

**स्पष्टीकरणम्**—एतदनुच्छेदे "प्रवृत्तः कोपि विधिः" इति पदानां तथैव अर्थः ग्राह्यः यथा ३७२-तमानुच्छेदे ।

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ६-अनुभागेन अन्तर्वेशितः (१-२-१९७७दिनाङ्कात् प्रवर्तमान प्रभावेण) ।

२. संविधानस्य (पञ्चाशत्तमं संशोधनं) अधिनियमः १९८४ इत्यस्य २-अनुभागेन ३३-तम अनुच्छेदात् प्रति एषः अनुच्छेदः संनिवेशितः ।

भागः ४

# राज्यनीतेः निदेशकानि तत्त्वानि

३६. अस्मिन् भागे, यावत् सन्दर्भेण अन्यथा अपेक्षितं न भवेत् तावत् "राज्यस्य" तथैव अर्थः भवति यथा तृतीये भागे। **परिभाषा।**

३७. अस्मिन् भागे अन्तर्विष्टाः उपबन्धाः न प्रवर्तनीयाः भवेयुः केनापि न्यायालयेन; तथापि तत्र अधिकथितानि तत्त्वानि देशस्य शासनकर्मणि मूलभूतानि सन्ति; विधीनां प्रणयने च एषां अनुप्रयोगः राज्यस्य कर्त्तव्यं भवेत्। **अस्मिन् भागे अन्तर्विष्टानां तत्त्वानां अनुप्रयोगः।**

३८. [1][(१)] राज्यं लोककल्याणस्य अभिवृद्धये सामाजिकव्यवस्थायाः यथाशक्यं कार्यसाधकतया स्थापनेन, संरक्षणेन च प्रयतेत यस्यां सामाजिकः आर्थिकः राजनीतिकश्च न्यायः राष्ट्रियजीवनस्य सर्वाः संस्थाः अनुप्राणयेत्। **लोककल्याणस्य अभिवृद्धये राज्यं सामाजिकव्यवस्थां आसादयेत्।**

[2][(२) राज्यं विशेषतया, आयस्य असमानताः न्यूनीकर्तुं प्रयतेत; तथा च न केवलं व्यक्तिषु किन्तु विभिन्नक्षेत्रेषु निवसतां, विभिन्न व्यवसायेषु निरतानां वा लोकसमूहानां मध्ये अपि प्रतिष्ठायाः, सुविधानां, अवसराणां च विषये असमानतानां समापने अपि प्रयतेत।]

३९. राज्यं विशेषतया स्वनीतिं तथा सञ्चालयेत् यथा— **राज्येन अनुसरणीयानि कानिचित् नीतेः तत्त्वानि।**

(क) नागरिकाः, नराः, नार्यश्च समानतया जीविकायाः पर्याप्तसाधने अधिकारं भजेयुः;

(ख) समाजस्य भौतिकसम्पत्तेः स्वाम्यं, नियन्त्रणं च तथा संविभक्तं भवतु यथा सर्वोत्तमं समानं हितं साधितं भवेत्;

(ग) आर्थिकव्यवस्था एवं प्रचलेत् येन सम्पत्तेः उत्पादनसाधनानां तथा पुञ्जीकरणं न स्यात् यथा सर्वसाधारणस्य हितानां हानिः भवेत्;

(घ) नराणां नारीणां च समाने कार्ये समानं वेतनं भवेत्;

(ङ) पुरुषश्रमिकाणां, स्त्रीश्रमिकाणां च स्वास्थ्यस्य शक्तेश्च, बालानां सुकुमारावस्थायाश्च दुरुपयोगः न भवेत्; तथा च आर्थिकावश्यकतया विवशाः नागरिकाः वयसः शक्तेश्च अननुकूलेषु वृत्तिकर्मसु युक्ताः न भवेयुः।

[3](च) बालेभ्यः स्वातन्त्र्यमये गौरवमये वातावरणे स्वस्थरीत्या विकासाय अवसराः सुविधाश्च दत्ताः भवेयुः; शिशवः, अल्पवयजनाश्च शोषणात् नैतिकपरित्यागात् आर्थिकपरित्यागात् च रक्षिताः भवेयुः।]

[4][**३९अ.** राज्यं एतत् सुनिश्चितं कुर्यात् यद् विधिपद्धतेः प्रचालनं तथा भवेत् यथा अवसरसमानतायाः आधारेण न्यायस्य प्रापणं सुलभ्यं भवेत्; तथा च विशेषतया उपयुक्तविधानेन, उपयुक्तव्यवस्थाभिः, अन्यया **न्यायसमानता, निःशुल्का वैधिकसहायता च।**

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ९-अनुभागेन ३८-तमः अनुच्छेदः तस्य (१) खण्डरूपेण पुनरङ्कितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन उक्तदिनात् प्रवर्तमानप्रभावेण अन्तर्वेशितः।

३. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ७-अनुभागेन (च) खण्डात् प्रति संनिवेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

४. उपर्युक्ताधिनियमस्य ८-अनुभागेन संनिवशितः उक्त दिनाङ्कात् प्रवर्तमान प्रभावेण।

कयापि रीत्या वा निःशुल्कवैधिकसहायताप्रदानाय तथा प्रबन्धं कुर्यात् यथा आर्थिकनिर्योग्यतानां अन्यनिर्योग्यतानां वा कारणेन कोपि नागरिकः न्यायप्राप्त्यवसरात् वञ्चितः न भवति ।

**ग्रामपञ्चायतानां सङ्घटनम् ।**

४०. राज्यं उपक्रमेत सङ्घटनं ग्रामपञ्चायतानां, निदधीत च तेषु तादृशीः शक्तीः प्राधिकारं च, यादृशीः स्वायत्तशासनस्य एककरूपेण कार्यकरणे योग्यतां सम्पादयितुं तेभ्यः आवश्यकाः भवेयुः ।

**अवस्थाविशेषेषु वृत्तिकर्म, शिक्षां, लोकसाहाय्यं च प्राप्तुं अधिकारः ।**

४१. राज्यं स्वीयस्य आर्थिकसामर्थ्यस्य विकासस्य च मर्यादानां अभ्यन्तरे वृत्तिकर्मणः, शिक्षायाश्च अधिकारं, वृत्तिकर्मलोपस्य, वार्धक्यस्य, अङ्गहानेश्च अवस्थासु, अनर्हायाः अर्थशून्यतायाः दशासु लोकसाहाय्यस्य: अधिकारं च प्रापयितुं कार्यसाधकं उपबन्धं कुर्यात् ।

**कर्मणः न्याय्यानां मानवोचितदशानां, प्रसूतिसाहाय्यस्य च उपबन्धः ।**

४२. राज्यं न्याय्यानां, मानवोचितानां च कर्मणः दशानां सुनिश्चयार्थं, प्रसूतिसाहाय्यस्य प्रापणार्थं च उपबन्धं कुर्यात् ।

**श्रमिकाणां कृते निर्वाहवेतनादीनि ।**

४३. राज्यं उपयुक्तविधानेन, आर्थिकसंघटनेन, अन्यया कयापि रीत्या वा कार्षिकान्, औद्योगिकान्, अन्यान् वा श्रमिकान् कर्म, निर्वाहवेतनं, शिष्टजीवनस्तरस्य, अवकाशस्य सम्पूर्णतया उपभोगस्य च सुनिश्चायिकाः कर्मणः दशाः, तथा सामाजिकान्, सांस्कृतिकान् अवसरान् प्रापयितुं च प्रयतेत; विशेषतया च राज्यं, ग्रामपरिसरेषु कुटीरोद्योगानां, प्रवृद्ध्यं, वैयक्तिककार्यकरणस्य, सहकार्यकरणस्य वा आधारेण प्रयतेत ।

**उद्योगानां प्रबन्धे कर्मकराणां भागित्वम् ।**

[१][४३अ. राज्यं उपयुक्तविधानेन, अन्यया कयापि रीत्या वा, उद्योगसंलग्नानां उपक्रमाणां, स्थापनानां, अन्यसङ्घटनानां वा प्रबन्धेषु कर्मकराणां भागित्वं सुनिश्चेतुं प्रयतेत ।]

**नागरिकाणां अर्थे समाना व्यवहार-संहिता ।**

४४. राज्यं भारतस्य समस्ते राज्यक्षेत्रे नागरिकाणां कृते समानां व्यवहारसंहितां प्रापयितुं प्रयतेत ।

**बालकानां अर्थे निःशुल्कायाः अनिवार्यायाः शिक्षायाः उपबन्धः ।**

४५. राज्यं अस्य संविधानस्य प्रारम्भात् दशवर्षकालाभ्यन्तरे सर्वेभ्यः बालकेभ्यः चतुर्दशवर्षवयसः समाप्तिं यावत् निःशुल्कायाः अनिवार्यायाः शिक्षायाः उपबन्धं कर्तुं प्रयतेत ।

**अनुसूचितजातीनां, जनजातीनां, अन्येषां दुर्बलतरवर्गाणां च शैक्षिकार्थिकहिताभिवृद्धिः ।**

४६. राज्यं जनतायाः दुर्बलतराणां वर्गाणां, विशिष्टतया च अनुसूचितजातीनां अनुसूचितजनजातीनां च शैक्षिकानां, आर्थिकानां च हितानां विशेषावधानतया अभिवृद्धिं कुर्यात्; तान् सामाजिकात् अन्यायात् शोषणस्य सर्वेभ्यः प्रकारेभ्यश्च संरक्षयेत् ।

**पोषणाहारस्तरस्य जीवनस्तरस्य च उन्नमनं, सार्वजनिक स्वास्थ्यस्य च सुधारणं राज्यस्य कर्त्तव्यम् ।**

४७. राज्यं स्वीयजनतायाः पोषणाहारस्तरस्य, जीवनस्तरस्य च उन्नमनं, लोकस्वास्थ्यस्य सुधारणं च स्वीयप्रथमकर्तव्यानां अन्यतमं मन्येत; विशेषतः राज्यं मादकपेयानां स्वास्थ्यहानिकराणां च औषधानां—भेषज्य प्रयोजनं व्यतिरिच्य—उपभोगस्य प्रतिषेधाय प्रयतेत ।

**कृषेः पशुपालनस्य च सङ्घटनम् ।**

४८. राज्यं आधुनिकीभिः वैज्ञानिकीभिश्च प्रणालीभिः कृषिं, पशुपालनं च सङ्घटयितुं प्रयतेत, विशेषतया च बीजवंशानां परिरक्षणाय, सुधारणाय च, गवां, वत्सानां, अन्येषां दोह्यानां वाह्यानां च पशूनां वध-प्रतिषेधाय प्रक्रमेत च ।

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ९-अनुभागेन संनिवेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

[1][४८अ. राज्यं देशस्य पर्यावरणस्य संरक्षणं तस्मिन् सुधारणं च कर्तुं तथा वनानां, वन्यजीवानां च रक्षणं कर्तुं प्रयतेत ।]

**पर्यावरणस्य संरक्षणं सुधारणं च, वनस्य वन्यजीवानां रक्षणं च ।**

४९. राज्यस्य भवेद् अयं कर्तव्यताभारः यत् तत् कुर्यात् [2][संसदा प्रणीतेन विधिना तदधीनं वा] राष्ट्रियमहिमशाली इति घोषितस्य कलात्मिकायाः ऐतिहासिक्याः वा अभिरुचेः प्रत्येकं स्मारकस्य, स्थानस्य वस्तुनः वा यथायथं लुण्ठनात्, विरूपणात्, विनाशात्, अपसारणात्, व्ययनात्, निर्यातात् वा रक्षणम् ।

**राष्ट्रियमहिमशालिनां स्मारकाणां, स्थानानां, वस्तूनां च रक्षणम् ।**

५०. राज्यं राज्यस्य लोकसेवासु न्यायापालिकां कार्यपालिकातः पृथक् कर्तुं प्रक्रमेत ।

**न्यायपालिकायाः कार्यपालिकातः पृथक् करणम् ।**

५१. राज्यं—

**आन्ताराष्ट्रियाः शान्तेः सुरक्षायाश्च अभिवृद्धिः ।**

(क) आन्ताराष्ट्रियाः शान्तेः सुरक्षायाश्च अभिवृद्धये;

(ख) राष्ट्राणां मध्ये न्याय्यानां, सम्मानपूर्णानां च सम्बन्धानां रक्षणाय;

(ग) सङ्घटितानां लोकानां परस्परव्यवहारेषु आन्ताराष्ट्रियविधिं प्रति, सन्धिबन्धनं प्रति च सम्मानस्य पोषणाय;

(घ) आन्ताराष्ट्रियविवादानां मध्यस्थद्वारा समाधानस्य प्रोत्साहनाय; च

प्रयतेत ।

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य १०-अनुभागेन संनिवेशितः उक्त-दिनाङ्कात् प्रवर्तमान प्रभावेण ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २७-अनुभागेन "संसदा विधिना घोषितेन" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

[1][भागः ४ अ

## मूलकर्त्तव्यानि

मूलकर्त्तव्यानि।

**५१अ.** (क) संविधानस्य पालनं, तथा तस्य आदर्शान् प्रति, संस्थाः-प्रति, राष्ट्रध्वजं प्रति, राष्ट्रगानं प्रति च आदरः;

(ख) स्वतन्त्रतायाः कृते अस्माकं राष्ट्रियआन्दोलनं यैः उच्चैः आदर्शैः प्रेरितं आसीत् तान् हृदि कृत्य तेषां पालनम्;

(ग) भारतस्य प्रभुतायाः, एकतायाः, अखण्डतायाश्च रक्षणं, अक्षुण्णतया धारणं च;

(घ) देशस्य संरक्षणं, आहूते सति राष्ट्रसेवाविधानं च;

(ङ) भारतस्य सर्वेषु लोकेषु समरसतायाः, समानभ्रातृत्व-भावनायाश्च तथा अभिवर्धनं यथा धर्म-भाषा-प्रदेश-वर्गादिमूलः भेदभावः निरसति; तथा च नारी-गरिम्णः विरोधिनीनां प्रथानां त्यागः;

(च) अस्माकं सामासिकसंस्कृतेः गौरवशालिपरम्परायाः महत्त्वस्य अवगमः, तस्याः परिरक्षणं च;

(छ) वनानां, सरसां, नदीनां, वन्यजीवानां च समावेशकस्य प्राकृतिकपर्यावरणस्य रक्षणं संवर्धनं च; तथैव सर्वेषां प्राणिनां प्रति दयाभावश्च;

(ज) वैज्ञानिकदृष्टिकोणस्य, मानववादस्य, जिज्ञासाभावस्य, सुधारणाभावस्य च विकासः;

(झ) सार्वजनिकसम्पत्तेः सुरक्षणं, हिंसायाः प्रत्याख्यानं च;

(ञ) यथा राष्ट्रं निरन्तरं प्रयत्नस्य उपलब्धेश्च उच्चतरं स्तरं स्पृशेत् तथा व्यक्तिगतेषु, सामूहिकेषु च कार्यकरणक्षेत्रेषु उत्कर्षाधिगमं प्रति सदा प्रयतनं च,

भारतस्य सर्वेषां नागरिकाणां कर्त्तव्यं भवेत्।]

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ११-अनुभागेन एषः भागः संनिवेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण।)

भागः ५

## सङ्घः

### अध्यायः १—कार्यपालिका

#### राष्ट्रपतिः, उपराष्ट्रपतिश्च

५२. भारतस्य एकः राष्ट्रपतिः भवेत् । **भारतस्य राष्ट्रपतिः ।**

५३. (१) सङ्घस्य कार्यपालिकाशक्तिः राष्ट्रपतौ निहिता भवेत्; सः च एतस्याः प्रयोगं अस्य संविधानस्य अनुसारेण स्वयं, स्वस्य अधीनस्थानां अधिकारिणां द्वारा वा, कुर्यात् । **सङ्घस्य कार्यपालिका शक्तिः ।**

(२) पूर्वगामिनः उपबन्धस्य व्यापकतायां प्रतिकूलं प्रभावं परिहाय, सङ्घस्य रक्षाबलानां सर्वोच्चः समादेशः राष्ट्रपतौ निहितः भवेत्; तस्य प्रयोगश्च विधिना विनियमितः भवेत् ।

(३) एतदनुच्छेदगतं किमपि—

(क) कस्यापि राज्यस्य शासनाय, अन्यस्मै वा प्राधिकारिणे केनापि विद्यमानेन विधिना प्रदत्तानि कानि अपि कृत्यानि राष्ट्रपतौ अन्तरितानि करोति इति न मन्येत;

(ख) राष्ट्रपतेः अन्येभ्यः प्राधिकारिभ्यः विधिना कृत्यानां प्रदानात्, संसदं न निवारयेत् ।

५४. राष्ट्रपतेः निर्वाचनं एवंविधस्य निर्वाचकगणस्य सदस्याः कुर्युः यस्मिन्— **राष्ट्रपतेः निर्वाचनम् ।**

(क) संसदः उभयोः सदनयोः निर्वाचिताः सदस्याः;

(ख) राज्यानां विधानसभानां निर्वाचिताः सदस्याश्च,

भवेयुः ।

५५. (१) यावत् शक्यं राष्ट्रपतेः निर्वाचने भिन्नानां राज्यानां प्रतिनिधित्वस्य माने एकरूपता भवेत् । **राष्ट्रपतेः निर्वाचनस्य रीतिः ।**

(२) राज्यानां मध्ये परस्परं एतादृशीं एकरूपतां, तथा समस्तानां राज्यानां सङ्घस्य च मध्ये समतुल्यतां सम्पादयितुं, संसदः प्रत्येकराज्यविधानसभायाश्च निर्वाचितः प्रत्येकं सदस्यः एतादृशि निर्वाचने येषां दाने अधिकृतः तेषां मतानां सङ्ख्या निम्नलिखितया रीत्या निर्धारिता भवेत्—

(क) राज्यविधानसभायाः प्रत्येकं निर्वाचितः सदस्यः तावन्ति मतानि भजेत, यावन्ति एक सहस्रस्य गुणितानि तत्सभायाः निर्वाचितानां सदस्यानां पूर्णसङ्ख्यया राज्यस्य जनसङ्ख्यां विभज्य प्राप्ते भागफले स्युः;

(ख) एकसहस्रस्य उक्तानि गुणितानि स्वीकृत्य यदि शेषः पञ्चशतेभ्यः अन्यूनः स्यात् तदा (क) उपखण्डे उक्तस्य सदस्यस्य मतानि एकसङ्ख्यया वर्धेरन् ।

(ग) संसदः प्रत्येकसदनस्य प्रत्येकं निर्वाचितः सदस्यः मतानां तादृशीं सङ्ख्यां भजेत यादृशी राज्यानां विधानसभानां सदस्यानां अर्थे (क), (ख) उपखण्डाभ्यां नियतानां मतानां पूर्णसङ्ख्यां संसत् सदनयोः निर्वाचितानां सदस्यानां पूर्णसङ्ख्यया विभज्य प्राप्ता भवेत्; अर्धांशात् अधिकानि भिन्नानि एकं इति गणितानि स्युः, अन्यानि च भिन्नानि उपेक्षितानि स्युः ।

(३) राष्ट्रपतेः निर्वाचनं आनुपातिकप्रतिनिधित्वपद्धतिं अनुसृत्य एकलसङ्क्रमणीयमतेन भवेत्; किंच, एतादृशं निर्वाचनं गुप्तमतदानेन भवेत् ।

[1][**स्पष्टीकरणम्**—अस्मिन् अनुच्छेदे "जनसङ्ख्या" शब्दस्य अर्थे सा जनसङ्ख्या ग्राह्या या अभिनिश्चिता तस्यां अन्तिमायां पूर्ववृत्तायां जनगणनायां यस्याः सुसम्बद्धाः अङ्काः प्रकाशिताः—.

परन्तु एतस्मिन् स्पष्टीकरणे "अन्तिमायां पूर्ववृत्तायां जनगणनायां यस्याः सुसम्बद्धाः अङ्का प्रकाशिताः" इति कथनं प्रति निर्देशस्य तावत् १९७१-तम वर्षस्य जनगणनां प्रति निर्देशः इति अर्थः ग्राह्यः यावत् २०००-तम वर्षानन्तरं कृतायाः प्रथमजनगणनायाः सम्बद्धाः अङ्काः प्रकाशिताः न भवेयुः ।]

**राष्ट्रपतेः पदावधिः ।**

५६. (१) राष्ट्रपतिः स्वपदं पञ्चवर्षावधि तस्मात् दिनाङ्कात् धारयेत् यस्मिन् सः तत् पदं आरोहति–परन्तु—

(क) राष्ट्रपतिः उपराष्ट्रपतिं सम्बोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन पदं त्यक्तुं क्षमते;

(ख) राष्ट्रपतिः संविधानस्य अतिक्रमणे ६१-तमानुच्छेदे उपबन्धितया रीत्या कृतेन महाभियोगेन पदात् अपसारितो भवेत्;

(ग) राष्ट्रपतिः स्वपदावधेः समाप्तौ अपि तावत् पदधारणं अनुवर्तयेत् यावत् अस्य उत्तराधिकारी पदं न आरोहति ।

(२) (१) खण्डीयपारन्तुकस्य (क) उपखण्डाधीनं उपराष्ट्रपतेः सम्बोधकं त्यागपत्रं तेन लोकसभायाः अध्यक्षं प्रति अविलम्बं संसूचितं भवेत् ।

**पुनर्निर्वाचने पात्रता ।**

५७. यः जनः राष्ट्रपतिरूपेण पदं धारयति, धृतवान् वा विद्यते सः, अस्य संविधानस्य अन्येषां उपबन्धानां अधीनं, तस्मै पदाय पुनर्निर्वाचनाय पात्रं भवेत् ।

**राष्ट्रपतेः निर्वाचनस्य अर्हताः ।**

५८. (१) सः एव जनः राष्ट्रपतिरूपेण निर्वाचने पात्रं भवेत् यः—

(क) भारतस्य नागरिकः अस्ति;

(ख) वयसः पञ्चत्रिंशत् वर्षाणि पूरितवान्; किंच

(ग) लोकसभायाः सदस्यरूपेण निर्वाचने अर्हः अस्ति ।

(२) कोपि जनः राष्ट्रपतिरूपेण निर्वाचनस्य पात्रं न भवेत् यदि सः भारतशासनस्य, कस्यापि राज्यस्य शासनस्य वा अधीनं उक्तशासनानां अन्यतमस्य नियन्त्रणे स्थितस्य कस्यापि स्थानीयस्य अन्यस्य वा प्राधिकारिणः अधीनं किमपि लाभस्य पदं धारयति ।

**स्पष्टीकरणम्**—कोपि जनः लाभस्य किमपि पदं धारयति इति अस्य अनुच्छेदस्य प्रयोजनानां अर्थे न मन्येत अस्मात् एव हेतोः यत् सः सङ्घस्य राष्ट्रपतिः, उपराष्ट्रपतिः वा अस्ति, अथवा कस्यापि राज्यस्य राज्यपालः[2][* * *] अस्ति अथवा सङ्घस्य कस्यापि राज्यस्य वा मन्त्री अस्ति ।

**राष्ट्रपतेः पदस्य प्रतिबन्धाः ।**

५९. (१) राष्ट्रपतिः संसदः अन्यतरस्य सदनस्य कस्यापि वा राज्यस्य विधानमण्डलस्य कस्यापि सदनस्य सदस्यः न भवेत्, किं च यदि अन्यतरस्य कस्यापि संसत्सदनस्य, कस्यापि वा राज्यस्य विधानमण्डलस्य कोपि सदस्यः राष्ट्रपतिरूपेण निर्वाचितः भवेत् तर्हि सः तस्मिन् सदने तस्मिन् दिनाङ्के रिक्तीकृतस्थानः मन्येत, यस्मिन् सः राष्ट्रपतिरूपेण स्वपदं आरोहति ।

(२) राष्ट्रपतिः किमपि अन्यत् लाभस्य पदं न धारयेत् ।

(३) राष्ट्रपतिः विना भाटकप्रदानं स्वपदावासानां उपयोगे स्वत्ववान् भवेत्; किं च तादृशेषु उपलब्धिषु,

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः १९७६ इत्यस्य १२-अनुभागेन पूर्वस्पष्टीकरणात् प्रति एतत् स्पष्टीकरणं संनिवेशितं (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राज्यप्रमुखो वा उपराज्यप्रमुखो वा" इत्येते शब्दाः विलोपिताः ।

भक्तेषु, विशेषाधिकारेषु चापि स्वत्ववान् भवेत् यादृशानि संसदा विधिना अवधारितानि भवेयुः; किं च यावत् एतदर्थं एवं उपबन्धः न क्रियेत तावत् तादृशेषु उपलब्धिषु, भक्तेषु विशेषाधिकारेषु च स्वत्ववान् भवेत् यादृशानि द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति ।

(४) राष्ट्रपतेः उपलब्धयः भक्तानि च तस्य पदावधौ न न्यूनीकृतानि भवेयुः ।

६०. प्रत्येकं राष्ट्रपतिः, राष्ट्रपतिरूपेण कार्यकारी वा, राष्ट्रपतेः कृत्यानि निर्वहन् वा प्रत्येकं जनः, स्वपदारोहणात् प्राक् भारतस्य मुख्यन्यायमूर्तेः समक्षं तस्य अनुपस्थितौ उच्चतमन्यायालयस्य उपलभ्यज्येष्ठतमन्यायाधीशस्य वा समक्षं शपथं प्रतिज्ञानं वा निम्नलिखिते प्ररूपे कुर्यात्, तं च स्वहस्ताङ्कितं कुर्यात्, तद् यथा— **राष्ट्रपतेः शपथः प्रतिज्ञानं वा ।**

> "अहं — $\frac{\text{अमुकः ईश्वरस्य नाम्ना शपे}}{\text{सत्यनिष्ठया प्रतिजाने}}$ यद् अहं श्रद्धापूर्वकं भारतस्य राष्ट्रपतेः पदस्य कार्यपालनं करिष्यामि (अथवा राष्ट्रपतेः कृत्यानि निर्वक्ष्यामि) तथा च मम सम्पूर्णयोग्यतया संविधानस्य विधेश्च परिरक्षणं, संरक्षणं, प्रतिरक्षणं च करिष्यामि; किंच अहं भारतस्य जनतायाः सेवार्थं, कल्याणार्थं च निरतः भविष्यामि ।"

६१. (१) यदा संविधानस्य अतिक्रमणात् राष्ट्रपतिः महाभियोगेन अभियोज्यः भवति तदा संसदः अन्यतरत् सदनं दोषारोपं कुर्यात् । **राष्ट्रपतौ महाभियोगे प्रक्रिया ।**

(२) तादृशः कोपि दोषारोपः तावत् न कृतः भवेत् यावत्—

(क) तादृशं दोषारोपं कुर्वती प्रस्थापना अन्तर्निविष्टा नास्ति कस्मिंश्चित् सङ्कल्पे, यः तत्-सदन-सदस्यानां समस्त-सङ्ख्यायाः चतुर्थांशात् अन्यूनसङ्ख्यया कृतहस्ताक्षरायाः न्यूनात् न्यूनं चतुर्दशानां दिनानां लिखितसूचनायाः पश्चात् प्रस्तावितः अस्ति यस्यां (सूचनायां) तेषां (सदस्यानां) सङ्कल्प-प्रस्तावस्य अभिप्रायः अभिहितः अस्ति; किं च

(ख) तादृशः सङ्कल्पः तत्सदनस्य समस्तसदस्यानां तृतीयांशद्वयात् अन्यूनेन बहुमतेन पारितः नास्ति ।

(३) यदा कश्चित् दोषारोपः संसदः अन्यतरेण सदनेन एवं कृतः अस्ति तदा तस्याः अन्यत् सदनं तस्य दोषारोपस्य अन्वेषणं कुर्यात् कारयेत् वा; राष्ट्रपतिश्च एतादृशे अन्वेषणे उपस्थातुं, स्वप्रतिनिधित्वकरणे च अधिकृतः भवेत् ।

(४) यदि राष्ट्रपतेः विरुद्धं कृतः दोषारोपः सिद्धः अस्ति इति घोषणां कुर्वन् एतदन्वेषणस्य परिणाम-स्वरूपः सङ्कल्पः तस्य सदनस्य समस्तसदस्यानां तृतीयांशद्वयात् अन्यूनेन बहुमतेन पारितः स्यात् येन तस्य दोषारोपस्य अन्वेषणं कृतं कारितं वा अस्ति तदा तादृशः सङ्कल्पः राष्ट्रपतेः स्वपदात् अपसारणाय प्रभवेत् तस्मात् दिनाङ्कात् यस्मिन् असौ सङ्कल्पः एवं पारितः अस्ति ।

६२. (१) राष्ट्रपतेः पदस्य अवधेः समाप्त्या कृतायाः रिक्ततायाः पूर्तये निर्वाचनं अवधेः समाप्तेः पूर्वं पूर्णं भवेत् । **राष्ट्रपतिपदस्य रिक्तता-पूर्तये निर्वाचनस्य कालः, आकस्मिकरिक्तता-पूर्तये निर्वाचितजनस्य पदावधिश्च ।**

(२) राष्ट्रपतेः मृत्युना, पदत्यागेन, अपसारणेन, अन्येन हेतुना वा भवन्त्याः तस्य पदस्य रिक्ततायाः पूर्तये निर्वाचनं रिक्ततादिनाङ्कात् परं यथाशक्यं अविलम्बेन प्रवर्तितं भवेत्, न च तद्रिक्ततायाः प्रारम्भदिनाङ्कात् षड्भ्यः मासेभ्यः परं कस्यामपि अवस्थायां; किंच रिक्ततापूर्त्यर्थं निर्वाचितः सः जनः ५६-तमानुच्छेदस्य उपबन्धानां अधीनं पञ्चानां वर्षाणां पूर्णावधि पदधारणे स्वत्ववान् भवेत् तस्मात् दिनाङ्कात् यस्मिन् सः स्वपदं आरोहति ।

भारतस्य उपराष्ट्रपतिः।

६३. भारतस्य एकः उपराष्ट्रपतिः भवेत्।

उपराष्ट्रपतिः राज्यसभायाः पदेन सभापतिः।

६४. उपराष्ट्रपतिः राज्यसभायाः पदेन सभापतिः भवेत्; किं च लाभस्य किमपि अन्यत् पदं न धारयेत्—

परन्तु यदा कस्मिन् अपि कालावधौ उपराष्ट्रपतिः राष्ट्रपतिरूपेण कार्यं करोति, राष्ट्रपतेः कृत्यानि ६५-तमानुच्छेदस्य अधीनं निर्वहति वा तदा सः राज्यसभायाः सभापतेः पदस्य कर्त्तव्यानि न आचरेत् तथा च राज्यसभायाः सभापतये ९७-तमानुच्छेदस्य अधीनं सन्देये वेतने, भक्ते वा स्वत्ववान् न भवेत्।

राष्ट्रपतेः पदस्य आकस्मिकरिक्ततायां अनुपस्थितौ वा, उपराष्ट्रपतेः राष्ट्रपतिरूपेण कार्यनिर्वर्तनं, तत्कृत्यनिर्वहणं वा।

६५. (१) राष्ट्रपतेः पदे तस्य मृत्युना, पदत्यागेन, अपसारणेन, अन्येन हेतुना वा कस्याः अपि रिक्ततायाः प्रसङ्गे उपराष्ट्रपतिः राष्ट्रपतिरूपेण तद्दिनाङ्कपर्यन्तं कार्यं कुर्यात् यावत् नूतनः राष्ट्रपतिः अस्य अध्यायस्य उपबन्धानां अनुसारं अस्याः रिक्ततायाः पूर्त्यै निर्वाचितः स्वपदं आरोहति।

(२) यदा राष्ट्रपतिः कृत्यानां निर्वहणे अनुपस्थित्या, अस्वास्थ्येन, अन्येन केनापि हेतुना वा, असमर्थः अस्ति, तदा उपराष्ट्रपतिः तस्य कृत्यानि तद्दिनावधि निर्वहेत् यावत् राष्ट्रपतिः स्वकर्त्तव्यानि पुनः आरभते।

(३) उपराष्ट्रपतिः यस्मिन् कालावधौ राष्ट्रपतिरूपेण एवं कार्याणि कुर्वन्, कृत्यानि निर्वहन् च अस्ति तस्मिन् कालावधौ तत्कालावधिं उद्दिश्य च राष्ट्रपतेः शक्तीः उन्मुक्तीश्च लभेत; तथा उपलब्धिषु, भक्तेषु, विशेषाधिकारेषु च तादृशेषु स्वत्ववान् भवेत् यादृशानि संसदा विधिना अवधारितानि भवेयुः; यावत् च तद्विषये एवं उपबन्धः न क्रियते तावत् तादृशेषु उपलब्धिषु, भक्तेषु, विशेषाधिकारेषु च यादृशानि द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति।

उपराष्ट्रपतेः निर्वाचनम्।

६६. (१) उपराष्ट्रपतेः निर्वाचनं संसदः [1][उभयोः सदनयोः सदस्यैः सम्भूतस्य निर्वाचकगणस्य सदस्याः] आनुपातिकप्रतिनिधित्व-पद्धतिं अनुसृत्य एकलसङ्क्रमणीयमतेन कुर्युः; किंच एतादृशं निर्वाचनं गुप्तमतदानेन भवेत्।

(२) उपराष्ट्रपतिः संसदः अन्यतरस्य सदनस्य, कस्यापि वा राज्यस्य विधानमण्डलस्य कस्यापि सदनस्य वा सदस्यः न भवेत्; किं च यदि अन्यतरस्य कस्यापि संसत्-सदनस्य, कस्यापि वा राज्यस्य विधानमण्डलसदनस्य कोपि सदस्यः उपराष्ट्रपतिरूपेण निर्वाचितः भवेत् तर्हि सः तस्मिन् सदने तस्मिन् दिनाङ्के रिक्तीकृतस्थानः मन्येत, यस्मिन् सः उपराष्ट्रपतिरूपेण स्वपदं आरोहति।

(३) सः एव जनः उपराष्ट्रपतिरूपेण निर्वाचने पात्रं भवेत् यः—

(क) भारतस्य नागरिकः अस्ति;

(ख) वयसः पञ्चत्रिंशत् वर्षाणि पूरितवान्; किं च

(ग) राज्यपरिषदः सदस्यरूपेण निर्वाचने अर्हः अस्ति।

(४) कोपि जनः उपराष्ट्रपतिरूपेण निर्वाचने पात्रं न भवेत् यदि सः भारतशासनस्य, कस्यापि राज्यशासनस्य वा अधीनं उक्तशासनानां अन्यतमस्य नियन्त्रणे स्थितस्य कस्यापि स्थानीयस्य अन्यस्य वा प्राधिकारिणः अधीनं किमपि लाभस्य पदं धारयति।

**स्पष्टीकरणम्**—कोपि जनः लाभस्य किमपि पदं धारयति इति अस्य अनुच्छेदस्य प्रयोजनानां अर्थे न मन्येत अस्मात् एव हेतोः, यत् सः सङ्घस्य राष्ट्रपतिः उपराष्ट्रपतिः वा अस्ति अथवा कस्यापि राज्यस्य राज्यपालः [2][* * *] अस्ति, अथवा सङ्घस्य, कस्यापि राज्यस्य वा मन्त्री अस्ति।

---

१. संविधानस्य (एकादशं संशोधनं) अधिनियमः, १९६१ इत्यस्य २-अनुभागेन "उभय सदनयोः सदस्यैः संयुक्ताधिवेशने समवेतैः" इति एतस्मात् प्रति एतत् संनिवेशितम्।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९ अनुभागेन अनुसूच्या च "राज्यप्रमुखो वा उपराज्यप्रमुखो वा" इत्येते शब्दाः विलोपिताः।

६७. उपराष्ट्रपतिः स्वपदं पञ्चवर्षावधि तस्मात् दिनाङ्कात् धारयेत् यस्मिन् सः तत् पदं आरोहति— **उपराष्ट्रपतेः पदावधिः ।**

परन्तु—

(क) उपराष्ट्रपतिः राष्ट्रपतिं सम्बोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन पदं त्यक्तुं क्षमते;

(ख) उपराष्ट्रपतिः राज्यसभायाः तदानीन्तनानां समस्तसदस्यानां बहुमतेन पारितेन, लोकसभया सम्मतेन च राज्यसभायाः सङ्कल्पेन स्वपदात् अपसारितः भवेत्; किन्तु अस्य खण्डस्य प्रयोजनार्थं कोपि सङ्कल्पः तावत् न प्रस्तावितः स्यात् यावत् न्यूनात् न्यूनं चतुर्दशदिनानां सूचना तत् सङ्कल्पप्रस्तावस्य अभिप्रायविषयिणी प्रदत्ता न स्यात् ।

(ग) उपराष्ट्रपतिः स्वपदावधेः समाप्तौ अपि तावत् पदधारणं अनुवर्तयेत् यावत् अस्य उत्तराधिकारी पदं न आरोहति ।

६८. (१) उपराष्ट्रपतेः पदस्य अवधेः समाप्त्या कृतायाः रिक्ततायाः पूर्तये निर्वाचनं अवधेः समाप्तेः पूर्वं पूर्णं भवेत् । **उपराष्ट्रपतिपदस्य रिक्ततापूर्तये निर्वाचनस्य कालः; आकस्मिकरिक्तता पूर्तये निर्वाचितजनस्य पदावधिश्च ।**

(२) उपराष्ट्रपतेः मृत्युना, पदत्यागेन, अपसारणेन अन्येन हेतुना वा भवन्त्याः तस्य पदस्य रिक्ततायाः पूर्तये निर्वाचनं रिक्ततादिनाङ्कात् परं यथाशक्यं अविलम्बेन प्रवर्तितं भवेत्; किंच रिक्तता पूर्त्यर्थं निर्वाचितः सः जनः ६७-तमानुच्छेदस्य अनुबन्धानां अधीनं पञ्चानां वर्षाणां पूर्णावधि पदधारणे स्वत्ववान् भवेत् तस्मात् दिनाङ्कात् यस्मिन् सः स्वपदं आरोहति ।

६९. प्रत्येकं उपराष्ट्रपतिः स्वपदे आरोहणात् प्राक् राष्ट्रपतेः समक्षं, तेन तदर्थं नियुक्तस्य कस्यचित् जनस्य वा समक्षं शपथं प्रतिज्ञानं वा, निम्नलिखिते प्ररूपे कुर्यात्, तं च स्वहस्ताङ्कितं कुर्यात्— **उपराष्ट्रपतेः शपथः प्रतिज्ञानं वा ।**

"अहं अमुकः $\frac{\text{ईश्वरस्य नाम्ना शपे}}{\text{सत्यनिष्ठया प्रतिजाने}}$ यद् अहं विधिना स्थापितं भारतस्य संविधानं प्रति श्रद्धां, निष्ठां च धारयिष्ये, तथा च अहं श्रद्धासमन्वितं निर्वर्तयिष्ये तस्य पदस्य कर्त्तव्यानि यद् अहं आरोढुं उद्यतः अस्मि"।

७०. संसद् अस्मिन् अध्याये अकृतोपबन्धायां कस्यामपि आकस्मिकतायां तादृशं उपबन्धं कर्तुं क्षमते यादृशं सा राष्ट्रपतेः कृत्यानां निर्वहणाय उचितं मन्येत। **अन्यासु आकस्मिकतासु राष्ट्रपतेः कृत्यानां निर्वहणम् ।**

[1][७१. (१) राष्ट्रपतेः उपराष्ट्रपतेः वा निर्वाचनात् उत्पन्नानां तेन संसक्तानां वा सर्वासां शङ्कानां, सर्वेषां विवादानां च मीमांसा, विनिश्चयश्च उच्चतमन्यायालयेन क्रियेत; तस्य निर्णयश्च अन्तिमः भवेत् । **राष्ट्रपतेः उपराष्ट्रपतेः वा निर्वाचनेन सम्बद्धाः संसक्ताः वा विषयाः ।**

(२) यदि कस्यापि जनस्य राष्ट्रपतिरूपेण उपराष्ट्रपतिरूपेण वा निर्वाचनं उच्चतमन्यायाग्नयेन शून्यं घोषितं भवति तर्हि यथायथं राष्ट्रपतेः उपराष्ट्रपतेः वा पदस्य शक्तीनां कर्त्तव्यानां च प्रयोगे पालने च तेन कृतानि कार्याणि उच्चतमन्यायालयस्य निर्णयस्य दिनाङ्के तत् पूर्वं वा तस्याः घोषणायाः हेतोः अमान्यानि न भवेयुः ।

---

१. अनुक्रमशः संविधानस्य (नवत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य २-अनुभागेन (१०-८-१९७५ दिनाङ्कात् प्रवर्तमानप्रभावेण), संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य १०-अनुभागेन (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण च) संशोधितः एषः अनुच्छेदः इदं रूपं प्राप्तवान् ।

(३) संसद् अस्य संविधानस्य उपबन्धानां अधीनं राष्ट्रपतेः उपराष्ट्रपतेः वा निर्वाचनेन सम्बद्धं तेन संसक्तं वा कमपि विषयं विधिना विनियमयितुं क्षमते ।

(४) राष्ट्रपतेः उपराष्ट्रपतेः वा रूपेण कस्यापि जनस्य निर्वाचनं तस्य निर्वाचनं कुर्वतः निर्वाचकगणस्य सदस्येषु केनापि कारणेन विद्यमानायाः रिक्तेः आधारेण प्रश्नगतं न क्रियेत ।]

**क्षमादीनां अनुदाने, अवस्थाविशेषेषु च दण्डादेशानां निलम्बने, परिहारे, लघूकरणे वा राष्ट्रपतेः शक्तिः ।**

७२. (१) राष्ट्रपतिः कस्मिन् अपि अपराधे सिद्धदोषस्य कस्यापि जनस्य दण्डे क्षमाणां, प्रविलम्बनानां, विरामाणां, परिहाराणां वा अनुदानाय दण्डादेशस्य वा निलम्बनाय, परिहाराय लघूकरणाय वा तासु सर्वासु अवस्थासु शक्तिं भजेत—

(क) यासु दण्डः दण्डादेशः वा सेनान्यायालयेन दत्तः भवति;

(ख) यासु दण्डः दण्डादेशः वा तद्विषयेण सम्बन्धिनः कस्यापि विधेः विरुद्धे अपराधे भवति यस्मिन् सङ्घस्य कार्यपालिका शक्तिः विस्तृता भवति;

(ग) यासु च मृत्युदण्डादेशः भवति ।

(२) सेनान्यायालयेन पारितस्य दण्डादेशस्य निलम्बनाय परिहाराय, लघूकरणाय वा सङ्घस्य स शस्त्रबलानां कस्मिन् अपि अधिकारिणे न्यस्तां शक्तिं (१) खण्डस्य (क) उपखण्डगतं किमपि न प्रभावयेत् ।

(३) तदानीं प्रवृत्तस्य कस्यापि विधेः अधीनं राज्यस्य राज्यपालेन [1][* * *] प्रयुज्यमानां मृत्युदण्डादेशस्य निलम्बने, परिहाने, लघूकरणे वा शक्तिं (१) खण्डस्य (क) उपखण्डगतं किमपि न प्रभावयेत् ।

**सङ्घस्य कार्यपालिकायाः शक्तेः विस्तारः ।**

७३. (१) अस्य संविधानस्य उपबन्धानां अधीनं सङ्घस्य कार्यपालिका शक्तिः—

(क) यान् विषयान् उद्दिश्य संसद् विधीनां प्रणयने शक्तिं भजते तेषु; किं च

(ख) भारतस्य शासनेन कस्यापि सन्धेः, समयस्य वा आश्रयेण प्रयोक्तव्यानां अधिकाराणां, प्राधिकाराणां अधिकारितायाः प्रयोगे,

विस्तृता भवेत्—

परन्तु (क) उपखण्डे निर्दिष्टा कार्यपालिकाशक्तिः अस्मिन् संविधाने, संसदा कृते कस्मिन् अपि विधौ वा, स्पष्टं उपबन्धितं यदि स्यात् तद् विहाय [2][* * *] कस्मिन् अपि राज्ये तेषु विषयेषु विस्तृता न भवेत् यान् उद्दिश्य राज्यस्य विधानमण्डलं अपि विधीनां प्रणयने शक्तिं भजते ।

(२) संसद् यावत् अन्यथा उपबन्धं न करोति तावत् राज्यं राज्यस्य च कोपि अधिकारी, प्राधिकारी वा, एतद् अनुच्छेदे किमपि सत्यपि, यादृशानां प्रयोगं तद् राज्यं वा, सः अधिकारी, प्राधिकारी वा अस्य संविधानस्य प्रारम्भात् अव्यहित पूर्वं कर्तुं अक्षमत, तादृशानां कार्यपालिकायाः शक्तेः कृत्यानां वा प्रयोगं अनुवर्तयेत् तेषु विषयेषु, यान् उद्दिश्य तस्मै राज्याय विधीनां प्रणयने संसद् शक्तिं भजते ।

## मन्त्रि-परिषत्

**राष्ट्रपतये साहाय्यं मन्त्रणां च दातुं मन्त्रि-परिषत् ।**

७४. [3][(१) राष्ट्रपतये स्वकृत्यानां प्रयोगे साहाय्यं मन्त्रणां च दातुं मन्त्रि-परिषद् भवेत् यस्याः प्रमुखश्च प्रधानमन्त्री भवेत्; राष्ट्रपतिश्च तादृशीं मन्त्रणां अनुसृत्य कार्यं कुर्यात् ।]

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राज्यप्रमुखः वा" इत्येतौ शब्दौ लोपितौ ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः (क) भागे (ख) भागे वा उल्लिखिते" इत्येते शब्दाः अक्षरौ च लोपिताः ।

३. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य १३-अनुभागेन (१) खण्डात् प्रति एषः खण्डः संनिवेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

[1][परन्तु राष्ट्रपतिः मन्त्रिपरिषदः तन्मन्त्रणाविषये, साधारणतया अन्यथा वा पुनर्विचारणाय अपेक्षितुं क्षमते; तथा च सः एवं पुनर्विचारात्परं प्रदत्तां मन्त्रणां अनुसृत्य कार्यं कुर्यात् ।]

(२) राष्ट्रपतये मन्त्रिभिः काचिन्मन्त्रणा दत्ता न वा, यदि च दत्ता तर्हि का सा मन्त्रणा इति प्रश्नस्य कस्मिन् अपि न्यायालये मीमांसा न क्रियेत ।

**मन्त्रिसम्बन्धिनः अन्ये उपबन्धाः ।**

७५. (१) राष्ट्रपतिः प्रधानमन्त्रिणः नियुक्तिं कुर्यात्, अन्येषां मन्त्रिणां नियुक्तिं च राष्ट्रपतिः प्रधानमन्त्रिणः मन्त्रणां अनुसृत्य कुर्यात् ।

(२) मन्त्रिणः राष्ट्रपतेः प्रसादपर्यन्तं स्वपदानि धारयेयुः ।

(३) मन्त्रिपरिषत् लोकसभां प्रति समष्टिरूपेण उत्तरदायिनी भवेत् ।

(४) कस्यापि मन्त्रिणः स्वपदारोहणात् प्राक् राष्ट्रपतिः तेन पदस्य गोपनीयतायाश्च तृतीयानुसूच्यां तदर्थं निर्दिष्टे प्ररूपे शपथं कारयेत् ।

(५) यः मन्त्री निरन्तरं षण्णां मासानां कस्मिन् अपि कालावधौ संसदः अन्यतरस्य कस्यापि सदनस्य सदस्यः न भवेत् सः तस्य कालावधेः समाप्तौ मन्त्रित्वात् प्रविरमेत् ।

(६) मन्त्रिणां वेतनानि, भक्तानि च तादृशानि भवेयुः यादृशानि संसत् काले काले विधिना अवधारयेत्; अथ च यावत् संसद् एवं न अवधारयेत् तावत् तानि तथा भवेयुः यथा द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति ।

## भारतस्य महान्यायवादी

**भारतस्य महान्यायवादी ।**

७६. (१) राष्ट्रपतिः उच्चतमन्यायालयस्य न्यायाधीशरूपेण नियुक्तेः अर्हं कमपि जनं भारतस्य महान्यायवादित्वेन नियोजयेत् ।

(२) महान्यायवादिनः एतत् कर्त्तव्यं भवेत् यत् सः भारतस्य शासनाय तादृशेषु विधिसम्बन्धिविषयेषु मन्त्रणायाः प्रदानं, तादृशानां विधिरूपाणां अन्येषां कर्त्तव्यानां पालनं च कुर्यात् यादृशानि काले काले तस्मै राष्ट्रपतिना निर्दिष्टानि अर्पितानि वा स्युः तथा च सः अनेन संविधानेन तदधीनं वा तदानीं प्रवृत्तेन अन्येन केनापि विधिना तदधीनं वा आत्मनः प्रदत्तानि कृत्यानि निर्वहेत् ।

(३) स्वकर्त्तव्यानां पालनाय भारतस्य राज्यक्षेत्रे सर्वेषु न्यायालयेषु श्रावणे महान्यायवादिनः अधिकारः भवेत् ।

(४) महान्यायवादी राष्ट्रपतेः प्रसादपर्यन्तं स्वपदं धारयेत्; तादृशं पारिश्रमिकं च प्राप्नुयात् यादृशं राष्ट्रपतिः अवधारयेत् ।

## शासनस्य कार्यस्य सञ्चालनम्

**भारतशासनस्य कार्यसञ्चालनम् ।**

७७. (१) भारतशासनस्य सर्वा कार्यपालिका कृतिः राष्ट्रपतेः नाम्ना कृता इति कथ्येत ।

(२) राष्ट्रपतेः नाम्ना दत्तानां निष्पादितानां च आदेशानां, अन्येषां लिखितानां च अधिप्रमाणीकरणं तादृश्या रीत्या भवेत् यादृशी राष्ट्रपतिना प्रणेतव्येषु[2] नियमेषु विनिर्दिष्टा स्यात्; किंच एवं अधिप्रमाणितस्य आदेशस्य लिखितस्य वा विधिमान्यता न प्रश्नगता क्रियेत, यद् अयं आदेशः इदं लिखितं वा न प्रणीतं निष्पादितं वा राष्ट्रपतिना इति आधारेण ।

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः १९७८ इत्यस्य ११-अनुभागेन एतत् अन्तर्वेशितम् (२०-६-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. १९५८-वर्षस्य भारतस्य असाधारण राजपत्रस्य द्वितीये भागे तृतीये अनुभागे (द्वितीये) खण्डे १३१५ पृष्ठे प्रकटिता ३-११-१९५८ दिनाङ्किता सां० आ० २२९७ क्रमाङ्किता अधिसूचना द्रष्टव्या, काले काले यथासंशोधिता ।

(३) राष्ट्रपतिः भारतशासनकार्यस्य अधिकसौकर्येण निर्वर्तनाय, मन्त्रिणां मध्ये उक्तकार्यस्य आवण्टनाय च नियमान् प्रणयेत् ।

[1][(४) * * * * ]

**राष्ट्रपतये सूचनादि विषयकाणि प्रधान-मन्त्रिणः कर्त्तव्यानि ।**

७८. (क) सङ्घकार्याणां प्रशासनविषये मन्त्रिपरिषदः सर्वेषां विनिश्चयानां, विधानार्थं प्रस्थापनानां च राष्ट्रपतये संसूचनम्;

(ख) सङ्घकार्याणां प्रशासनविषये, विधानार्थं प्रस्थापनाविषये च राष्ट्रपतये तादृशं सूचनं यादृशं स अपेक्षेत; किंच

(ग) यस्मिन् विषये केनापि मन्त्रिणा विनिश्चयः कृतः किन्तु मन्त्रिपरिषदा विचारः कृतः नास्ति, तस्य कस्यापि विषयस्य मन्त्रिपरिषदः विचारार्थं (तस्याः) पुरतः स्थापनं यदि राष्ट्रपतिः एवं अपेक्षते,

इत्येतत् प्रधानमन्त्रिणः कर्त्तव्यं भवेत् ।

## अध्यायः २—संसद्

### साधारणम्

**संसदः सङ्घटनम् ।**

७९. सङ्घाय एका संसद् स्यात् या राज्यसभा लोकसभा च इति ज्ञेयाभ्यां सदनाभ्यां राष्ट्रपतिना च सम्भूय भवेत् ।

**राज्यसभायाः संरचना ।**

८०. (१) [2]-[[3]* * * राज्य सभा]—

(क) (३) खण्डस्य उपबन्धानां अनुसारेण राष्ट्रपतिना कृतनामनिर्देशनैः द्वादशभिः सदस्यैः; तथा च

(ख) अष्टत्रिंशदधिकद्विशत (२३८) सङ्ख्यकेभ्यः अनधिकैः राज्यानां, [4][सङ्घराज्यक्षेत्राणां च] प्रतिनिधिभिः,

सम्भूय भवेत् ।

(२) राज्यानां [4][सङ्घराज्यक्षेत्राणां च] प्रतिनिधिभिः पूरणीयानां राज्यसभायाः स्थानानां आवण्टनं चतुर्थानुसूचीस्थानां तद्विषयकाणां उपबन्धानां अनुसारेण भवेत् ।

(३) (१) खण्डस्य (क) उपखण्डाधीनं राष्ट्रपतिना कृतनामनिर्देशनाः सदस्याः निम्नलिखितविषयाणां विशेषज्ञानिनः व्यावहारिकानुभववन्तश्च भवेयुः, यथा—

साहित्यं, विज्ञानं, कला, सामाजिकसेवा च ।

(४) राज्यसभायाः कृते, प्रत्येकराज्यस्य प्रतिनिधयः [5][* * *] तद्राज्यस्य राज्यविधानसभायाः निर्वाचितैः सदस्यैः आनुपातिकप्रतिनिधित्वपद्धतिं अनुसृत्य एकलसङ्क्रमणीयमतेन निर्वाचिताः भवेयुः ।

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य १४-अनुभागेन (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) (४) खण्डः अन्तर्वेशितः आसीत्, संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य १२-अनुभागेन (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) लोपितश्च ।

२. संविधानस्य (पञ्चत्रिंशत्तमं संशोधनं) अधिनियमः, १९७४ इत्यस्य ३-अनुभागेन "राज्यपरिषत्" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१-३-१९७५ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५-इत्यस्य पञ्चमेन (५) अनुभागेन "दशमानुसूच्याः ४-प्रच्छेदस्य उपबन्धानां अधीनं" इत्येते शब्दाः लोपिताः (२६-४-१९७५ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

४. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य ३-अनुभागेन एते शब्दाः परिवर्धिताः ।

५. उपर्युक्ताधिनियमस्य ३-अनुभागेन "प्रथमानुसूच्याः (क) भागे (ख) भागे वा उल्लिखितस्य" इति लोपितः ।

(५) राज्यसभायाः कृते [1][सङ्घस्य राज्यक्षेत्राणां] प्रतिनिधयः तादृश्या रीत्या वृताः स्युः यादृशीं संसद् विधिना विदधीत।

[2][८१. (१) [3][३३१-तमानुच्छेदस्य उपबन्धानां [4][* * *] अधीनं] लोकसभा— **लोकसभायाः संरचना।**

(क) राज्येषु प्रादेशिकनिर्वाचनक्षेत्रेभ्यः प्रत्यक्षं निर्वाचनेन वृतैः [5][पञ्चविंशत्यधिकपञ्चशत-सङ्ख्यकेभ्यः] अनधिकैः सदस्यैः; तथा च

(ख) सङ्घस्य राज्यक्षेत्राणां प्रतिनिधानार्थं, एतादृश्या रीत्या, या संसदा विधिना उपबन्धिता भवेत्, निर्वाचितैः [6][विंशति] सङ्ख्यकेभ्यः अनधिकैः सदस्यैः,

सम्भूय भवेत्।

(२) (१) खण्डस्य (क) उपखण्डस्य प्रयोजनानां कृते—

(क) प्रत्येकराज्याय आवंटितानां लोकसभास्थानानां सङ्ख्या तथा निर्धारिता भवेत् यथा तत्-सङ्ख्यायाः राज्यस्य जनसङ्ख्यायाश्च मध्ये अनुपातः सर्वेषु राज्येषु यथासाध्यं एकविधः भवेत्; तथा च

(ख) प्रत्येकराज्यं तादृश्या रीत्या प्रादेशिकनिर्वाचनक्षेत्रेषु विभज्येत यत् प्रत्येकस्य निर्वाचन-क्षेत्रस्य जनसङ्ख्यायाः तथा च तत्प्रति आवण्टितानां स्थानानां सङ्ख्यायाश्च मध्ये अनुपातः समस्त-राज्ये यथासाध्यं एकविधः भवेत्—

[7][परन्तु एतत्खण्डस्य (क) उपखण्डस्य उपबन्धाः कस्मै अपि राज्याय लोकसभास्थानानां आवण्टनस्य प्रयोजनानां कृते तावत् प्रवृत्ताः न भवेयुः यावत् तस्य राज्यस्य जनसङ्ख्या षष्टिलक्षसङ्ख्यातः अधिकतरा न भवति।]

(३) अस्मिन् अनुच्छेदे "जनसङ्ख्या" शब्दस्य अर्थे सा जनसङ्ख्या ग्राह्या या अभिनिश्चिता तस्यां अन्तिमायां पूर्ववृत्तायां जनगणनायां यस्याः सुसम्बद्धाः अङ्काः प्रकाशिताः—

[8][परन्तु एतस्मिन् खण्डे "अन्तिमायां पूर्ववृत्तायां जनगणनायां यस्याः सुसम्बद्धाः अङ्काः प्रकाशिताः" इतिकथनं प्रति निर्देशस्य तावत् १९७१-तम वर्षस्य जनगणनां प्रति निर्देशः इति अर्थः ग्राह्यः यावत् २०००-तम वर्षानन्तरं कृतायाः प्रथमजनगणनायाः सुसम्बद्धाः अङ्काः प्रकाशिताः न भवेयुः।]

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य ३-अनुभागेन "प्रथमानुसूच्याः ग भागे उल्लि-खितानां राज्यानां" इत्येतस्मात् प्रति एतत् संनिवेशितम्।

२. उपर्युक्ताधिनियमस्य ४-अनुभागेन ८१-तम, ८२-तम अनुच्छेदाभ्यां प्रति एतौ अनुच्छेदौ संनिवेशितौ।

३. संविधानस्य (पञ्चत्रिंशत्तमं संशोधनं) अधिनियमः, १९७४-इत्यस्य ४-अनुभागेन "३३१-तमानुच्छेदस्य उप-बन्धानां अधीनं" इत्येतस्मात् प्रति एतत् संनिवेशितं (१-३-१९७५ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

४. संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ५-अनुभागेन "दशमानुसूच्याः ४-प्रच्छेदस्य च" इत्येते शब्दाः अङ्काश्च लोपिताः (२६-४-१९७५ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

५. संविधानस्य (एकत्रिंशत्तमं संशोधनं) अधिनियमः, १९७३-इत्यस्य २-अनुभागेन "पञ्चशतसदस्येभ्यः" इत्येत-स्मात् प्रति एतत् संनिवेशितम्।

६. उपर्युक्ताधिनियमस्य २-अनुभागेन "पञ्चविंशति सदस्येभ्यः" इत्येतस्मात् प्रति एतत् संनिवेशितम्।

७. उपर्युक्ताधिनियमस्य २-अनुभागेन अन्तर्वेशितम्।

८. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य १५-अनुभागेन एतत् अन्तर्वेशितं (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

**प्रत्येकजनगणनायाः पश्चात् पुनः समायोजनम् ।**

८२. प्रत्येकजनगणनायाः समाप्तौ राज्येषु लोकसभास्थानानां आवंटनस्य प्रत्येकराज्यस्य प्रादेशिक-निर्वाचन-क्षेत्रेषु विभाजनस्य च तादृशेन प्राधिकारिणा तादृश्या रीत्या च पुनः समायोजनं क्रियेत यादृशेन संसद् विधिना अवधारयेत्—]

परन्तु तादृशं पुनः समायोजनं लोकसभायाः प्रतिनिधित्वे तावत् प्रभावं न आपादयेत् यावत् तदानीं विद्यमानायाः लोकसभायाः विघटनं न भवति—

[1][अपरं च, एतादृशं पुनः समायोजनं तस्मात् दिनाङ्कात् प्रभावं आपादयेत् यद् राष्ट्रपतिः आदेशेन विनिर्दिशेत्; तथा च यावत् तादृशं पुनः समायोजनं प्रभावं न आपादयति तावत् लोकसभायाः कृते निर्वाचनं तेषां निर्वाचनक्षेत्राणां आधारेण भवेत् यानि तादृशात् पुनः समायोजनात् पूर्वं विद्यमानानि स्युः—

तथैव च यावत् २०००-तम वर्षानन्तरं कृतायाः प्रथमायाः जनगणनायाः सुसम्बद्धाः अङ्काः न प्रकाशिता भवेयुः तावत् एतद् अनुच्छेदस्य अधीनं राज्येभ्यः लोकसभास्थानानां आवंटनस्य प्रत्येकराज्यस्य प्रादेशिकक्षेत्रेषु विभाजनस्य च पुनः समायोजनं आवश्यकं न भवेत् ।]

**संसदः सदनयोः अवधिः ।**

८३. (१) राज्यसभायाः विघटनं न भवेत् किन्तु तस्याः सदस्यानां यावत् शक्यं तृतीयांशः प्रत्येकद्वितीय-वर्षस्य समाप्तौ संसदा तद्विषये विधिना प्रणीतान् उपबन्धान् अनुसृत्य यथासम्भवं शीघ्रं निवर्तेत ।

(२) लोकसभा यदि पूर्वतरं न विघटिता स्यात् तर्हि स्वप्रथमाधिवेशनाय नियतात् दिनाङ्कात् [2][पञ्च-वर्षाणि] अनुवर्तेत न तदधिकं; [2][उक्तपञ्चवर्षकालावधेः] समाप्तिश्च लोकसभायाः विघटने परिणमेत्—

परन्तु यदा आपातस्य उद्घोषणा प्रवर्तमानास्ति तदा संसद् उक्तकालावधिं एकस्मिन् काले एकवर्षात् अनधिकं, तस्याः उद्घोषणायाः प्रवर्तनस्य पर्यवसानात् परं कस्यामपि अवस्थायां षण्मासावधिं अनतीत्य च, विधिना वर्धयितुं क्षमते ।

**संसदः सदस्यत्वस्य अर्हता ।**

८४. कोपि जनः संसदि कस्यापि स्थानस्य पूर्तये वरणार्हः केवलं तदा भवेत् यदा सः—

[3][(क) भारतस्य नागरिकः अस्ति तथा च निर्वाचनायोगेन एतदर्थं प्राधिकृतस्य कस्यापि जनस्य समक्षं एतत् प्रयोजनस्य कृते तृतीयानुसूच्यां उल्लिखिते प्ररूपे शपथं, प्रतिज्ञानं वा कुर्यात् तं च स्वहस्ताङ्कितं कुर्यात्; ]

(ख) राज्यसभायाः स्थानाय अन्यूनत्रिंशद्वर्षवयस्कः, लोकसभास्थानाय च अन्यूनपञ्चविंशतिवर्षवयस्कः विद्यते;

(ग) तादृशीः अन्याः अर्हताः धारयति यादृश्यः संसदा तद्विषये कृतेन केनापि विधिना तदधीनं वा तदर्थं विहिताः भवेयुः ।

**संसदः सत्राणि, सत्राणां**

[4][८५. (१) राष्ट्रपतिः काले काले संसदः प्रत्येकं सदनं तादृशे काले तादृशे स्थाने च अधिवेशनाय

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य १६-अनुभागेन एतत् अन्तर्वेशितम् (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य १३-अनुभागेन "षड्वर्षाणि" इत्येतस्मात् प्रति "पञ्चवर्षाणि" इति तथा च "उक्तषड्वर्षकालावधेः" इत्येतस्मात् प्रति "उक्तपञ्चवर्षकालावधेः" इत्येतत् संनिवेशितम् (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण); संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य १७-अनुभागेन "षड्वर्षाणि इति" "पञ्चवर्षान्" इत्येतस्मात् प्रति तथा च "उक्त षड्वर्षकालावधेः" इति "उक्तपञ्चवर्षकालावधेः" इत्येतस्मात् प्रति संनिवेशितं आसीत् (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (षोडशं संशोधनं) अधिनियमः, १९६३-इत्यस्य ३-अनुभागेन (क) खण्डात् प्रति एषः खण्डः संनिवेशितः ।

४. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य ६-अनुभागेन ८५ अनुच्छेदात् प्रति एषः अनुच्छेदः संनिवेशितः ।

आहूतं कुर्यात् यादृशं सः युक्तं मन्येत; किन्तु ईदृशस्य एकस्य सत्रस्य अन्तिमोपवेशनदिनाङ्कस्य तदनन्तरं भाविनः सत्रस्य प्रथमोपवेशनाय नियतदिनाङ्कस्य च मध्ये षण्णां मासानां व्यवधानं न भवेत्। **अवसानं, विघटनं च।**

(२) राष्ट्रपतिः काले काले—

(क) सदनयोः, तयोः अन्यतरस्य वा, सत्रावसानं कर्तुं;

(ख) लोक सभायाः विघटनं कर्तुं च,]

**क्षमते।**

**राष्ट्रपतेः सदने प्रति अभिभाषणे सन्देशप्रेषणे च अधिकारः।**

८६. (१) राष्ट्रपतिः संसदः अन्यतरे सदने, सहसमवेतयोः सदनयोः वा अभिभाषणं कर्तुं क्षमते; तथा च तदर्थं सदस्यानां उपस्थितिं अपेक्षितुं क्षमते।

(२) राष्ट्रपतिः संसदः अन्यतरत् सदनं प्रति संसदि तदानीं लम्बितविधेयकं उद्दिश्य, अन्यथा वा, सन्देशान् प्रेषयितुं क्षमते; तथा च यत् सदनं प्रति कोपि सन्देशः एवं प्रेषितः अस्ति तत्सदनं तत्सन्देशेन विचाराय अपेक्षितं कमपि विषयं यथानुकूलं शीघ्रं विचारयेत्।

**संसदः प्रत्येकसत्रारम्भे राष्ट्रपतेः विशेषाभिभाषणम्।**

८७. (१) राष्ट्रपतिः [1][प्रत्येकं साधारणनिर्वाचनात् परं लोकसभायाः प्रथमसत्रस्य] आरम्भे एकत्र समवेते संसदः सदनद्वये अभिभाषणं कुर्यात्; तथा च संसदं तस्याः आह्वानस्य कारणानि ज्ञापयेत्।

(२) एतादृशे अभिभाषणे: निर्दिष्टानां विषयाणां चर्चार्थं समयं नियन्तुं [2][* * *] प्रत्येकसदनस्य प्रक्रियायाः विनियमनं कुर्वद्भिः नियमैः उपबन्धः कृतः भवेत्।

**मन्त्रिणां, महान्यायवादिनश्च सदनयोः सम्बन्धिनः अधिकाराः।**

८८. भारतस्य प्रत्येकं मन्त्री, महान्यायवादी च अन्यतरस्मिन् सदने, सदनयोः कस्मिन् अपि संयुक्तोपवेशने च तथा संसदः कस्यामपि समितौ यस्यां सः नामनिर्दिष्टः सदस्यः भवेत्, तस्यां भाषणाय अन्यथा च कार्यप्रवृत्तिषु भागग्रहाणय अधिकारं भजेत किन्तु अस्य अनुच्छेदस्य आश्रयेण सः मतदाने स्वत्ववान् न भवेत्।

## संसदः अधिकारिणः

**राज्यसभायाः सभापतिः, उपसभापतिश्च।**

८९. (१) भारतस्य उपराष्ट्रपतिः पदेन राज्यसभायाः सभापतिः भवेत्।

(२) राज्यसभा स्वीयं एकं सदस्यं उपसभापतिरूपेण यथासम्भवं शीघ्रं वृणीत, तथा च यदा यदा उपसभापतेः पदं रिक्तं भवति तदा तदा सा सभा अन्यं सदस्यं स्वीयउपसभापतिरूपेण वृणीत।

**उपसभापतेः पदस्य रिक्तता, पदत्यागः, पदात् अपसारणं च।**

९०. राज्यसभायाः उपसभापतिरूपेण पदं धारयन् सदस्यः—

(क) स्वपदं रिक्तं कुर्यात् यदि सः तस्या सभायाः सदस्यत्वात् विरमति;

(ख) सभापतिं सम्बोध्य स्वहस्ताङ्कितेन लेखेन स्वपदं कदापि त्यक्तुं क्षमते; तथा च

(ग) राज्यसभायाः तदानीन्तनानां समस्तसदस्यानां बहुमतेन पारितेन तत् सभायाः सङ्कल्पेन स्वपदात् अपसारितुं शक्यते—

परन्तु (ग) खण्डस्य प्रयोजनाय कोपि सङ्कल्पः तावत् प्रस्तावितः न भवेत् यावत् तत्सङ्कल्प प्रस्तावाशयस्य न्यूनात् न्यूनं चतुर्दशानां दिनानां सूचना न दत्ता भवेत्।

**उपसभापतेः अन्यस्य वा जनस्य सभापतिपदस्य कर्त्तव्यानां पालने सभापतिरूपेण कार्यकरणे वा शक्तिः।**

९१. (१) यदा सभापतेः पदं रिक्तं अस्ति तदा, अथवा यस्मिन् काले उपराष्ट्रपतिः राष्ट्रपतिरूपेण कार्याणि कुर्वन्, राष्ट्रपतेः कृत्यानि निर्वहन् च विद्यते, तस्मिन् कस्मिन् अपि कालावधौ, उपसभापतिना तत् पदस्य कर्तव्यानि पालितानि भवेयुः, अथवा यदा उपसभापतेः पदं अपि रिक्तं अस्ति तदा राज्यसभायाः तादृशेन सदस्येन पदस्य कर्तव्यानि पालितानि भवेयुः यादृश राष्ट्रपतिः तत् प्रयोजनाय नियोजयेत्।

---

१. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य ७-अनुभागेन "प्रत्येकसत्रस्य" इत्येतस्मात् प्रति एतत् संनिवेशितम्।

२. उपर्युक्ताधिनियमस्य ७-अनुभागेन "तस्य सदनस्य अन्य कार्यात् एतादृश्याश्चर्चायाः पूर्ववर्तितायै च" इत्येते शब्दाः लोपिताः।

(२) राज्यसभायाः कस्मिन् अपि उपवेशने सभापतेः अनुपस्थितौ उपसभापतिः अथवा तस्यापि अनुपस्थितौ तादृशः जनः यादृशः तत् सभायाः प्रक्रियायाः नियमैः अवधारितः भवेत्, अथवा यदि तादृशः अपि जनः अनुपस्थितः तर्हि अन्यः तादृशः जनः यादृशः तया सभया अवधारितः भवेत्, सभापतिरूपेण कार्यं कुर्यात् ।

**सभापतिः, उपसभापतिः वा पीठासीनः न स्यात् यदा तस्य स्वपदात् अपसारणाय सङ्कल्पः विचाराधीनः अस्ति ।**

९२. (१) राज्यसभायाः कस्मिन् अपि उपवेशने यदा उपराष्ट्रपतेः स्वपदात् अपसारणाय कोपि सङ्कल्पः विचाराधीनः अस्ति तदा सभापतिः, अथवा यदा उपसभापतेः स्वपदात् अपसारणाय कोपि सङ्कल्पः विचाराधीनः अस्ति तदा उपसभापतिः उपस्थितोपि पीठासीनः न भवेत्; किंच ९१-तमानुच्छेदस्य (२) खण्डस्य उपबन्धाः प्रत्येकं तादृशं उपवेशनं तथैव विषयीकुर्युः यथा ते विषयीकुर्वन्ति तद् उपवेशनं यत्र यथायथं सभापतिः उपसभापतिः वा अनुपस्थितः भवति ।

(२) यदा उपराष्ट्रपतेः स्वपदात् अपसारणाय कश्चिदपि सङ्कल्पः विचाराधीनः अस्ति तदा सभापतिः राज्यसभायां भाषणाय अन्यथा तस्याः कार्यप्रवृत्तिषु भागग्रहणाय च अधिकारं भजेत; किन्तु १००-तमानुच्छेदे किमपि सत्यपि सः तादृशे सङ्कल्पे, तादृशीषु कार्यप्रवृत्तिषु वा अन्यस्मिन् कस्मिन् अपि विषये मतदाने कथमपि स्वत्ववान् न भवेत् ।

**लोकसभायाः अध्यक्षः उपाध्यक्षश्च ।**

९३. लोकसभा यथासम्भवं शीघ्रं स्वीयौ द्वौ सदस्यौ अनुक्रमेण अध्यक्षरूपेण, उपाध्यक्षरूपेण च वृणीत; तथा च यदा यदा अध्यक्षस्य, उपाध्यक्षस्य वा पदं रिक्तं भवति तदा तदा लोकसभा अन्यं सदस्यं यथायथं अध्यक्षरूपेण, उपाध्यक्षरूपेण वा वृणीत ।

**अध्यक्षस्य उपाध्यक्षस्य च पदरिक्तता, पदत्यागः, पदात् अपसारणं च ।**

९४. लोकसभायाः अध्यक्षरूपेण उपाध्यक्षरूपेण वा पदं धारयन् सदस्यः—

(क) स्वपदं रिक्तं कुर्यात् यदि सः लोकसभायाः सदस्यत्वात् प्रविरमेत्;

(ख) यदि तादृशः सदस्यः अध्यक्षः अस्ति तर्हि उपाध्यक्षं, यदि च तादृशः सदस्यः उपाध्यक्षः अस्ति तर्हि अध्यक्षं, सम्बोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वपदं कदापि त्यक्तुं क्षमते; तथा च

(ग) तदानीन्तनानां लोकसभायाः समस्तसदस्यानां बहुमतेन पारितेन तस्याः सभायाः सङ्कल्पेन स्वपदात् अपसारितुं शक्यते —

परन्तु (ग) खण्डस्य प्रयोजनाय कोपि सङ्कल्पः तावत् प्रस्तावितः न भवेत् यावत् तत्सङ्कल्पप्रस्तावाशयस्य न्यूनात् न्यूनं चतुर्दशदिनानां सूचना न दत्ता भवेत्;

अपरं च यदा यदा लोकसभा विघटिता भवेत् तदा तदा अध्यक्षः स्वपदं तद्विघटनात् परं लोकसभायाः प्रथमोपवेशनस्य अव्यवहितपूर्वकालपर्यन्तं, न रिक्तीकुर्यात् ।

**उपाध्यक्षस्य, अन्यस्य वा जनस्य अध्यक्षपदस्य कर्त्तव्यपालने अध्यक्षरूपेण कार्यकरणे वा शक्तिः ।**

९५. (१) यदा अध्यक्षस्य पदं रिक्तं अस्ति तदा उपाध्यक्षेण, यदि च उपाध्यक्षस्यापि पदं रिक्तं अस्ति तर्हि लोकसभायाः तादृशेन सदस्येन तत्पदस्य कर्तव्यानि पालितानि भवेयुः यादृशं राष्ट्रपतिः तत्प्रयोजनाय नियोजयेत् ।

(२) लोकसभायाः कस्मिन् अपि उपवेशने अध्यक्षस्य अनुपस्थितौ उपाध्यक्षः, तस्यापि च अनुपस्थितौ तादृशः जनः यादृशः तत् सभायाः प्रक्रियायाः नियमैः अवधारितः भवेत्, यदि तादृशोपि जनः अनुपस्थितः तर्हि अन्यः तादृशः जनः, यादृशः तद्सभया अवधारितः भवेत्, अध्यक्षरूपेण कार्यं कुर्यात् ।

**अध्यक्षः, उपाध्यक्षः वा पीठासीनः न स्यात् यदा तस्य स्वपदात् अपसारणाय सङ्कल्पः विचाराधीनः अस्ति ।**

९६. (१) लोकसभायाः कस्मिन् अपि उपवेशने यदा अध्यक्षस्य स्वपदात् अपसारणाय कोपि सङ्कल्पः विचाराधीनः अस्ति तदा अध्यक्षः, अथवा यदा उपाध्यक्षस्य स्वपदात् अपसारणाय कोपि सङ्कल्पः विचाराधीनः अस्ति तदा उपाध्यक्षः, उपस्थितोपि पीठासीनः न भवेत्; किंच, ९५-तमानुच्छेदस्य (२) खण्डस्य उपबन्धाः प्रत्येकं तादृशं उपवेशनं तथैव विषयीकुर्युः यथा ते विषयीकुर्वन्ति तद् उपवेशनं यत्र यथायथं अध्यक्षः उपाध्यक्षः वा अनुपस्थितः भवतिः ।

(२) यदा अध्यक्षस्य स्वपदात् अपसारणाय कश्चिदपि सङ्कल्पः विचाराधीनः अस्ति तदा सः लोकसभायां भाषणाय, अन्यथा तस्याः कार्यप्रवृत्तिषु भागग्रहणाय च अधिकारं भजेत, किन्तु १००-तमानुच्छेदे किमपि सत्यपि सः तादृशे सङ्कल्पे, तादृशीषु कार्यप्रवृतिषु वा अन्यस्मिन् कस्मिन् अपि विषये प्रथमतः मतदाने तु स्वत्ववान् भवेत् किन्तु मतसाम्यदशायां स्वत्ववान् न भवेत् ।

९७. राज्यसभायाः सभापतये, उपसभापतये च, तथा च लोकसभायाः अध्यक्षाय उपाध्यक्षाय च तादृशानि वेतनानि, भक्तानि च सन्दत्तानि स्युः यादृशानि संसद् विधिना क्रमशः नियतानि कुर्यात्, तथा च यावत् तदर्थं उपबन्धः कृतः नास्ति तावत् तादृशानि वेतनानि भक्तानि च सन्दत्तानि स्युः यादृशानि द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति । **सभापतेः, उपसभापतेश्च अध्यक्षस्य, उपाध्यक्षस्य च वेतनानि, भक्तानि च ।**

९८. (१) संसदः प्रत्येकसदनस्य पृथक् सचिवीयः कर्मचारिवृन्दः भवेत्— **संसदः सचिवालयः ।**

परन्तु एतत्खण्डे कस्यापि कथनस्य एवं अर्थः न ग्राह्यः यद् एतत् संसदः उभयसदनसाधारणानां पदानां सर्जनं निवारयति इति ।

(२) संसद् विधिना अन्यतरस्य कस्यापि संसत्सदनस्य सचिवीये कर्मचारिवृन्दे नियोजनं, नियुक्तानां जनानां सेवाविषयकान् प्रतिबन्धान् च विनियमयेत् ।

(३) यावत् संसत् (२) खण्डाधीनं उपबन्धं न करोति, तावत् राष्ट्रपतिः यथायथं लोकसभायाः अध्यक्षेण, राज्यसभायाः सभापतिना वा परामृश्य लोकसभायाः राज्यसभायाः वा सचिवीये कर्मचारिवृन्दे नियोजनस्य नियुक्तानां जनानां सेवाविषयकाणां प्रतिबन्धानां च विनियमनाय नियमान् कर्तुं क्षमते; किंच एवं कृताः केपि नियमाः उक्तखण्डाधीनं प्रणीतस्य कस्यापि विधेः उपबन्धानां अधीनं कार्यक्षमाः भवेयुः ।

## कार्य-सञ्चालनम्

९९. संसदः अन्यतरस्य सदनस्य प्रत्येकं सदस्यः स्वस्थानग्रहणात् प्राक् राष्ट्रपतेः समक्षं, तेन तदर्थं नियुक्तस्य कस्यचित् जनस्य वा समक्षं तृतीयानुसूच्यां तदर्थं उल्लिखिते प्ररूपे शपथं, प्रतिज्ञानं वा कुर्यात् तं च स्वहस्ताङ्कितं कुर्यात् । **सदस्यानां शपथः प्रतिज्ञानं वा ।**

१००. (१) अस्मिन् संविधाने अन्यथा उपबन्धितं व्यतिरिच्य, अन्यतरस्य सदनस्य उपवेशने, सदनयोः संयुक्तोपवेशने वा, अध्यक्षात्, सभापतिरूपेण, अध्यक्षरूपेण वा कार्यकारिणः जनात्, व्यतिरिक्तानां उपस्थितानां, मतं ददतां च सदस्यानां बहुमतेन सर्वे प्रश्नाः अवधारिताः स्युः । **सदनयोः मतदानं, रिक्ततासु सतीषु अपि सदनानां कार्यकरणे शक्तिः, गणपूर्तिश्च ।**

सभापतिः, अध्यक्षः वा, तद्रूपेण कार्यकारी जनः वा प्रथमतः मतं न दद्यात् किन्तु मतसाम्यावस्थायां निर्णायकं मतं भजेत, प्रयुञ्जीत च ।

(२) संसदः अन्यतरत् किमपि सदनं तत्रत्यायाः सदस्यतायाः कस्यामपि रिक्ततायां सत्यामपि कार्यकरणे शक्तिं भजेत; तथा च कोपि एवं करणे अस्वत्ववान् जनः उपाविशत् मतं वा अदात्, अन्यथा वा कार्यप्रवृत्तिषु भागग्रहणं अकरोत् इति एतदनन्तरं ज्ञाते अपि संसदः कार्यप्रवृत्तयः विधिमान्याः भवेयुः ।

(३) यावत् संसद् विधिना अन्यथा न उपबन्धयति तावत् संसदः प्रत्येकसदनस्य अधिवेशनस्य घटनाय गणपूर्तिः तत् सदनस्य सदस्यानां पूर्णसङ्ख्यायाः दशमांशेन भवेत् ।

(४) यदि सदनस्य अधिवेशने कस्मिंश्चित् काले गणपूर्तिः नास्ति, तर्हि सभापतेः अध्यक्षस्य वा तद्रूपेण कार्यं कुर्वतः जनस्य वा एतत् कर्त्तव्यं भवेत् यत् यावत् गणपूर्तिः नास्ति तावत् सदनस्य स्थगनं, अधिवेशनस्य निलम्बनं वा कुर्यात् ।

## सदस्यानां निरर्हता

१०१. (१) कोपि जनः उभयोः सदनयोः सदस्यः न भवेत्, तथा च यः जनः उभयोः सदनयोः सदस्यः वृतः अस्ति तेन एकस्मिन्, अन्यस्मिन् वा सदने स्थानं रिक्तं कारयितुं संसद् विधिना उपबन्धं कुर्यात् । **स्थानानां रिक्तता ।**

(२) कोपि जनः संसदः, [1][* * *] कस्यचिद् राज्यस्य विधानमण्डलस्य सदनस्य च उभयोः सदस्यः न भवेत् तथा च यदि कोपि जनः संसदः [2][राज्यस्य] विधानमण्डलस्य सदनस्य च उभयोः निर्वाचितः सदस्यः अस्ति, तर्हि तस्य जनस्य संसदि स्थानं तादृशकालावधेः समाप्तेः परं रिक्तं भवेत् यादृशः राष्ट्रपतिना प्रणीतेषु[3] नियमेषु विनिर्दिष्टः स्यात्, यदि तेन राज्यस्य विधानमण्डले स्थानं पूर्वतः एव न त्यक्तं भवेत् ।

(३) यदि संसदः कस्यापि अन्यतरस्य सदनस्य सदस्यः—

(क) १०२-तमानुच्छेदस्य (१) खण्डे वर्णितानां निरर्हतानां अन्यतमया कयापि ग्रस्तः भवति, अथवा

[4][(ख) यथायथं सभापतिं, अध्यक्षं वा सम्बोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वस्थानं त्यजति, तस्य त्यागपत्रं च यथायथं सभापतिना अध्यक्षेण वा स्वीकृतं भवति,]

तर्हि तदुत्तरं तस्य स्थानं रिक्तं भवेत्—

[5][परन्तु (ख) उपखण्डे निर्दिष्टस्य त्यागपत्रस्य दशायां यदि समुपलब्धेन अवगमेन अन्यथा वा सः यादृशीं योग्यां मन्यते तादृश्याः मीमांसायाः परं च यथायथं सभापतिः, अध्यक्षः वा समाहितः भवेत् यत् तादृशं त्यागपत्रं स्वैच्छिकं, अवितथं वा नास्ति तर्हि सः तादृशं त्यागपत्रं न स्वीकुर्यात् ।]

(४) यदि संसदः अन्यतरस्य कस्यापि सदनस्य सदस्यः तत् सदनस्य अनुज्ञां विना तस्य सर्वेषु अधिवेशनेषु षष्टिदिनकालावधि अनुपस्थितः अस्ति, तर्हि तत् सदनं तस्य स्थानं रिक्तं इति घोषयितुं क्षमते—

परन्तु उक्तस्य षष्टिदिनकालावधेः सङ्गणनायां सः कालावधिः न गणितः भवेत् यस्मिन् सदनं अवसितसत्रं अस्ति, निरन्तरं दिनचतुष्टयात् अधिकं स्थगितं वा अस्ति ।

**सदस्यतायै निरर्हता ।** १०२. (१) सः कोपि जनः संसदः अन्यतरस्य कस्यापि सदनस्य सदस्यरूपेण वृतत्वे स्थितौ च निरर्हः भवेत्—

(क) यदि सः भारतशासनस्य कस्यापि राज्यशासनस्य वा अधीनं लाभस्य किमपि तत् पदं धारयति यत् तस्मात् पदात् अन्यत् अस्ति यस्य धारकः न निरर्हः भवति इति संसदा विधिना घोषितम्;

(ख) यदि सः विकृतचित्तः अस्ति, क्षमेण न्यायालयेन एवं घोषितश्च तिष्ठति;

(ग) यदि सः अनुन्मुक्तः ऋणशोधनाशक्तः अस्ति;

(घ) यदि सः भारतस्य नागरिकः नास्ति, अथवा वैदेशिकराज्यस्य स्वेच्छया अर्जितां नागरिकतां भजते, अथवा कमपि वैदेशिकाराज्यं प्रति निष्ठां अनुषक्तिं वा अभिस्वीकुर्वन् वर्तते;

(ङ) यदि संसदा प्रणीतेन केनापि विधिना तदधीनं वा एवं निरर्हः कृतः अस्ति ।

(२) कोपि जनः भारतशासनस्य कस्यापि राज्यशासनस्य वा अधीनं लाभस्य पदं धारयति इति एतदनुच्छेदस्य प्रयोजनानां अर्थे न मन्येत अस्मात् एव हेतोः यत् सः सङ्घस्य, तादृशस्य राज्यस्य वा मन्त्री अस्ति इति ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूचीस्थे (क) भागे (ख) भागे वा उल्लिखित" इत्येते शब्दाः अक्षरौ च लोपिताः ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "एतादृशराज्य" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

३. १९५० वर्षस्य २६-जानवरी दिनाङ्कितस्य भारतस्य असाधारण राजपत्रस्य ६७८-तमे पृष्ठे प्रकटिताः १९५०-वर्षीयाः सम सामयिकसदस्यत्वप्रतिषेध नियमाः द्रष्टव्याः ये फा० ४६/५०-ग अङ्कितया विधिमन्त्रालयस्य अधिसूचनया सह प्रकाशिताः ।

४. संविधानस्य (त्रयस्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७४ इत्यस्य २-अनुभागेन (ख) उपखण्डात् प्रति एषः उपखण्डः संनिवेशितः ।

५. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अन्तर्वेशितः ।

[1][१०३. (१) यदि कोपि प्रश्नः उत्पद्यते यत् संसदः अन्यतरस्य कस्यापि सदनस्य सदस्यः १०२-तमानुच्छेदस्य (१) खण्डे वर्णितानां निरर्हतानां अन्यतमां कामपि भजते न वा इति, तर्हि सः प्रश्नः राष्ट्रपतेः विनिश्चयार्थं निर्देश्यः तथा च तस्य विनिश्चयः अन्तिमः भवेत् । सदस्यानां निरर्हतानां प्रश्नेषु विनिश्चयः ।

(२) एतादृशे कस्मिन् अपि प्रश्ने विनिश्चयस्य प्रदानात् पूर्वं राष्ट्रपतिः निर्वाचनायोगस्य मतिं आप्नुयात्; तथा च तादृश्याः मतेः अनुसारेण कार्यं कुर्यात् ।]

१०४. यदि कोपि जनः ९९-तमानुच्छेदस्य अपेक्षाणां पूर्तेः पूर्वं, यदा सः जानाति यत् सः संसदः अन्यतरस्य कस्यापि सदनस्य सदस्यतायां न अर्हः अस्ति, निरर्हः कृतः अस्ति वा, संसदा प्रणीतस्य कस्यापि विधेः उपबन्धैः प्रतिषिद्धः अस्ति वा, तदा संसदः अन्यतरस्मिन् सदने उपविशति, मतं वा ददाति तर्हि यस्मिन् दिने सः उपविशति, मतं वा ददाति तं प्रत्येकं दिनं प्रति सङ्घदेयस्य ऋणस्य रूपेण प्रत्यादेयानां पञ्चशतरूप्यकाणां शास्तेः सः भागी भवेत् । ९९-तमानुच्छेदस्य अधीनं शपथस्य प्रतिज्ञानस्य वा करणात् पूर्वं अथवा अनर्हे, निरर्हीकृते वा, स्थानग्रहणात्, मतदानात् वा शास्तिः ।

## संसदः, तस्याः सदस्यानां च शक्तयः, विशेषाधिकाराः, उन्मुक्तयश्च

१०५. (१) एतत् संविधानस्य उपबन्धानां च संसदः प्रक्रियायाः विनियामकानां नियमानां स्थाय्यादेशानां च अधीनं संसदि भाषणस्य स्वातन्त्र्यं भवेत् । संसदः सदनयोः, तयोः सदस्यानां, तयोः समितीनां च शक्तयः, विशेषाधिकारदयश्च ।

(२) संसदः सदस्यस्य विरुद्धं संसदि, तस्याः कस्यामपि समित्यां वा, तस्य कामपि उक्तिं किमपि मतदानं वा उद्दिश्य कस्मिन् अपि न्यायालये कार्यप्रवृत्तिः न भवेत्; तथा च कस्यापि जनस्य संसदः अन्यतरस्य कस्यापि सदनस्य प्राधिकारैः तदधीनं वा कस्यापि प्रतिवेदनस्य, पत्रस्य, मतानां, कार्यप्रवृत्तीनां वा प्रकाशनं उद्दिश्य तादृशं दायित्वं न भवेत् ।

(३) अन्येषु विषयेषु संसदः प्रत्येकसदनस्य, तथा तत्प्रत्येकसदनस्य सदस्यानां समितीनां च शक्तयः, विशेषाधिकाराः, उन्मुक्तयश्च तादृशाः भवेयुः यादृशाः संसदा काले काले विधिना परिणिश्चिताः भवेयुः; तथा च यावत् न एवं परिणिश्चिताः तावत् [2][ते भवेयुः ये तत्सदनस्य, तस्य सदस्यानां समितीनां च संविधानस्य (चतुश्चत्वारिंशतमं संशोधनं) अधिनियमः, १९७८, इत्यस्य १५-अनुभागस्य प्रवर्तनात् अव्यवहितपूर्वं आसन् ।]

(४) ये जनाः अस्य संविधानस्य आश्रयेण संसदः सदने, तस्याः कस्यामपि समितौ वा भाषितुं, अन्यप्रकारेण तस्याः कार्यप्रवृत्तिषु भागं ग्रहीतुं वा अधिकारवन्तः सन्ति तेषां सम्बन्धं (१), (२), (३) खण्डानां उपबन्धाः तथैव विषयीकुर्युः यथा ते संसदः सदस्यान् विषयीकुर्वन्ति ।

१०६. संसदः प्रत्येकसदनस्य सदस्याः तादृशानां वेतनानां भक्तानां च प्राप्तौ स्वत्ववन्तः भवेयुः यादृशानि संसदा विधिना काले काले अवधारितानि भवेयुः, तथा च यावत् तद्विषये एवं उपबन्धाः न कृताः तावत् तादृशैः मानैः तादृशैः प्रतिबन्धैश्च वेतनानां भक्तानां च, यादृशानि अस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं भारताधिनिवेशस्य संविधानसभायाः सदस्यान् विषयीकुर्वाणानि आसन् । सदस्यानां वेतनानि, भक्तानि च ।

## विधानप्रक्रिया

१०७. (१) धनविधेयकैः अन्यैः वित्तीयविधेयकैश्च सम्बद्धानां १०९, ११७-तमानुच्छेदयोः उपबन्धानां अधीनं किमपि विधेयकं संसदः अन्यतरस्मिन् कस्मिन् अपि सदने आरभेत । विधेयकानां पुरःस्थापनस्य, पारणस्य च उपबन्धाः ।

---

१. अनुक्रमशः संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २०-अनुभागेन (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) तथा च संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य १४-अनुभागेन (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) एषः अनुच्छेदः संशोधितः इदं रूपं प्राप्तवान् ।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य १४-अनुभागेन कतिपयेभ्यः शब्देभ्यः प्रति एतत् संनिवेशितं (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(२) १०८-१०९ तमानुच्छेदयोः अधीनं, किमपि विधेयकं संसदः सदनाभ्यां पारितं इति तावत् न मन्येत यावत् उभाभ्यां सदनाभ्यां संशोधनेन विना, केवलैः तादृशैः संशोधनैःस ह वा तत् न स्वीकृतं भवति यादृशानि उभाभ्यां सदनाभ्यां स्वीकृतानि सन्ति ।

(३) संसदि लम्बितं विधेयकं सदनयोः सत्रावसान्कारणात् व्यपगतं न भवेत् ।

(४) राज्यसभायां लम्बितं यद् विधेयकं लोकसभया न पारितं भवति तत् लोकसभायाः विघटने व्यपगतं न भवेत् ।

(५) यद् विधेयकं लोकसभायां लम्बितं अस्ति, अथवा लोकसभया पारितं भूत्वा राज्यसभायां लम्बितं अस्ति तत् १०८-तमानुच्छेदस्य उपबन्धानां अधीनं लोकसभायाः विघटने व्यपगतं भवेत् ।

**अवस्थाविशेषेषु उभयोः सदनयोः संयुक्तोपवेशनम् ।**

१०८. (१) यदि किमपि विधेयकं एकेन सदनेन पारितं अस्ति अन्यत् सदनं प्रति प्रेषितं च अस्ति, ततः परं च—

(क) तद्विधेयकं तेन अन्येन सदनेन निराकृतं भवति; अथवा

(ख) तद्विधेयके करणीयेषु संशोधनेषु उभे सदने अन्तिमरूपेण असहमते स्तः; अथवा

(ग) तेन अन्येन सदनेन तद्विधेयके न पारिते सति, तद्विधेयकस्य प्राप्तेः दिनाङ्कात् षड्भ्यः मासेभ्यः अधिकः कालः अत्येति,

तर्हि राष्ट्रपतिः लोकसभायाः विघटनहेतुना तद्विधेयकं यदि व्यपगतं न भवति, तर्हि तस्मिन् विधेयके विचारविमर्शस्य, मतदानस्य च प्रयोजनार्थं संयुक्तोपवेशने अधिवेशनाय आह्वानस्य आशयविषयिणीं अधिसूचनां सदनाभ्यां—यदि ते सदने उपविष्टे स्तः तर्हि सन्देशेन, यदि च ते सदने उपविष्टे न स्तः तर्हि लोकाधिसूचनया—दद्यात्—

परन्तु एतत् खण्डगतं किमपि धनविधेयकं न विषयीकुर्यात् ।

(२) यादृशः (१) खण्डे निर्दिष्टः अस्ति तादृशस्य कस्यापि कालावधेः सङ्गणनायां सः कालावधिः न गणितः स्यात् यस्मिन् तत्खण्डस्य (१) उपखण्डे निर्दिष्टं तत्सदनं अवसितसत्रं, निरन्तरं दिनचतुष्टयात् अधिकदिनानि स्थगितं वा अस्ति ।

(३) यदा राष्ट्रपतिः सदनयोः संयुक्तोपवेशने अधिवेशनार्थं आह्वानस्य आशयविषयिणीं अधिसूचनां (१) खण्डस्य अधीनं दत्तवान् अस्ति तदा अन्यतरत् अपि सदनं तद्विधेयके कार्यप्रवृत्तिं अग्रे न कुर्यात्, किन्तु राष्ट्रपतिः अधिसूचनायाः दिनात् उत्तरं कस्मिन् अपि काले अधिसूचनायां विनिर्दिष्टप्रयोजनाय संयुक्तोपवेशने अधिवेशनार्थं सदने आह्वातुं क्षमते, तथा च यदि सः एवं करोति तर्हि तदनुसारेण सदने अधिविशेताम् ।

(४) यादृशानि संयुक्तपोपवेशने स्वीकृतानि भवन्ति तादृशैः संशोधनैः सह—कानि अपि चेत् सन्ति — यदि उभयोः सदनयोः संयुक्तोपवेशने विधेयकं उभयोः सदनयोः उपस्थितानां, मतं ददतां च समस्तानां सदस्यानां मध्ये बहुमतेन पारितं अस्ति तर्हि अस्य संविधानस्य प्रयोजनानां कृते उभाभ्यां सदनाभ्यां तत् पारितं इति मन्येत—

परन्तु संयुक्तोपवेशने —

(क) यदि विधेयकं एकेन सदनेन पारितं भूत्वा द्वितीयेन सदनेन संशोधनैः सह न पारितं भवति तथा च यस्मिन् सदने तत् आरब्धं तत् प्रति न निर्वर्तितं भवति तर्हि यादृशानि विधेयकस्य पारणे कालविलम्बेन आवश्यकानि सञ्जातानि तादृशैः संशोधनैः सह,—कानि अपि चेत् सन्ति—विना अन्यानि कानि अपि संशोधनानि विधेयके प्रस्थापितानि न भवेयुः;

(ख) यदि विधेयकं एवं पारितं निवर्तितं च अस्ति तर्हि यादृशानि पूर्वोक्तानि तादृशानि एव संशोधनानि, तथा च येषु सदनयोः सहमतिः न संवृत्ता तैः विषयैः यादृशानि सम्बद्धानि तादृशानि अन्यानि संशोधनानि विधेयके प्रस्थापितानि भवेयुः;

तथा च एतत् खण्डस्य अधीनं कानि संशोधनानि ग्राह्याणि इति अस्मिन् विषये पीठासीनस्य जनस्य विनिश्चयः अन्तिमः भवेत् ।

(५) संयुक्तोपवेशने सदनयोः अधिवेशनार्थं आह्वानस्य आशयविषयिण्याः राष्ट्रपतेः अधिसूचनायाः पश्चात् यद्यपि अन्तरा लोकसभायाः विघटनं संवृत्तं अस्ति तथापि अस्य अनुच्छेदस्य अधीनं संयुक्तोपवेशनं भवितुं शक्यते, तथा च तस्मिन् विधेयकं पारितं भवितुं शक्यते ।

**धनविधेयकानां विषये विशेषप्रक्रिया ।**

१०९. (१) धनविधेयकं राज्यसभायां पुरःस्थापितं न भवेत् ।

(२) यदि लोकसभया धनविधेयकं पारितं अस्ति ततः परं तद्विधेयकं राज्यसभां प्रति तस्याः पुरःप्रशंसनानां कृते प्रेषितं भवेत्, राज्यसभा च तद्विधेयकस्य प्राप्तेः दिनाङ्कात् चतुर्दशानां दिनानां कालावधेः अभ्यन्तरं तद् विधेयकं स्वस्य पुरःप्रशंसनैः सह लोकसभां प्रति निवर्तयेत्; लोकसभा च ततः परं राज्यसभायाः सर्वाणि पुरःप्रशंसनानि तदन्यतमं किमपि वा स्वीकुर्यात् निराकुर्यात् वा ।

(३) यदि राज्यसभायाः पुरःप्रशंसनानां अन्यतमं किमपि लोकसभा स्वीकरोति, तर्हि तद्धनविधेयकं राज्यसभया पुरः प्रशंसितैः लोकसभया च स्वीकृतैः संशोधनैः सह उभाभ्यां सदनाभ्यां पारितं इति मन्येत ।

(४) यदि राज्यसभायाः पुरः प्रशंसनानां अन्यतमं किमपि लोकसभा न स्वीकरोति, तर्हि तद्धनविधेयकं राज्यसभया पुरःप्रशंसितानां संशोधनानां अन्यतमेन केनापि विना तेन रूपेण उभाभ्यां सदनाभ्यां पारितं इति मन्येत येन रूपेण तत् लोकसभया पारितं आसीत् ।

(५) यदि लोकसभया पारितं, राज्यसभां प्रति तस्याः पुरःप्रशंसनानां कृते प्रेषितं च धनविधेयकं चतुर्दशदिनानां उक्तकालावधेः अभ्यन्तरे लोकसभां प्रति न निवर्तेत तर्हि उक्तकालावधेः समाप्तौ उभाभ्यां सदनाभ्यां तेन रूपेण तत् पारितं इति मन्येत येन रूपेण तत् लोकसभया पारितं आसीत् ।

**"धनविधेयकानां" परिभाषा ।**

११०. (१) एतद् अध्यायस्य प्रयोजनानां कृते किमपि विधेयकं धनविधेयकं इति मतं भवेत् यदि तस्मिन् केवलं निम्नलिखितैः सर्वैः विषयैः, तेषां अन्यतमेन केनापि वा सम्बद्धाः उपबन्धाः सन्ति, यथा—

(क) कस्यापि करस्य अधिरोपणं, उत्सादनं, परिहारः, परिवर्तनं, विनियमनं वा;

(ख) भारतशासनेन करणीयस्य धनोद्धारस्य, कस्याः अपि प्रत्याभूतेः दानस्य वा विनियमनं अथवा भारतशासनेन अङ्गीकृतैः अङ्गीकर्त्तव्यैः वा वित्तीयैः आभारैः सम्बन्धिनः विधेः संशोधनम्;

(ग) भारतस्य सञ्चितनिधेः, आकस्मिकतानिधेः वा अभिरक्षा तादृशे कस्मिन् अपि निधौ धनस्य विनिवेशनं, तस्मात् धनस्य प्रत्याहरणं वा;

(घ) भारतस्य सञ्चितनिधेः मध्यात् धनस्य विनियोगः;

(ङ) कस्यापि व्ययस्य भारतसञ्चितनिधौ भारितव्ययरूपेण घोषणं, तादृशस्य कस्यापि व्ययस्य राशेः वर्धनं वा;

(च) भारतस्य सञ्चितनिधौ, भारतस्य लोकलेखायां वा धनस्य प्रापणं, अथवा तादृशस्य धनस्य अभिरक्षा, निर्गमनं वा, सङ्घस्य राज्यस्य वा लेखानां परीक्षणं; अथवा

(छ) (क) उपखण्डात् आरभ्य (च) उपखण्डपर्यन्तेषु विनिर्दिष्टविषयाणां अन्यतमस्य कस्यापि आनुषङ्गिकः कोपि विषयः ।

(२) किमपि विधेयकं धनविधेयकं अस्ति इति केवलं एतेन एव हेतुना न मतं भवेत् यत् तत् अर्थदण्डाना, अन्यासां आर्थिकशास्तीनां वा अधिरोपणाय, अनुज्ञप्तीनां अर्थे प्रशुल्कानां, आचरितसेवानां अर्थे वा प्रशुल्कानां अभियाचनायै सन्दानाय वा उपबन्धयति; अथवा एतेन हेतुना यत् तत् केनापि स्थानीयेन प्राधिकारिणा, निकायेन वा, स्थानीयप्रयोजनानां अर्थे कस्यापि करस्य अधिरोपणाय, उत्सादनाय, परिहाराय, परिवर्तनाय, विनियमनाय वा उपबन्धयति।

(३) किमपि विधेयकं धनविधेयकं अस्ति न वा, इति कोपि प्रश्नः यदि उत्पद्यते तर्हि तत्र लोकसभायाः अध्यक्षस्य विनिश्चयः अन्तिमः भवेत् ।

(४) १०९-तमानुच्छेदस्य अधीनं यदा धनविधेयकं राज्यसभां प्रति प्रेषितं भवेत्, तथा च यदा १११-तमानुच्छेदस्य अधीनं तद् राष्ट्रपतेः समक्षं अनुमत्यर्थं उपस्थापितं भवेत् तदा प्रत्येकधनविधेयके लोकसभायाः अध्यक्षेण हस्ताङ्कितं—"एतत् धनविधेयकं अस्ति" इति—प्रमाणपत्रं पृष्ठाङ्कितं भवेत् ।

**विधेयकानि प्रति अनुमतिः ।**

१११. यदा किमपि विधेयकं संसदः सदनाभ्यां पारितं भवेत् तदा तत् राष्ट्रपतेः समक्षं उपस्थापितं भवेत् तथा च राष्ट्रपतिः घोषयेत् यत् सः तद्विधेयकं अनुमन्यते वा तत् प्रति अनुमतिं निरुणद्धि वा इति—

परन्तु राष्ट्रपतिः तद् विधेयकस्य स्वानुमत्यर्थं उपस्थापनात् परं तद् विधेयकं यदि तद् धनविधेयकं नास्ति तर्हि यथासम्भवं शीघ्रं सदने प्रति निवर्तयितुं क्षमते, एवं प्रार्थयता सन्देशेन सह यत् ते सदने तद् विधेयकं, तस्मिन् विनिर्दिष्टान् कान् अपि उपबन्धान् वा पुर्नविलोकयन्तु, विशेषतश्च तादृशानां केषामपि संशोधनानां पुरःस्थापनायाः वाञ्छनीयतां विचारयेताम्, यादृशानि सः स्वीये सन्देशे पुरःप्रशंसयेत्; तथा च यदा विधेयकं एवं निर्वर्तितं भवति तदा ते सदने तद्विधेयकं तदनुसारेण पुनः विचारयेताम्, तथा च यदि तद्विधेयकं सदनाभ्यां संशोधनेन सह, विना वा, पुनः पारितं, राष्ट्रपतेः समक्षं अनुमत्यर्थं च उपस्थापितं भवति तर्हि राष्ट्रपतिः तस्य अनुमतिं न निरुन्ध्यात् ।

## वित्तीयविषयाणां प्रक्रिया

**वार्षिकवित्तविवरणम् ।**

११२. (१) राष्ट्रपतिः प्रत्येकं वित्तीयवर्षस्य विषये तद्वर्षार्थं अस्मिन् भागे "वार्षिकवित्तविवरणं" इति निर्दिष्टं भारतशासनस्य प्राक्कलितानां प्राप्तीनां, व्ययानां च विवरणं उभयोः सदनयोः समक्षं निधापयेत् ।

(२) वार्षिकवित्तविवरणे प्रदत्तस्य व्ययस्य प्राक्कलनेषु—

(क) यः व्ययः अस्मिन् संविधाने भारतस्य सञ्चितनिधेः उपरि भारितव्ययरूपेण वर्णितः तस्य पूर्तये अपेक्षिताः राशयः; तथाच

(ख) भारतस्य सञ्चितनिधितः करिष्यमाणत्वेन प्रस्थापितानां अन्येषां व्ययानां पूर्त्तये अपेक्षिताः राशयश्च,

पृथक्-पृथक् प्रदर्शिताः स्युः; तथा च राजस्वलेखार्थं व्ययस्य अन्यस्मात् व्ययाद् भेदः करणीयः ।

(३) निम्नलिखितः व्ययः भारतस्य सञ्चितनिधौ भारितः व्ययः भवेत्—

(क) राष्ट्रपतेः उपलब्धयः, भक्तानि च, तथा च तस्य पदेन सम्बद्धः अन्यः व्ययः;

(ख) राज्यसभायाः सभापतेः उपसभापतेश्च तथा च लोकसभायाः अध्यक्षस्य उपाध्यक्षस्य च वेतनानि भक्तानि च;

(ग) वृद्धि, निक्षेपनिधिभारं, मोचनभारं च तथा च उद्धारदानेन, ऋणसेवया, ऋणमोचनेन च सम्बद्धं अन्यं व्ययं च अन्तर्भावयन्तः ऋणभाराः येषां भारतशासनस्य दायित्वं भवति;

(घ) (प्रथमः) उच्चतमन्यायालयस्य न्यायाधीशेभ्यः, तेषां सम्बन्धेन वा सन्देयानि वेतनानि, भक्तानि, निवृत्तिवेतनानि च;

(द्वितीयः) "फेडरल" न्यायालयस्य न्यायाधीशेभ्यः, तेषां सम्बन्धेन वा सन्देयानि वेतनानि, भक्तानि, निवृत्तिवेतनानि च;

(तृतीयः) यः उच्च न्यायालयः भारतस्य राज्यक्षेत्रे अन्तर्भावितस्य कस्यापि क्षेत्रस्य सम्बन्धे अधिकारितां प्रयुङ्क्ते, यः वा [1][भारताधिनिवेशस्य राज्यपालस्य प्रान्ते] अन्तर्भावितस्य कस्यापि क्षेत्रस्य सम्बन्धे अस्य संविधानस्य प्रारम्भात् पूर्वं कञ्चिदपि कालं अधिकारितां प्रयुक्तवान् तस्य न्यायाधीशेभ्यः, तेषां सम्बन्धेन वा सन्देयानि निवृत्तिवेतनानि;

(ङ) भारतस्य नियन्त्रकमहालेखापरीक्षकाय तस्य सम्बन्धेन वा सन्देयानि वेतनं, भक्तानि, निवृत्तिवेतनं च;

(च) कस्यापि न्यायालयस्य, मध्यस्थन्यायाधिकरणस्य वा निर्णयस्य, आज्ञप्तेः, मध्यस्थनिर्णयस्य वा तुष्ट्यर्थं अपेक्षिताः राशयः;

(छ) अनेन संविधानेन, संसदः विधिना वा एवं भारितः करणीयः इति घोषितः कोपि अन्यः व्ययः ।

**प्राक्कलनानां विषये संसदः प्रक्रियाः ।**

११३. (१) प्राक्कलनेषु यानि यानि भारतस्य सञ्चितनिधौ भारितव्ययेन सम्बद्धानि सन्ति तानि संसदः मतदानार्थं न पुरतः स्थापितानि भवेयुः, किन्तु एतत् खण्डगतस्य कस्यापि कथनस्य एवं अर्थः न ग्राह्यः यद् एतत् तेषां प्राक्कलनानां अन्यतमस्य कस्यापि चर्चां संसदः अन्यतरस्मिन् सदने निवारयति इति ।

(२) उक्तप्राक्कलनानां यावन्मात्रं अन्यव्ययेन सम्बध्यते तावन्मात्रं लोकसभायाः समक्षं अनुदानानां अभियाचनारूपेण पुरतः स्थापितं भवेत्; तथा च लोकसभा कस्याः अपि अभियाचनायाः अनुमतौ, अनुमतेः प्रत्याख्याने वा कस्याः अपि अभियाचनायाः तस्यां विनिर्दिष्टं राशिं न्यूनीकृत्वा अनुमतौ वा, शक्तिं भजेत ।

(३) राष्ट्रपतेः पुरःप्रशंसनात् एव अनुदानस्य कापि अभियाचना कृता भवेत्, नान्यथा ।

**विनियोगविधेयकानि ।**

११४. (१) ११३-तमानुच्छेदस्य अधीनं लोकसभया यदा अनुदानानि कृतानि सन्ति तदुत्तरं यथासम्भवं शीघ्रं भारतसञ्चितनिधितः—

(क) लोकसभया एवं कृतानां अनुदानानां; तथा च

(ख) भारतस्य सञ्चितनिधौ भारितस्य किन्तु संसदः समक्षं पूर्वं निहिते विवरणे प्रदर्शितराशेः कस्यामपि अवस्थायां अनधिकस्य व्ययस्य,

पूर्त्यर्थं अपेक्षितानां सर्वेषां धनराशीणां विनियोगार्थं उपबन्धयितुं विधेयकं पुरःस्थापितं भवेत् ।

(२) एवं कृतस्य अनुदानस्य राशिं परिवर्तयितुं तस्य लक्ष्यं वा परिवर्तयितुं, भारतस्य सञ्चितनिधौ भारितस्य व्ययस्य राशिं वा परिवर्तयितुं, यत् किमपि संशोधनं कार्यक्षमं भवेत्, तत् संसदः कस्मिन् अपि अन्यतरस्मिन् सदने तादृशे कस्मिन् अपि विधेयके प्रस्थापितं न भवेत्, तथा च किमपि संशोधनं एतत्खण्डाधीनं अग्राह्यं अस्ति न वा, इति विषये पीठासीनस्य जनस्य विनिश्चयः अन्तिमः भवेत् ।

(३) ११५-११६-तमानुच्छेदयोः उपबन्धानां अधीनं, भारतस्य सञ्चितनिधितः किमपि धनं एतद् अनुच्छेदस्य उपबन्धानां अनुसारेण पारितेन विधिना कृतेन विनियोगेन एव प्रत्याहरणीयं, नान्यथा ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६-इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुच्याः (क)—भाग उल्लिखितस्य राज्यस्य स्थानिनि प्रान्ते" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

**अनुपूरकाणि, अपराणि, अधिकानि वा अनुदानानि ।**

११५. (१) यदि—

(क) ११४-तमानुच्छेदस्य उपबन्धानां अनुसारेण प्रणीतेन विधिना कस्यामपि विशेषसेवायां वर्तमाने वित्तीयवर्षे व्ययार्थं प्राधिकृतः राशिः तद्वर्षस्य प्रयोजनानां कृते अपर्याप्तः इति अवगतः अस्ति; अथवा तस्य वित्तीयवर्षस्य वार्षिकवित्तविरणेन अननुध्यातायां सेवायां अनुपूरकस्य, अपरस्य वा व्ययस्य आवश्यकता वर्तमाने वित्तीयवर्षे उत्पन्ना अस्ति; अथवा

(ख) वित्तीयवर्षस्य कस्यामपि सेवायां तत्सेवार्थं तद्वर्षार्थं अनुदत्तात् राशेः अधिकं धनं व्ययितं अस्ति,

तर्हि राष्ट्रपतिः यथायथं उभयोः सदनयोः समक्षं तस्य व्ययस्य प्राक्कलितं राशिं प्रदर्शयत् अन्यद् विवरणं निधापयेत्; अथवा लोकसभायां तादृश्याः अधिकतायाः अभियाचनां उपस्थापयेत् ।

(२) एतादृशस्य कस्यापि विवरणस्य, व्ययस्य च अभियाचनायाः वा सम्बन्धे भारतस्य सञ्चितनिधितः तादृशस्य व्ययस्य, तादृश्याः अभियाचनायाः वा सम्बन्धे च, अनुदानस्य पूर्तये धनानां विनियोगं प्राधिकृतं कुर्वतः प्रणेतव्यस्य कस्यापि विधेः सम्बन्धे अपि च, ११२, ११३, ११४-तमानुच्छेदानां उपबन्धाः तथा कार्यक्षमाः भवेयुः यथा ते वार्षिकवित्तविवरणस्य, तस्मिन् वर्णितव्ययस्य च सम्बन्धे अनुदानस्य कस्यापि अभियाचनायाः सम्बन्धे च भारतस्य सञ्चितनिधितः तादृशस्य कस्यापि व्ययस्य अनुधानस्य वा पूर्तये धनानां विनियोगं प्राधिकृतं कुर्वतः प्रणेतव्यस्य विधेः सम्बन्धे च कार्यक्षमाः भवन्ति ।

**लेखानुदानं, प्रत्ययानुदानं, अपवादानुदानं च ।**

११६. (१) अस्य अध्यायस्य पूर्वगामिषु उपबन्धेषु किमपि सत्यपि—

(क) कस्यापि वित्तीयवर्षस्य भागार्थं प्राक्कलितस्य व्ययस्य सम्बन्धे किमपि अनुदानं, तादृशे अनुदाने मतदानार्थं ११३-तमानुच्छेदे विहितायाः प्रक्रियायाः पूर्तौ लम्बितायां सत्यां तथा तस्य व्ययस्य सम्बन्धे ११४-तमानुच्छेदस्य उपबन्धानां अनुसारेण विधेः पारणे लम्बिते सति, अग्रिमं दातुं;

(ख) यदा कस्याः अपि सेवायाः महत्तया, अनिश्चितरूपतया वा, अभियाचना वार्षिकवित्तविवरणे साधारणतया विवरणेन सह वर्णयितुं न शक्यते तदा भारतस्य सम्पत्तिसाधनेषु अपूर्वचिन्तितायाः अभियाचनायाः पूर्त्यै अनुदानं कर्तुं;

(ग) कस्यापि वित्तवर्षस्य विद्यमानसेवायाः अभागभूतस्य अनुदानस्य कृते अपवादानुदानं कर्तुं च,

लोकसभा शक्तिं भजेत; तथा च उक्तानुदानानि येभ्यः प्रयोजनेभ्यः कृतानि भवन्ति तानि उद्दिश्य भारतस्य सञ्चितनिधितः धनस्य विधिना आहरणं प्राधिकर्तुं संसत् शक्तिं भजेत ।

(२) ११३, ११४-तमानुच्छेदयोः उपबन्धाः (१) खण्डाधीनं अनुदानस्य, तत् खण्डाधीनं प्रणेतव्यस्य कस्यापि विधेः सम्बन्धे तथैव कार्यक्षमाः भवेयुः, यथा ते वार्षिकवित्तविवरणे वर्णितं कमपि व्ययं उद्दिश्य किमपि अनुदानं कर्तुं, भारतस्य सञ्चितनिधितः तादृशस्य व्ययस्य पूर्त्यै धनानां विनियोगं प्राधिकर्तुं च प्रणेतव्यस्य विधेः सम्बन्धे कार्यक्षमाः भवन्ति ।

**वित्तविधेयकनां विषये विशेषाः उपबन्धाः ।**

११७. (१) ११०-तमानुच्छेदस्य (१) खण्डस्य (क) उपखण्डं आरभ्य (च) उपखण्डपर्यन्तेषु उपखण्डेषु विनिर्दिष्टानां विषयाणां अन्यतमाय कस्मै अपि उपबन्धं कुर्वद्विधेयकं, संशोधनं वा, राष्ट्रपतेः पुरःप्रशंसनपूर्वकमेव पुरःस्थापितं, प्रस्तावितं वा भवेत्, नान्यथा; तथा च तादृशं उपबन्धं कुर्वद् विधेयकं राज्यसभायां पुरःस्थापितं न भवेत—

परन्तु कस्यापि करस्य न्यूनीकरणाय, उत्सादनाय वा उपबन्ध कुर्वतः संशोधनस्य प्रस्तावार्थं एतत् खण्डाधीनं किमपि पुरःप्रशंसनं अपेक्षितं न भवेत् ।

(२) किमपि विधेयकं, संशोधनं वा उक्तविषयाणां अन्यतमाय कस्मै अपि उपबन्धं करोति इति केवलं एतेन एव हेतुना न मन्येत यत् तत् अर्थदण्डानां, अन्यासां अर्थशास्तीनां अधिरोपणाय, अनुज्ञप्तीनां अर्थे प्रशुल्कानां, आचरितसेवानां अर्थे प्रशुल्कानां वा अभियाचनायै, सन्दानाय वा उपबन्धयति; अथवा एतेन हेतुना यत् तत् केनापि स्थानीयेन प्राधिकारिणा निकायेन वा स्थानीयप्रयोजनानां अर्थे कस्यापि करस्य अधिरोपणाय, उत्सादनाय, परिहाराय, परिवर्तनाय, विनियमनाय वा उपबन्धयति ।

(३) यस्मिन् विधेयके अधिनियमिते प्रवर्तिते च भारतस्य सञ्चितनिधितः व्ययं करणीयं भवेत्; तत् संसदः केनापि अन्यतरेण सदनेन तावत् पारितं न भवेत् यावत् तादृशे विधेयके विचारार्थं राष्ट्रपतिः तत् सदनस्य कृते पुरःप्रशंसनं न कुर्यात् ।

## साधारणतया प्रक्रिया

**प्रक्रियायाः नियमाः ।**

११८. (१) अस्य संविधानस्य उपबन्धानां अधीनं संसदः प्रत्येकसदनं स्वीयप्रक्रियायाः स्वीयकार्यसञ्चालनस्य च विनियमनार्थं नियमान् प्रणेतुं क्षमते ।

(२) यावत् (१) खण्डाधीनं नियमाः प्रणीताः न सन्ति तावत् अस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं भारताधिनिवेशस्य विधानमण्डलं उद्दिश्य ये प्रक्रियानियमाः स्थाय्यादेशाश्च प्रवृत्ताः आसन् ते तादृशानां उपान्तराणां, अनुकूलनानां च अधीनं संसदः सम्बन्धे कार्यक्षमाः भवेयुः, यादृशानि यथायथं राज्यसभायाः सभापतिः लोकसभायाः अध्यक्षः वा तत्र कर्तुं क्षमते ।

(३) राष्ट्रपतिः राज्यसभायाः सभापतिना लोकसभायाः अध्यक्षेण च परामृश्य उभयोः सदनयोः संयुक्तोपवेशनानि परस्परसञ्चारान् च उद्दिश्य प्रक्रियायाः नियमान् प्रणेतुं क्षमते ।

(४) उभयोः सदनयोः संयुक्तोपवेशने लोकसभायाः अध्यक्षः पीठासीनः भवेत्; तस्य अनुपस्थितौ तादृशः वा जनः यादृशः (३) खण्डाधीनं कृतायाः प्रक्रियायाः नियमैः अवधारितः भवेत् ।

**संसदि वित्तीयकार्यसम्बन्धि प्रक्रियायाः विधिना विनियमनम् ।**

११९. वित्तीयकार्यस्य यथाकालं समाप्त्यर्थं संसत् कमपि वित्तीयविषयं भारतस्य सञ्चितनिधितः धनस्य विनियोगं कुर्वतः किमपि विधेयकं वा विषयीकृत्य प्रत्येकसदनस्य प्रक्रियां, कार्यसञ्चालनं च विधिना विनियमयितुं क्षमते; तथा च यदि यावत् च एवं प्रणीतस्य कस्यापि विधेः उपबन्धः ११८-तमानुच्छेदस्य (१) खण्डाधीनं संसदः केनापि अन्यतरेण सदनेन प्रणीतैः नियमैः तदनुच्छेदस्य (२) खण्डाधीनं वा संसदः सम्बन्धे कार्यक्षमेण केनापि नियमेन स्थाय्यादेशने वा असङ्गतः अस्ति तर्हि तादृशः उपबन्ध अभिभवेत् ।

**संसदि प्रयोज्या भाषा ।**

१२०. (१) १७-भागे किमपि सत्यपि, किन्तु ३४८-तमानुच्छेदस्य उपबन्धानां अधीनं, संसदः कार्यं हिन्दीभाषायां आङ्ग्लभाषायां वा कृतं भवेत्—

परन्तु यः हिन्दीभाषायां आङ्ग्लभाषायां वा स्वाभिप्रायस्य सुतरां अभिव्यक्तिं कर्तुं न शक्नोति तस्मै सदस्याय यथायथं राज्यसभायाः सभापतिः लोकसभायाः अध्यक्षः वा तादृशरूपेण कार्यकारी जनः वा स्वस्य मातृभाषायां तत्सदनस्य सम्बोधने अनुज्ञां दातुं क्षमते ।

(२) यावत् संसद् विधिना अन्यथा न उपबन्धयति तावत् अस्य संविधानस्य प्रारम्भात् पञ्चदशवर्षाणां कालावधेः समाप्तेः परं एषः अनुच्छेदः एवं कार्यक्षमः भवेत् यथा एतस्मिन् "आङ्ग्लभाषायां वा" इत्येते शब्दाः लुप्ताः इव स्युः ।

**संसदि चर्चायां निर्बन्धनम् ।**

१२१. उच्चतमन्यायालयस्य, उच्चन्यायालयस्य वा न्यायाधीशेन स्वकर्तव्यपालने कृतं आचरणं उद्दिश्य संसदि कापि चर्चा इतः परं उपबन्धितरीत्या तस्य न्यायाधीशस्य अपसारणं प्रार्थयतः समावेदनस्य राष्ट्रपतये दानार्थं प्रस्तावे एव भवेत्, नान्यथा।

**न्यायालयाः संसदः कार्यप्रवृत्तीनां विषये परिप्रश्नं न कुर्युः।**

१२२. (१) संसदः कासामपि कार्यप्रवृत्तीनां विधिमान्यता प्रक्रियायाः कस्याः अपि अभिकथितायाः अनियमततायाः आधारेण, प्रश्नगता न कृता भवेत्।

(२) अनेन संविधानेन, एतदधीनं वा संसदि प्रक्रियायाः कार्यसञ्चालनस्य वा विनियमनं कर्तुं, व्यवस्थां रक्षितुं वा यस्मिन् शक्तयः निहिताः सः संसदः कोपि अधिकारी, सदस्यः वा तासां शक्तीनां स्वकृतस्य प्रयोगस्य विषये कस्यापि न्यायालयस्य अधिकारितायाः अधीनः न भवेत्।

## अध्याय ३—राष्ट्रपतेः विधायिन्यः शक्तयः

**संसदः विश्रान्तिकाले राष्ट्रपतेः अध्यादेश-प्रख्यापने शक्तिः।**

१२३. (१) यस्मिन् काले संसदः उभे सदने सत्रे स्तः, तस्मात् अन्यस्मिन् कस्मिन् अपि काले, यदि राष्ट्रपतिः समाहितः भवति यत् तं अचिरकार्यं अवश्यं प्रवर्तयन्त्यः परिस्थितयः विद्यन्ते, तर्हि सः तादृशान् अध्यादेशान् प्रख्यापयितुं क्षमते यादृशान् अपेक्षयन्त्यः परिस्थितयः तेन प्रतीयन्ते।

(२) एतदनुच्छेदस्य अधीनं प्रख्यापिते अध्यादेशे तादृशं एव बलं कार्यक्षमता च विद्यते यादृशं संसदः अधिनियमे अस्ति किन्तु तादृशः प्रत्येकं अध्यादेशः—

(क) संसदः उभयोः सदनयोः पुरतः स्थापितः भवेत्, तथा च संसदि पुनः समवेतायां षण्णां सप्ताहानां समाप्तौ अथवा यदि तत् कालावधेः समाप्तेः प्राक् उभाभ्यां सदनाभ्यां तस्य निरनुमोदनस्य सङ्कल्पौ स्तः तर्हि तयोः सङ्कल्पयोः द्वितीयस्य पारणोत्तरं सः प्रवर्तनात् विरमेत्;

(ख) राष्ट्रपतिना कस्मिन् अपि काले प्रत्याहृतः भवेत्।

**स्पष्टीकरणम्**—यदा संसदः सदने पुनःसमवायार्थं भिन्नयोः दिनाङ्कयोः आहूते भवतः तदा एतत् खण्डस्य प्रयोजनानां अर्थे षण्णां सप्ताहानां कालावधिः तयोः दिनाङ्कयोः उत्तरदिनाङ्कात् सङ्गणितः भवेत्।

(३) यदि, यावन्मात्रं च, एतदनुच्छेदस्य अधीनं अध्यादेशः कमपि तं उपबन्धं करोति, यं संसद् अस्य संविधानस्य अधीनं अधिनियमितुं न क्षमते तर्हि सः शून्यः भवेत्।

[1][*　　　*　　　*]

## अध्याय ४—संघस्य न्यायपालिका

**उच्चतमन्यायालयस्य स्थापना, घटनं च।**

१२४. (१) भारतस्य एकः उच्चतमन्यायालयः भवेत् यश्च एकेन मुख्यन्यायमूर्तिना तथा च यावत् संसद् विधिना अधिकतरां सङ्ख्यां न विदधाति तावत् सप्तभिः[2] न्यायाधीशैः सम्भूय भवेत्।

(२) राष्ट्रपतिः एतदर्थं यादृशान् आवश्यकान् मन्येत तादृशैः उच्चतमन्यायालयस्य, राज्यानं उच्चन्यायालयानां च न्यायधीशैः परामृश्य, स्वहस्तेन स्वमुद्रया च अङ्कितेन अधिपत्रेण उच्चतमन्यायालयस्य प्रत्येकं न्यायाधीशं नियुक्तं कुर्यात् स च न्यायाधीशः यावत् वर्षाणां पञ्चषष्टिः वयः प्राप्नोति तावत् पदं धारयेत्—

परन्तु मुख्यन्यायमूर्तेः अन्यस्य न्यायाधीशस्य नियुक्तेः विषये भारतस्य मुख्यन्यायमूर्तिः सर्वदा परामृष्टः भवेत्।

---

१. संविधानस्य (अष्टत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य २-अनुभागेन (४) खण्डः अन्तर्वेशितः आसीत् भूतलक्षिप्रभावेण; संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य १६-अनुभागेन च निरसितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमान्प्रभावेण)।

२. अधुना "सप्तदश"; अत्र १९७७ वर्षस्य ४८-अधिनियमः द्रष्टव्यः।

अपरंच—

(क) कोपि न्यायाधीशः राष्ट्रपतिं सम्बोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वपदं त्यक्तुं क्षमते;

(ख) (४) खण्डे उपबन्धितया रीत्या कोपि न्यायाधीशः अपसारितुं शक्यते ।

[1][(२ अ) उच्चतमन्यायालयस्य न्यायाधीशस्य वयः तेन प्राधिकारिणा तया च रीत्या अवधारितं भवेत् यं संसद् विधिना उपबन्धयति ।]

(३) कोपि जनः उच्चतमन्यायालयस्य न्यायाधीशरूपेण नियुक्तेः अर्हः केवलं तदा भवेत् यदा सः भारतस्य नागरिकः अस्तिः; तथा च

(क) कस्यचित् उच्चन्यायालयस्य कयोश्चित् उच्चन्यायालययोः केषांचित् उच्चन्यायालयानां वा, न्यूनात् न्यूनं पञ्चवर्षाणि निरन्तरक्रमेण न्यायाधीशः संवृत्तः अस्ति; अथवा

(ख) उच्चन्यायालयस्य कयोश्चित् उच्चन्यायालययोः केषांचित् उच्चन्यायालयानां वा न्यूनात् न्यूनं दशवर्षाणि निरन्तरक्रमेण अधिवक्ता संवृत्तः अस्ति; अथवा

(ग) राष्ट्रपतेः मतौ सुविख्यातः विधिवेत्ता अस्ति ।

**स्पष्टीकरणम् १**—अस्मिन् खण्डे "उच्चन्यायालयः" अभिदधाति तं उच्चन्यायालयं यः भारतराज्यक्षेत्रस्य कस्मिन् अपि भागे अधिकारितां प्रयुङ्क्ते, अस्य संविधानस्य प्रारम्भात् प्राक् कदाचित् अपि प्रयुक्तवान् वा ।

**स्पष्टीकरणम् २**—कोपि जनः यस्मिन् कालावधौ अधिवक्ता संवृत्तः अस्ति तदवधेः एतत्खण्डस्य प्रयोजनाय सङ्गणनायां सः कोपि कालावधिः अन्तर्भावितः भवेत् यस्मिन् सः जनः अधिवक्ता संवृत्तः, ततः परं मण्डलन्यायाधीशस्य पदात् अन्यूनतरं न्यायिकपदं धृतवान् च ।

(४) उच्चतमन्यायालस्य न्यायधीशः स्वपदात् तावत् अपसारितः न भवेत् यावत् एतादृशाय अपसारणाय सिद्धस्य दुराचारस्य, असमर्थत्वस्य वा आधारेण संसदः उभाभ्यां सदनाभ्यां अमुकसदनस्य समस्तानां सदस्यानां सङ्ख्यायाः मध्ये बहुमतेन, तथा तत्र उपस्थितानां मतं ददतां च सदस्यानां न्यूनात् न्यूनं तृतीयांशद्वयसङ्ख्यकेन बहुमतेन समर्थिते समावेदने तस्मिन् एव सत्रे राष्ट्रपतेः समक्षं उपस्थापिते सति तद्विषये राष्ट्रपतिना आदेशः प्रदत्तः न स्यात् ।

(५) (४) खण्डाधीनं समावेदनं प्रदातुं तथा न्यायाधीशस्य दुराचारं असमर्थतां वा अन्वेष्टुं साधयितुं च अपेक्षितां प्रक्रियां संसद् विधिना विनियमयेत् ।

(६) उच्चतमन्यायालयस्य न्यायाधीशरूपेण नियुक्तः प्रत्येकं जनः स्वपदे आरोहणात् प्राक् राष्ट्रपतेः समक्षं तेन तदर्थं नियुक्तस्य कस्यचित् जनस्य समक्षं वा तृतीयानुसूच्यां तदर्थं उल्लिखिते प्ररूपे शपथं, प्रतिज्ञानं वा कुर्यात् तं च स्वहस्ताङ्कितं कुर्यात् ।

(७) येन उच्चतमन्यायालयस्य न्यायाधीशरूपेण पदं धारितं अस्तिः सः कोपि जन भारतराज्यक्षेत्रस्य अभ्यन्तरे कस्मिन् अपि न्यायालये, अथवा कस्यापि प्राधिकारिणः समक्षं अभिवचनं, कार्यं वा न कुर्यात् ।

**न्यायाधीशानां वेतनादीनि ।**

१२५. (१) उच्चतमन्यायालयस्य न्यायाधीशेभ्यः तादृशानि वेतनानि सन्दत्तानि भवेयुः यादृशानि द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति ।

(२) प्रत्येकं न्यायाधीशः तादृशेषु विशेषाधिकारेषु, भक्तेषु तथैव च अनुपस्थित्यनुमतिसम्बन्धिषु, निवृत्तिवेतनसम्बन्धिषु च तादृशेषु अधिकारेषु स्वत्ववान् भवेत् यादृशानि संसत्प्रणीतेन विधिना तदधीनं वा काले काले

१. संविधानस्य (पञ्चदशं संशोधनं) अधिनियमः, १९६३ इत्यस्य २-अनुभागेन अन्तर्वेशितः ।

अवधारितानि भवेयुः; तथा च यावत् एवं न अवधारितानि, तावत् तादृशेषु विशेषाधिकारेषु, भक्तेषु, अधिकारेषु च यादृशानि द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति—

परन्तु नियुक्तेः परं कस्यापि न्यायाधीशस्य विशेषाधिकारेषु, भक्तेषु वा अनुपस्थित्यनुमतिसम्बन्धिषु, निवृत्तिवेतनसम्बन्धिषु अधिकारेषु वा तादृशं परिवर्तनं न भवेत् यादृशं तस्मै लाभस्य न्यूनीकारकं भवेत् ।

**कार्यकारिणः मुख्यन्याय-मूर्तेः नियुक्तिः ।**

१२६. यदा भारतस्य मुख्यन्यायमूर्तेः पदं रिक्तं भवेत्; अथवा यदा मुख्यन्यायमूर्तिः अनुपस्थित्या अन्येन वा कारणेन स्वपदस्य कर्तव्यानां पालने असमर्थः भवेत् तदा तत् पदस्य कर्तव्यानि तत् न्यायालयस्य अन्येषां न्यायाधीशानां अन्यतमेन केनापि पालितानि भवेयुः यं राष्ट्रपतिः तत् प्रयोजनाय नियोजयेत् ।

**तदर्थन्यायाधीशानां नियुक्तिः ।**

१२७. (१) यदि कस्मिन् अपि काले उच्चतमन्यायालयस्य सत्रं सम्पादयितुं, अनुवर्तयितुं वा तत् न्यायालयस्य न्यायाधीशानां गणपूर्तिः न भवेत्, तर्हि भारतस्य मुख्यन्यायमूर्तिः राष्ट्रपतेः पूर्वसम्मत्या तथा च सम्बद्ध-उच्चन्यायालयस्य मुख्यन्यायमूर्तिना परामृश्य भारतस्य उच्चन्यायालयस्य न्यायाधीशरूपेण नियुक्तये अर्हं भारतस्य मुख्यन्यायमूर्तिना नामनिर्दिष्टं कमपि उच्चन्यायालयस्य न्यायाधीशं उच्चतमन्यायालयस्य उपवेशनेषु, यावान् कालावधिः आवश्यकः तावति कालावधौ तदर्थन्यायाधीशरूपेण उपस्थित्यर्थं लेखेन प्रार्थयितुं क्षमते ।

(२) एवं नामनिर्दिष्टस्य न्यायाधीशस्य, उच्चतमन्यायालयस्य उपवेशनेषु यस्मिन् अस्य उपस्थितिः अपेक्षिता अस्ति तत्कालावधौ तस्मिन् काले च, स्वपदस्य अन्यकर्तव्येभ्यः पूर्ववर्तितया उपस्थितिः कर्तव्यं भवेत्; तथा च यदा सः एवं उपतिष्ठन् भवेत् तदा सः उच्चतमन्यायालयस्य न्यायाधीशस्य सर्वाः अधिकारिताः शक्तीश्च, सर्वान् विशेषाधिकारांश्च भजेत, सर्वाणि कर्तव्यानि च निर्वहेत् ।

**उच्चतमन्यायालयस्य उपवेशनेषु सेवानिवृत्त-न्यायाधीशानां उपस्थितिः**

१२८. अस्मिन् अध्याये किमपि सत्यपि भारतस्य मुख्यन्यायमूर्तिः कस्मिन् अपि काले राष्ट्रपतेः पूर्वसम्मत्या उच्चतमन्यायालये न्यायाधीशरूपेण उपस्थातुं कार्यं कर्तुं च कमपि तादृशं जनं प्रार्थयितुं क्षमते यः उच्चतम-न्यायालयस्य, फैडरल-न्यायालयस्य वा न्यायाधीशपदं धारितवान्; [1][अथवा यः उच्चन्यायालयस्य पदं धारितवान्; तथा च उच्चतमन्यायालयस्य न्यायाधीशपदे नियुक्तये सम्यक्तया अर्हतां धारयति]; तथा च एवं प्रार्थितः प्रत्येकं तादृशः जनः यदा एवं उपस्थितः कार्यं कुर्वन् च भवेत् तदा तादृशेषु भक्तेषु स्वत्ववान् भवेत् यादृशानि राष्ट्रपतिः आदेशेन अवधारयेत् तथा च तत् न्यायालयस्य न्यायाधीशस्य सर्वाः अधिकारिताः, शक्तीश्च, सर्वान् विशेषाधि-कारांश्च भजेत, किन्तु सः अन्यथा तस्य न्यायालयस्य न्यायाधीशः इति न मन्येत,

परन्तु यावत् पूर्वोक्तः कोपि तादृशः जनः एवं कर्तुं न सम्मनुते तावत् सः तत् न्यायालयस्य न्यायाधीशरूपेण उपविशेत् कार्यं कुर्यात् च इति एतद् अनुच्छेदगतं किमपि तस्माद् अपेक्षते इति न मन्येत ।

**उच्चतमन्यायालयः अभिलेखन्यायालयः ।**

१२९. उच्चतमन्यायालयः अभिलेखन्यायालयः भवेत्, तथा स्वावमाने दण्डनशक्तिं अन्तर्भावयन्तीः एतादृश-न्यायालयस्य सर्वाः शक्तीश्च भजेत ।

**उच्चतमन्यायालयस्य स्थानम् ।**

१३०. उच्चतमन्यायालयः देहल्यां अथवा तादृशे अन्यस्मिन् स्थाने, अन्येषु स्थानेषु वा उपविशेत् यादृशानि राष्ट्रपतेः अनुमोदनेन भारतस्य मुख्यन्यायमूर्तिः काले काले नियतानि कुर्यात् ।

**उच्चतमन्यायालयस्य प्रारंभिकाधिकारिता ।**

१३१. अस्य संविधानस्य उपबन्धानां अधीनं—

(क) भारतशासनस्य तथा च एकस्य राज्यस्य अधिकानां राज्यानां वा मध्ये, अथवा

(ख) एकस्मिन् पक्षे भारतशासनस्य कस्यापि राज्यस्य अधिकानां वा राज्यानां तथा अन्यस्मिन् पक्षे एकस्य अधिकानां वा अन्येषां राज्यनां मध्ये; अथवा

---

१. संविधानस्य (पञ्चदशं संशोधनं) अधिनियमः, १९६३ इत्यस्य ३-अनुभागेन अन्तर्वेशितः ।

(ग) द्वयो: राज्ययो: अधिकानां राज्यानां वा मध्ये,

कस्मिन् अपि विवादे उच्चतमन्यायालय: अन्यान् सर्वान् न्यायालयान् अपवर्ज्य प्रारम्भिकां अधिकारितां भजते, यावत् च यदि च स: विवाद: तं कमपि (विधे: वा तथ्यस्य वा) प्रश्नं अन्तर्गृह्णाति यस्मिन् कस्यापि वैधस्य अधिकारस्य अस्तित्वं विस्तार: वा संश्रयते—

[1][परन्तु उक्ताधिकारिता तस्मिन् विवादे न विस्तारं प्राप्नुयात् य: एतादृशात् सन्धे:, समयात्, प्रसंविद: वचनबन्धात्, सनदाख्यलेखात्, तत्समात् अन्यस्मात् लिखितात् वा उत्पन्न: भवति यद् अस्य संविधानस्य प्रारम्भात् पूर्वं कृतं, निष्पादितं वा आसीत् तथा च एतादृशात् प्रारम्भात् परं च प्रवर्तमानं अस्ति अथवा एतादृशं उपबन्धं करोति यत् उक्ताधिकारिता एतादृशे विवादे न विस्तारं प्राप्नुयात् ।]

[2][**१३१अ.** [केन्द्रीयविधीनां सांविधानिकवैधतया सम्बद्धानां प्रश्नानां विषये उच्चतमन्यायालयस्य अनन्या अधिकारिता] संविधानस्य (त्रिचत्वारिंशत्तमं संशोधनं) अधिनियम:, १९७७ इत्यस्य ४-अनुभागेन निरसित: (१३-४-१९७८ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**केषुचित् न्यायविषयेषु उच्चन्यायालयेभ्य: प्राप्तासु पुनर्विचार-प्रार्थनासु उच्चतम-न्यायालयस्य पुनर्विचाराधिकारिता ।**

**१३२.** (१) भारतराज्यक्षेत्रे कस्यापि उच्चन्यायालयस्य व्यावहारिक्यां, आपराधिक्यां अन्यस्यां वा कार्य-प्रवृत्तौ कस्यापि निर्णयस्य, आज्ञप्ते:, अन्तिमादेशस्य, वा पुनर्विचारणाय प्रार्थना उच्चतमन्यायालये भवेत् [3][यदि स: उच्चन्यायालय: १३४अ अनुच्छेदस्य अधीनं प्रमाणयति] यत् स: वाद: अस्य संविधानस्य निर्वचने कमपि सारवन्तं प्रश्नं अन्तर्भावयति;

[4][ * * * * ]

(३) यत्र एतादृशं प्रमाणपत्रं दत्तं [5][ * * * ] तत्र तद्वादस्य: कोपि पक्ष: उच्चतमन्यायालयं कोपि एतादृश: पूर्वोक्तसदृश: प्रश्न: असम्यक्तया विनिश्चित: इति आधारेण [5][ * * * ] पुनर्विचारं प्रार्थयेत् ।

**स्पष्टीकरणम्**—एतदनुच्छेदस्य प्रयोजनानां कृते "अन्तिमादेशस्य" इतिकथनं तस्य वादपदस्य विनिश्चायकं आदेशं अन्तर्भावयति यद् वादपदं यदि पुनर्विचारं प्रार्थयितु: अनुग्राहकत्वेन विनिश्चितं भवेत् तर्हि तस्य वादस्य अन्तिमव्यवस्थादानाय पर्याप्तं भवेत् ।

**व्यावहारिक विषयेषु उच्चन्यायालयेभ्य: प्राप्तासु पुनर्विचार प्रार्थनासु उच्चतम-न्यायालयस्य पुनर्विचार-प्रार्थनासम्बन्धिनी अधिकारिता ।**

**१३३.** [6][(१) भारतराज्यक्षेत्रे कस्यापि उच्चन्यायालयस्य व्यावहारिक्यां कार्यप्रवृत्तौ कस्यापि निर्णयस्य, आज्ञप्ते: अन्तिमादेशस्य वा पुनर्विचारार्थं प्रार्थना उच्चतमन्यायालये भवेत् [7][यदि उच्चन्यायालय: १३४अ अनुच्छेदस्य अधीनं प्रमाणयति यत्]—

(क) स: वाद: कमपि सार्वजनिक महत्त्ववन्तं सारवन्तं विधिप्रश्नं अन्तर्भावयति; तथा च

---

१ संविधानस्य (सप्तमं संशोधनं) अधिनियम:, १९५६ इत्यस्य ५-अनुभागेन पारन्तुकात् प्रति एष: पारन्तुक: संनिवेशित: ।

२. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियम:, १९७६ इत्यस्य २३-अनुभागेन एष: अनुच्छेद: अन्तर्वेशित: (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (चतुश्चत्वरिंशत्तमं संशोधनं) अधिनियम:, १९७८ इत्यस्य १७-अनुभागेन "यदि स: उच्च न्यायालय: प्रमाणयति" इत्येतस्मात् प्रति एतत् संनिवेशितं (१-८-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन (२) खण्ड: लोपित: (१-८-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन कतिपया: शब्दा: लोपिता: (१-८-१९७९ दिनाङ्कात् प्रवर्तमान-प्रभावेण) ।

६. संविधानस्य (त्रिशत्तमं संशोधनं) अधिनियम:, १९७२ इत्यस्य २-अनुभागेन (१) खण्डात् प्रति एष: खण्ड: संनिवेशित: (२७-२-१९७३ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

७. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियम:, १९७८ इत्यस्य १८-अनुभागेन "यदि स: उच्च न्यायालय: प्रमाणयति" इत्येतस्मात् प्रति एतत् संनिवेशितं (१-८-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(ख) उच्चन्यायालयस्य मतौ तस्य प्रश्नस्य उच्चतमन्यायालयेन विनिश्चयः आवश्यकः अस्ति ।]

(२) १३२-तमानुच्छेदे किमपि सत्यपि (१) खण्डाधीनं पुनर्विचारं प्रार्थयमानः कोपि विवादी उच्चतमन्यायालयं ज्ञापयेत् एतादृश्याः पुनर्विचारप्रार्थनायाः आधाराणां अन्यतमं एकं यत् अस्य संविधानस्य निर्वचनसम्बन्धे कोपि सारवान् विधिप्रश्नः असम्यक्तया विनिश्चितः इति ।

(३) एतस्मिन् अनुच्छेदे किमपि सत्यपि उच्चन्यायालयस्य एकेनैव न्यायाधीशेन कृतस्य निर्णयस्य, आज्ञप्तेः, अन्तिमादेशस्य वा कापि पुनर्विचारप्रार्थना उच्चतमन्यायालयं तावत् न संश्रयेत् यावत् संसद् विधिना अन्यथा न उपबन्धयति ।

**आपराधिकेषु विषयेषु उच्चतमन्यायालयस्य पुनर्विचारप्रार्थनासम्बन्धिनी अधिकारिता ।**

१३४. (१) भारतराज्यक्षेत्रे आपराधिक्यां कार्यप्रवृत्तौ उच्चन्यायालयस्य कस्यापि निर्णयस्य, अन्तिमादेशस्य, दण्डादेशस्य वा उच्चतमन्यायालये पुनर्विचारप्रार्थना भवेत्, यदि सः उच्चन्यायालयः—

(क) पुनर्विचारप्रार्थनायां कस्यापि अभियुक्तस्य जनस्य दोषमुक्तेः आदेशं परावर्तितवान्; तथा च तस्मै जनाय मृत्युदण्डादेशं दत्तवान्; अथवा

(ख) स्वस्य प्राधिकाराधीनात् कस्मादपि न्यायालयात् स्वपुरतः परीक्षणाय कमपि अभियोगं प्रत्याहृतवान्, तथा च तादृशे परीक्षणे अभियुक्तं जनं सिद्धदोषं कृतवान्, तस्मै मृत्युदण्डादेशं दत्तवान् च, अथवा

(ग) [1][१३४अ अनुच्छेदाधीनं प्रमाणयति] यत् सः अभियोगः उच्चतमे न्यायालये पुनर्विचारप्रार्थनायोग्यतां भजते इति—

परन्तु (ग) उपखण्डाधीनं पुनर्विचारप्रार्थना तादृशानां उपबन्धानां अधीनं स्यात् यादृशाः १४५-तमानुच्छेदस्य (१) खण्डस्य अधीनं कृताः तन्निमितं स्युः, तथा च तादृशानां प्रतिबन्धानां अधीनं स्यात् यादृशान् उच्चन्यायालयः नियमयेत्, अपेक्षते वा ।

(२) संसद् उच्चतमन्यायालयाय भारतराज्यक्षेत्रस्य उच्चन्यायालयस्य आपराधिक्यां कार्यप्रवृत्तौ कस्यापि निर्णयस्य, अन्तिमादेशस्य, दण्डादेशस्य वा पुनर्विचारार्थं प्राप्तानां प्रार्थनानां ग्रहणे, श्रवणे च काः अपि अपराः शक्तीः विधिना प्रदातुं क्षमते, तादृशानां प्रतिबन्धानां परिसीम्नां च अधीनं यादृशाः तद् विधौ विनिर्दिष्टाः स्युः ।

**उच्चतमन्यायालये । पुनर्विचारप्रार्थनाकृते प्रमाणपत्रम् ।**

[2][१३४अ. १३२-तमानुच्छेदस्य (१) खण्डे, १३३-तमानुच्छेदस्य (१) खण्डे, १३४-तमानुच्छेदस्य (१) खण्डे वा निर्दिष्टं निर्णयं, आज्ञप्तिं, अन्तिमादेशं, दण्डादेशं वा पारयन्, ददन् वा प्रत्येकं उच्चन्यायालयः एतादृशात् पारितकरणात्, प्रदानात् वा परं यथासम्भवं शीघ्रं, यथायथं १३२-तमानुच्छेदस्य (१) खण्डे, १३३-तमानुच्छेदस्य (१) खण्डे १३४-तमानुच्छेदस्य (१) खण्डे वा निर्दिष्टस्वरूपं प्रमाणपत्रं एतद्वादस्य सम्बन्धे दातव्यं न वा इति प्रश्नस्य अवधारणं—

(क) यदि सः एवं कर्तुं उचितं मन्यते तर्हि, स्वप्रेरणया कर्तुं क्षमते; तथा च

(ख) यदि एतादृशस्य निर्णयस्य, आज्ञप्तेः अन्तिमादेशस्य दण्डादेशस्य वा पारितकरणात् प्रदानात् वा परं सपदि एव व्यथितपक्षकारेण तस्य कृते वा, मौखिकं आवेदनं कृतं भवेत्,

तर्हि कुर्यात् ।]

**विद्यमानविध्यधीनं 'फेडरल' न्यायालयस्य अधिकारिता, शक्तयश्च उच्चतमन्यायालयेन प्रयोक्तव्याः ।**

१३५. यावत् संसद् विधिना अन्यथा न उपबन्धयति तावत्, उच्चतमन्यायालयः अपि तस्य कस्यापि विषयस्य सम्बन्धेन अधिकारितां शक्तींश्च भजेत यं १३३-तमानुच्छेदगताः १३४-तमानुच्छेदगताः वा उपबन्धाः न विषयीकुर्वन्ति, यदि तद्विषयसम्बन्धे अधिकारिता शक्तयश्च कस्यापि विद्यमानस्यविधेः अधीनं अस्य संविधानस्य प्रारम्भात् प्राक् "फेडरल" न्यायालयेन प्रयोक्तव्याः आसन् ।

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य १९-अनुभागेन "प्रमाणयति" इति शब्दात् प्रति एतत् संनिवेशितम् (१-८-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. उपर्युक्ताधिनियमस्य २०-अनुभागेन एषः अनुच्छेदः अन्तर्वेशितः (१-८-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**१३६.** (१) एतस्मिन् अध्याये किमपि सत्यपि उच्चतमन्यायालयः भारतराज्यक्षेत्रे केनापि न्यायालयेन न्यायाधिकरणेन वा कस्मिन् अपि वादे, विषये वा पारितस्य, कृतस्य वा निर्णयस्य, आज्ञप्तेः, अवधारणस्य, दण्डादेशस्य, आदेशस्य वा पुनर्विचारार्थं प्राप्तायाः प्रार्थनायाः कृते स्वविवेकेन विशेषानुमतिं दातुं क्षमते । **पुनर्विचारप्रार्थनार्थं उच्चतमन्यायालयस्य विशेषानुमतिः ।**

(२) (१) खण्डगतं किमपि सशस्त्रबलसम्बन्धिना केनापि विधिना तदधीनं वा घटितेन केनापि न्यायालयेन न्यायाधिकरणेन वा पारितं, कृतं वा निर्णयं, अवधारणं, दण्डादेशं, आदेशं वा न विषयीकुर्यात् ।

**१३७.** उच्चतमन्यायालयः संसदा प्रणीतस्य कस्यापि विधेः अधीनं १४५-तमानुच्छेदं अनुसृत्य प्रणीतानां नियमानां वा अधीनं कस्यापि स्वोदीरितस्य निर्णयस्य स्वप्रदत्तस्य आदेशस्य वा पुनर्विलोकने शक्तिं भजेत । **उच्चतमन्यायालयेन कृतानां निर्णयानां आदेशानां च पुनर्विलोकनम् ।**

**१३८.** (1) उच्चतमन्यायालयः सङ्घसूचीस्थविषयाणां अन्यतमस्य कस्यापि विषयस्य सम्बन्धेन तादृशीः अपराः अधिकारिताः शक्तीश्च भजेत यादृशीः संसद् विधिना प्रदद्यात् । **उच्चतमन्यायालयस्य अधिकारितायाः वृद्धिः ।**

(२) यदि संसद् उच्चतमन्यायालयेन तादृशीनां अधिकारितानां शक्तीनां च प्रयोगाय विधिना उपबन्धयेत् तर्हि उच्चतमन्यायालयः कस्यापि विषयस्य सम्बन्धेन तादृशीः अपराः अधिकारिताः शक्तीश्च भजेत यादृश्यः भारतशासनेन, कस्यापि राज्यस्य शासनेन च विशेषसमयेन प्रदत्ताः स्युः ।

**१३९.** ३२-तमानुच्छेदस्य (२) खण्डे वर्णितेभ्यः व्यतिरिक्तानां केषामपि प्रयोजनानां कृते निदेशानां, आदेशानां, बन्दीप्रत्यक्षीकरण-परमादेश-प्रतिषेध-अधिकारपृच्छा-उत्प्रेषणादीन् च अन्तर्भावयतां लेखानां वा तेषां अन्यतमस्य कस्यापि प्रचालने शक्तिं संसद् विधिना उच्चतमन्यायालयाय प्रदद्यात् । **केषांचित् लेखविशेषाणां प्रचालनार्थं उच्चतमन्यायालयाय शक्तीनां प्रदानम् ।**

[1][**१३९अ.** [2][(१) येषु समानाः, सारतः समानाः वा, विधिप्रश्नाः अन्तर्भाविताः सन्ति, तादृशाः वादाः यदि उच्चतमन्यायालयस्य समक्षं तथा च एकस्य उच्चन्यायालयस्य तदधिकानां वा उच्चन्यायालयानां समक्षं लम्बिताः सन्ति, तथा च उच्चतमन्यायालयः स्वप्रेरणया, अथवा भारतस्य महान्यायवादिना वा तादृशस्य कस्यापि वादविषयस्य पक्षकारेण कृतस्य आवेदनस्य आधारेण समाहितः भवति यद् एतादृशाः प्रश्नाः सार्वजनिकमहत्वयुक्ताः सारवन्तश्च सन्ति तर्हि उच्चतमन्यायालयः उच्चन्यायालयस्य उच्चन्यायालयानां वा समक्षं लम्बितं वादविषयं, वादविषयान् वा स्वस्य समक्षं प्रत्याहर्तुं, स्वयं च तादृशानां सर्वेषां वादविषयाणां निर्वर्तनं च कर्तुं क्षमते— **केषांचित् वादानां अन्तरणम्।**

परन्तु उच्चतमन्यायालयः एवं प्रत्याहृतं वादविषयं उक्तविधिप्रश्नानां अवधारणात् परं तादृशानां प्रश्नानां विषये स्वीयनिर्णयस्य प्रतिलिपिना सह, यस्मात् उच्चन्यायालयात् सः प्रत्याहृतः आसीत् तस्मै प्रतिनिर्वर्तयितुं क्षमते; तथा च सः उच्चन्यायालयः तादृशस्य वादविषयस्य प्राप्तौ, तादृशस्य निर्णयस्य अनुरूपं तस्य वादविषयस्य निर्वर्तनं कर्तुं परां कार्यप्रवृत्तिं कुर्यात्] ।

(२) उच्चतमन्यायालयः कस्यापि उच्चन्यायालयस्य समक्षं लम्बितं कमपि वादविषयं कामपि पुनर्विचारप्रार्थनां वा, अन्यां कामपि कार्यप्रवृत्तिं वा कस्मै अपि अन्यस्मै उच्चन्यायालयाय अन्तरितं कर्तुं क्षमते यदि सः न्यायप्रयोजनपूर्त्यर्थं एवं कर्तुं समीचीनं मन्येत ।]

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २४-अनुभागेन एषः अनुच्छेदः अन्तर्वेशितः (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २१-अनुभागेन (१) खण्डात् प्रति एषः खण्डः संनिवेशितः (१-८-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**भागः ५—सङ्घः—अनु० १४०-१४४अ**

**उच्चतमन्यायालयस्य आनुषङ्गिकशक्तयः।**

१४०. उच्चतमन्यायालयं अनेन संविधानेन तदधीनं वा तस्मै प्रदत्ताधिकारितायाः अधिकप्रभाविरूपेण प्रयोगे समर्थं कर्तुं, संसद् एतत् संविधानस्य उपबन्धानां अन्यतमेन केनापि न असङ्गतानां, तादृशीनां अनुपूरकशक्तीनां प्रदानाय उपबन्धयेत् यादृश्यः आवश्यकाः वाञ्छनीयाश्च प्रतीयेरन्।

**उच्चतम न्यायालयेन घोषितः विधिः सर्व-न्यायालयानां आबद्धकारी।**

१४१. उच्चतमन्यायालयेन घोषितः विधिः भारतराज्यक्षेत्रस्य अभ्यन्तरे सर्वेषां न्यायालयानां आबद्धकारी भवेत्।

**उच्चतमन्यायालयस्य आज्ञप्तीनां, आदेशानां च प्रवर्तनं; प्रकटनादीनां विषये आदेशाश्च।**

१४२. (१) उच्चतमन्यायालयः स्वाधिकारितायाः प्रयोगे तादृशीं आज्ञप्तिं पारयितुं, तादृशं आदेशं वा कर्तुं क्षमते यादृशः स्वस्य समक्षं लम्बिते कस्मिन् अपि वादे, विषये वा पूर्णं न्यायं कर्तुं आवश्यकः भवेत्; तथा च एवं पारिता आज्ञप्तिः, कृतः आदेशः वा भारतस्य राज्यक्षेत्रे सर्वत्र तादृश्या रीत्या प्रवर्तनीयः भवेत् यादृशी संसदा प्रणीतेन केनापि विधिना, तदधीनं वा विहिता स्यात् तथा च यावत् तदर्थं उपबन्धः न प्रणीतः अस्ति तावत् एतादृश्या रीत्या यादृशीं राष्ट्रपतिः आदेशेन[1] विदधीत।

(२) कस्यापि जनस्य उपस्थितेः सम्पादनं, केषामपि लेख्यानां प्रकटनं पुरोनिधानं वा, कस्यापि स्वावमानस्य अन्वेषणं कारयितुं दण्डं दातुं वा एतदर्थं संसदा प्रणीतस्य कस्यापि विधेः उपबन्धानां अधीनतया उच्चतमन्यायालयः सर्वस्य भारतस्य राज्यक्षेत्रस्य सम्बन्धेषु कस्यापि आदेशस्य समस्तां, सर्वां च शक्तिं भजेत।

**उच्चतमन्यायालयेन परामर्शाय राष्ट्रपतौ शक्तिः।**

१४३. (१) यदि कस्मिन् अपि काले राष्ट्रपतिः प्रत्येति यद् विधेः तथ्यस्य वा प्रश्नः उत्पन्नः अस्ति, उत्पत्तुं सम्भवति वा यः तादृशस्वभावः तादृशसार्वजनिक महत्त्ववान् च अस्ति यद् उच्चतमन्यायालयस्य तद्विषये मतिप्राप्तिः समीचीना अस्ति तर्हि सः तं प्रश्नं विचारार्थं तस्मै न्यायालयाय निर्दिशेत्, सः न्यायालयश्च, यादृशं उचितं मन्येत, तादृशात् श्रवणात् परं राष्ट्रपतिं स्वमतिं प्रतिवेदयेत्।

(२) १३१-तमानुच्छेदस्य पारन्तुके [2][ * * * ] यत् किमपि सत्यपि, राष्ट्रपतिः [3][उक्त-पारन्तुके] वर्णितप्रकारकं विवादं उच्चतमन्यायालयाय तन्मत्यर्थं निर्दिशेत्; अथ च उच्चतमन्यायालयः यादृशं उचितं मन्येत तादृशात् श्रवणात् परं तद्विषयिकीं स्वमतिं राष्ट्रपतिं प्रतिवेदयेत्।

**उच्चतमन्यायालयस्य साहाय्ये असैनिकैः न्यायिकैश्च प्राधि-कारिभिः कार्यकरणम्।**

१४४. भारतराज्यक्षेत्रस्थाः सर्वे असैनिकाः न्यायिकाश्च प्राधिकारिणः उच्चतमन्यायालस्य साहाय्ये कार्यं कुर्युः।

१४४ अ. [4][विधीनां सांविधानिकवैधतासम्बन्धिनां प्रश्नानां निर्वर्तनस्य कृते विशेषोपबन्धाः] संविधानस्य (चित्वारिंशत्तमं संशोधनं) अधिनियमः, १९७७ इत्यस्य ५-अनुभागेन निरसितः (१३-४-१९७८ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

---

१. उच्चतमन्यायालयस्य (आज्ञप्तीनां आदेशानां च) प्रवर्तनाय १९५४-वर्षस्य आदेशः (सां० आ० ४७) द्रष्टव्यः।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्याच "(१) खण्ड गतं" इति लोपितम्।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्याच "उक्त खण्डे" इत्येतस्मात् प्रति एतत् संनिवेशितम्।

४. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २५-अनुभागेन एषः अनुच्छेदः अन्तर्वेशितः (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

**न्यायालयस्य नियमादयः ।**

१४५. (१) संसदा प्रणीतस्य कस्यापि विधेः उपबन्धानां अधीनं उच्चतमन्यायालयः काले काले राष्ट्रपतेः अनुमोदनेन तत् न्यायालयस्य कार्यपद्धत्याः प्रक्रियायाश्च साधारणतया विनियमनाय नियमान् प्रणेतुं क्षमते ये—

(क) तस्मिन् न्यायालये विधिव्यवसायं कुर्वाणानां जनानां सम्बन्धिनः नियमान्;

(ख) पुर्नविचारप्रार्थनानां श्रवणार्थं प्रक्रियायाः सम्बन्धिनः, तथा च तत् न्यायालयस्य पुर्नविचार-प्रार्थनाविषयाः यस्मिन् कालाभ्यन्तरे प्रवेशनीयाः सन्ति तत्कालमन्तर्भावयतां पुर्नविचारप्रार्थनाभिः सम्बध्य-मानानां अन्यविषयाणां सम्बन्धिनश्च नियमान्;

(ग) तृतीयभागेन प्रदत्तानां अधिकाराणां अन्यतमस्य कस्यापि प्रवर्तनार्थं तत्न्यायालयस्य कार्यप्रवृत्तीनां सम्बन्धिनः नियमान्;

[1][(गग) [2][१३९अ अनुच्छेदस्य] अधीनं तस्मिन् न्यायालये कार्यप्रवृत्तीनां सम्बन्धिनः नियमान्];

(घ) १३४-तमानुच्छेदस्य (१) खण्डस्य (ग) उपखण्डस्य अधीनं पुर्नविचारप्रार्थनानां ग्रहणसम्बन्धिनः नियमान्;

(ङ) तेन न्यायालयेन उदीरितः निर्णयः, कृतः वा आदेशः येषां अधीनं पुर्नविलोकितः भवेत् तेषां प्रतिबन्धानां सम्बन्धिनः, यत् कालाभ्यन्तरे एतादृशपुनर्विलोकनार्थं तं न्यायालयं आवेदनपत्राणि प्रदेयानि सन्ति तं कालं अन्तर्भावयन्त्याः एतादृश्याः पुर्नविलोकनप्रक्रियायाः सम्बन्धिनश्च नियमान्;

(च) तस्मिन् न्यायालये कासु अपि कार्यप्रवृत्तिषु जायमानानां तदानुषङ्गिकानां व्ययानां सम्बन्धिनः, तत्रत्यानां कार्यप्रवृत्तीनां सम्बन्धे मूल्यरूपेण प्रभारितानां प्रशुल्कानां सम्बन्धिनश्च नियमान्;

(छ) प्रातिभाव्यस्वीकरणस्य सम्बन्धिनः नियमान्;

(ज) कार्यप्रवृत्तीनां रोधस्य सम्बन्धिनः नियमान्;

(झ) यां सः न्यायालयः तुच्छां, उद्वेगकरीं, विलम्बनं उद्दिश्य कृतां वा प्रत्येति तस्याः पुर्नविचार-प्रार्थनायाः सङ्क्षेपतः अवधारणार्थं उपबन्धकरान् नियमान्;

(ञ) ३१७-तमानुच्छेदस्य (१) खण्डे निर्दिष्टे अन्वेषणे अनुप्रयुक्तायाः प्रक्रियायाः सम्बन्धिनः नियमान् च,

अन्तर्भावयन्ति ।

(२) अस्य अनुच्छेदस्य अधीनं प्रणीताः नियमाः [3][(३) खण्डस्य उपबन्धानां [4]* * *] अधीनं, यैः कस्मै अपि प्रयोजनाय उपवेष्टव्यं अस्ति तेषां न्यायाधीशानां न्यूनतमां सङ्ख्यां नियतां कर्तुं क्षमन्ते, एकाकिन्यायाधीशानां खण्डन्यायालयानां च शक्तीनां विषयेषु उपबन्धियितुं चापि क्षमन्ते ।

(३) अस्य संविधानस्य निर्वचनस्य सम्बन्धी कोपि सारवान् विधिप्रश्नः यस्मिन् वादे अन्तर्भावितः अस्ति तस्य विनिश्चयार्थं १४३-तमानुच्छेदस्य अधीनं कस्यापि निर्देशार्थं निवेदनस्य श्रवणार्थं वा यैः उपवेष्टव्यं अस्ति तेषां न्यायाधीशानां [4][* * * [5]न्यूनतमा सङ्ख्या] पञ्च भवेत्;

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २६-अनुभागेन एषः उपखण्डः अन्तर्वेशितः (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (त्रिचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७७ इत्यस्य ६-अनुभागेन "१३१अ १३९अ च अनुच्छेदयोः" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१३-४-१९७८ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २६-अनुभागेन "(३) खण्डगतोप-बन्धानां" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. संविधानस्य (त्रिचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७७ इत्यस्य ६-अनुभागेन कतिपयाः शब्दाः अङ्काः अक्षराश्च लोपिताः (१३-४-११७८ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २६-अनुभागेन "न्यूनतमा सङ्ख्या" इत्येतस्मात् प्रति एतत् संनिवेशितं (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

परन्तु यत्र अस्य अध्यायस्य १३२-तमानुच्छेदात् भिन्नानां उपबन्धानां अधीनं पुनर्विचारप्रार्थनां शृण्वन् न्यायालयः पञ्चभ्यः न्यूनैः न्यायाधीशैः सम्भूतः अस्ति, तथा च पुनर्विचारप्रार्थनायाः श्रवणप्रसरे सः न्यायालयः समाहितः अस्ति यत् एषा पुनर्विचारप्रार्थना संविधाननिर्वचनस्य एतादृशं सारवन्तं विधिप्रश्नं अन्तर्भावयति यस्य अवधारणं तस्याः पुनर्विचारप्रार्थनायाः निर्वर्तनार्थं आवश्यकं अस्ति, तत्र एतादृशः न्यायालयः एतादृशं प्रश्नं अन्तर्भावयतः कस्यापि वादस्य विनिश्चयार्थं अनेन खण्डेन अपेक्षितरूपेण घटिताय न्यायालयाय मत्यर्थं तं प्रश्नं प्रदद्यात् तथा च तस्य मत्याः प्राप्तौ तस्याः पुनर्विचारप्रार्थनायाः निर्वर्तनं कुर्यात् तादृश्याः मतेः अनुरूपम् ।

(४) उच्चतमन्यायालयः कमपि निर्णयं विवृते एव न्यायालये व्याहृतं कुर्यात्, नान्यथा; तथा च १४३-तमानुच्छेदाधीनं प्रतिवेदनं अपि विवृतन्यायालये व्याहृतमत्यनुसारं कुर्यात्, नान्यथा ।

(५) कोपि निर्णयः कापि एतादृशी मतिश्च तस्य वादस्य श्रवणे उपस्थितानां न्यायाधीशानां मध्ये बहुसङ्ख्यकानां सहमत्या एव उच्चतमन्यायालयेन व्याहृतौ भवेताम्, नान्यथा; किन्तु एतत् खण्डगतं किमपि यः सहमतः न भवति तं न्यायाधीशं, विमतस्य निर्णयस्य, मतेः वा व्याहरणात् न निवारयेत् ।

**उच्चतमन्यायालयस्य अधिकारिणः, सेवकाः, व्ययाश्च ।**

१४६. (१) उच्चतमन्यायालयस्य अधिकारिणां, सेवकानां च नियुक्तयः भारतस्य मुख्यन्यायमूर्तिना, तेन निर्दिष्टेन अन्येन न्यायाधीशेन अधिकारिणा वा, कृताः भवेयुः—

परन्तु राष्ट्रपतिः नियमेन एतद् अपेक्षितुं क्षमः यत् यादृश्यः अवस्थाः नियमे विनिर्दिष्टाः स्युः तादृशीषु अवस्थासु यः कोपि जनः न्यायालयेन पूर्वं एव असंलग्नः सः जनः सङ्घलोकसेवायोगेन सह परामर्शनं कृत्वा एव न्यायालयेन संपृक्ते कस्मिन् अपि पदे नियुक्तः भवेत्, नान्यथा ।

(२) संसदा प्रणीतस्य कस्यापि विधेः उपबन्धानां अधीनं, उच्चतमन्यायालयस्य अधिकारिणां, सेवाकानां च सेवाप्रतिबन्धाः तादृशाः भवेयुः यादृशाः भारतस्य मुख्यन्यायमूर्तिना अथवा तदर्थं नियमप्रणयनार्थं भारतस्य मुख्यन्यायमूर्तिना प्राधिकृतेन न्यायालयस्य अन्येन न्यायाधीशेन, अधिकारिणा वा प्रणीतैः नियमैः विहिताः भवेयुः—

परन्तु एतत् खण्डाधीनं प्रणीताः नियमाः यावत् पर्यन्तं वेतनैः भक्तैः, अनुपस्थित्यनुमत्या, निवृत्तिवेतनैः वा सम्बद्धाः सन्ति तावत् ते राष्ट्रपतेः अनुमोदनं अपेक्षेरन् ।

(3) उच्चतमन्यायालयस्य अधिकारिभ्यः सेवकेभ्यश्च तेषां सम्बन्धे वा प्रदेयानि सर्वाणि वेतनानि, भक्तानि, निवृत्तिवेतनानि च अन्तर्भावयन्तः उच्चतमन्यायालयस्य प्रशासनव्ययाः भारतस्य सञ्चितनिधौ भारिताः भवेयुः तथा तेन न्यायालयेन आदत्ताः प्रशुल्काः अन्यानि धनानि वा तस्य निधेः भागाः भवेयुः ।

**निर्वचनम् ।**

१४७. अस्मिन् अध्याये, ६-भागस्य ५-अध्याये च अस्य संविधानस्य निर्वचनेन सम्बन्धिनः कस्यापि सारवतः विधिप्रश्नस्य ये निर्देशाः सन्ति तेषां अर्थः एवं कृतः भवेत् यत् ते भारतशासनाधिनियमः, १९३५ इत्यस्य (तं अधिनियमं संशोधयन्ति अनुपूरयन्ति वा कानि अपि अधिनियमनानि अन्तर्भावयतः)अथवा कस्यापि सपरिषदादेशस्य, तदधीनं वा प्रणीतस्य कस्यापि आदेशस्य अथवा भारतीयस्वतन्त्रताधिनियमः, १९४७ इत्यस्य, तदधीनं प्रणीतस्य कस्यापि आदेशस्य वा निर्वचनेन सम्बन्धिनः कस्यापि सारवतः विधिप्रश्नस्य निर्देशान् अन्तर्भावयन्ति ।

## अध्यायः ५—भारतस्य नियन्त्रकमहलेखापरीक्षकः

**भारतस्य नियन्त्रक-महालेखा परीक्षकः ।**

१४८. (१) भारतस्य एकः नियन्त्रकमहालेखापरीक्षकः भवेत् यः राष्ट्रपतिनाः स्वहस्ताङ्कितेन मुद्रासहितेन अधिपत्रेण नियुक्तः भवेत्, तथा च सः केवलं उच्चतमन्यायालयस्य न्यायाधीशानां कृते निर्धारितरीत्या तैरेव च आधारैः पदात् अपसारितः भवेत् ।

(२) भारतस्य नियन्त्रकमहालेखापरीक्षकरूपेण नियुक्तः प्रत्येकं जनः स्वपदारोहणात् प्राक्, राष्ट्रपतेः, तेन तदर्थं नियुक्तस्य कस्यचित् जनस्य वा समक्षं तृतीयानुसूच्यां एतदर्थं उल्लिखिते प्ररूपे शपथं, प्रतिज्ञानं वा कुर्यात् तं च स्वहस्ताङ्कितं कुर्यात् ।

(३) नियन्त्रकमहालेखापरीक्षकस्य वेतनं सेवायाः अन्ये च प्रतिबन्धाः तादृशाः भवेयुः यादृशाः संसदा विधिना अवधारिताः स्युः; तथा च यावत् ते एवं अवधारिताः न स्युः तावत् तथा भवेयुः यथा द्वितीयानुसूच्यां विनिर्दिष्टाः—

परन्तु नियन्त्रकमहालेखापरीक्षकस्य अनुपस्थित्यनुमत्या, निवृत्तिवेतनेन, निवृत्तिवयसा वा सम्बन्धिषु तस्य अधिकारेषु तस्य नियुक्तेः परं तादृशं परिवर्तनं न भवेत् यादृशं तस्मै लाभस्य न्यूनीकारकं भवेत् ।

(४) नियन्त्रकमहालेखापरीक्षकः स्वपदधारणात् प्रविरामात् परं भारतशासनस्य अधीनाय कस्यापि राज्यशासनस्य अधीनाय वा कस्मै अपि पदाय पात्रं न भवेत् ।

(५) भारतस्य लेखापरीक्षा-लेखाविभागे सेवां कुर्वाणानां जनानां सेवाप्रतिबन्धाः नियन्त्रकमहालेखापरीक्षकस्य प्रशासनशक्तयश्च एतत् संविधानस्य उपबन्धानां, संसदा प्रणीतस्य कस्यापि विधेश्च अधीनं, तादृशाः भवेयुः यादृशाः नियन्त्रकमहालेखापरीक्षकेण सह परामर्शनात् परं राष्ट्रपतिना प्रणीतैः नियमैः विहिताः स्युः ।

(६) नियन्त्रकमहालेखापरीक्षकस्य कार्यालयस्य प्रशासनव्ययाः, तत् कार्यालये सेवां कुर्वाणेभ्यः जनेभ्यः तत्-सम्बन्धे च प्रदेयानि सर्वाणि वेतनानि, भक्तानि, निवृत्तिवेतनानि च अन्तर्भावयन्तः भारतस्य सञ्चितनिधौ भारिताः भवेयुः ।

**नियन्त्रकमहालेखा-परीक्षकस्य कर्तव्यानि शक्तयश्च ।**

**१४९.** नियन्त्रकमहालेखापरीक्षकः सङ्घस्य च राज्यानां च अन्यस्य कस्यापि च प्राधिकारिणः निकायस्य वा लेखानां सम्बन्धे तादृशानि कर्त्तव्यानि आचरेत् तादृशीः शक्तीश्च प्रयोजयेत् यादृशानि संसदा प्रणीतेन केनापि विधिना तदधीनं वा विहितानि भवेयुः, यावत् च तदर्थं उपबन्धः एवं प्रणीतः न स्यात् तावत् सङ्घस्य राज्यनां च सम्बन्धे सः तादृशानि कर्त्तव्यानि आचरेत् तादृशीः शक्तीश्च प्रयोजयेत् यादृशानि अस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं भारताधिनिवेशस्य लेखानां सम्बन्धे प्रान्तानां लेखानां च सम्बन्धे भारतस्य महालेखापरीक्षकाय प्रदत्तानि आसन्, तेन प्रयोक्तव्यानि वा आसन् ।

**संङ्घस्य राज्यानां च लेखाना प्ररुपम् ।**

[1][**१५०.** तादृशेन रूपेण सङ्घस्य राज्यानां च लेखाः रक्षिताः भवेयुः यादृशेन रूपेण भारतस्य नियन्त्रक-महालेखापरीक्षकस्य [2][मन्त्रणां प्राप्य] राष्ट्रपतिः विदधीत ।]

**लेखापरीक्षाप्रतिवेदनानि ।**

**१५१.** (१) भारतस्य नियन्त्रकमहालेखापरीक्षकस्य सङ्घस्य लेखाभिः सम्बध्यमानानि प्रतिवेदनानि राष्ट्रपतेः पुरतः स्थापितानि भवेयुः यः तानि संसदः प्रत्येकं सदनस्य समक्षं संनिधापयेत् ।

(२) भारतस्य नियन्त्रकमहालेखापरीक्षकस्य राज्यस्य लेखाभिः सम्बध्यमानानि प्रतिवेदनानि तद्राज्य-सम्बन्धिनः राज्यपालस्य [3][* * *] पुरतः स्थापितानि भवेयुः यः तानि राज्यविधानमण्डलस्य समक्षं संनिधापयेत् ।

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २७-अनुभागेन १५०-तमअनुच्छेदात् प्रति एषः संनिवेशितः (१-४-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २२-अनुभागेन "विमर्शानन्तरं" इत्येतस्मात् प्रति एतत् संनिवेशितम् (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन "राजप्रमुखस्य वा" इत्येतौ शब्दौ लोपितौ ।

## भाग : ६

# [1][* * *] राज्यानि

## अध्याय : १—साधारणम्

परिभाषा ।

१५२. अस्मिन् भागे, यावत् सन्दर्भेण अन्यथा अपेक्षितं न स्यात्, तावत् "राज्य" शब्दः [2][जम्मू-कश्मीर राज्यं नान्तर्भावयति ।]

## अध्याय : २—कार्यपालिका

### राज्यपालः

राज्यानां राज्यपालाः ।

१५३. प्रत्येकं राज्यस्य कृते एकः राज्यपालः भवेत्—

[3][परन्तु एतदनुच्छेदगतं किमपि, कस्यापि एकस्य जनस्य, द्वयोः, अधिकानां वा राज्यानां कृते राज्यपालरूपेण नियुक्तिं न निवारयेत् ।]

राज्यस्य कार्यपालिका शक्तिः ।

१५४. (१) राज्यस्य कार्यपालिका शक्तिः राज्यपाले निहिता भवेत्, सः एतस्याः प्रयोगं अस्य संविधानस्य अनुसारेण स्वयं, स्वस्य अधीनस्थानां पदाधिकारिणां द्वारा वा, कुर्यात् ।

(२) एतदनुच्छेदगतं किमपि—

(क) अन्यस्मै कस्मै अपि प्राधिकारिणे, केनापि विद्यमानविधिना प्रदत्तानि कानि अपि कृत्यानि राज्यपाले अन्तरितानि करोति, इति न मन्येत; अथवा

(ख) राज्यपालस्य कस्मै अपि अधीनप्राधिकारिणे कृत्यानां विधिना प्रदानात् संसदं, राज्यस्य विधान-मण्डलं वा, न निवारयेत् ।

राज्यपालस्य नियुक्तिः ।

१५५. राज्यस्य राज्यपालः राष्ट्रपतिना स्वहस्ताङ्कितेन मुद्रासहिताधिपत्रेण नियुक्तः भवेत् ।

राज्यपालस्य पदावधिः ।

१५६. (१) राज्यपालः राष्ट्रपतेः प्रसादपर्यन्तं पदं धारयेत् ।

(२) राज्यपालः, राष्ट्रपतिं सम्बोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वपदं त्यक्तुं क्षमते ।

(३) अस्य अनुच्छेदस्य पूर्वगामिनां उपबन्धानां अधीनं, राज्यपालः स्वपदारोहणस्य दिनात् पञ्चवर्षावधिं यावत्, पदं धारयेत्—

परन्तु राज्यपालः स्वपदावधेः समाप्तौ अपि तावत् पदधारणं अनुवर्तयेत् यावत् तस्य उत्तराधिकारी स्वपदं न आरोहति ।

राज्यपालरूपेण नियुक्तये अर्हताः ।

१५७. सः एव जनः राज्यपालरूपेण नियुक्तेः पात्रं भवेत्, यः भारतस्य नागरिकः अस्ति, यश्च वयसः पञ्चत्रिंशद्वर्षाणि पूरितवान् ।

राज्यपालपदस्य प्रतिबन्धाः ।

१५८. (१) राज्यपालः संसदः अन्यतरस्मिन् सदने प्रथमानुसूच्यां विनिर्दिष्टस्य कस्यापि वा राज्यस्य विधानमण्डलस्य एकतरस्य सदनस्य सदस्यः न भवेत्; किंच यदि संसदः अन्यतरस्य सदनस्य प्रथमानुसूच्यां

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूचीस्थ—(क)-भागीय" इति शब्दाः लोपिता ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "प्रथमानुसूचीस्थ—(क)-भाग उल्लिखितराज्यमभिदधाति" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

३. उपर्युक्ताधिनियमस्य ५-अनुभागेन एषः पारन्तुकः परिवर्धितः ।

विनिर्दिष्टस्य कस्यापि वा राज्यस्य विधानमण्डलस्य एकतरस्य सदनस्य वा सदस्यः राज्यपालरूपेण नियुक्तः भवेत्, तर्हि सः तस्मिन् सदने तस्मिन् दिनाङ्के रिक्तीकृतस्थानः मन्येत यस्मिन् सः राज्यपालरूपेण स्वपदं आरोहति ।

(२) राज्यपालः अन्यत् किमपि लाभस्य पदं न धारयेत् ।

(३) राज्यपालः विना भाटकप्रदानं स्वपदावासानां उपयोगे स्वत्ववान् भवेत्, किंच तादृशेषु उपलब्धिषु, भक्तेषु, विशेषाधिकारेषु चापि स्वत्ववान् भवेत् यादृशानि संसदा विधिना अवधारितानि भवेयुः; किंच यावत् एतदर्थं एवं उपबन्धः न क्रियेत तावत् तादृशेषु उपलब्धिषु, भक्तेषु, विशेषाधिकारेषु च स्वत्ववान् भवेत् यादृशानि द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति ।

[1][(३अ) यत्र एकः एव जनः द्वयोः अधिकानां वा राज्यानां राज्यपालरूपेण नियुक्तः भवति तत्र तस्मै राज्यपालाय देयानि उपलब्धयः भक्तानि च एतेषां राज्यानां मध्ये तादृशेन अनुपातेन आवण्टितानि भवेयुः यादृशं राष्ट्रपतिः आदेशेन अवधारयेत् ।]

(४) राज्यपालस्य उपलब्धः भक्तानि च तस्य पदावधौ न न्यूनीकृतानि भवेयुः ।

१५९. प्रत्येकं राज्यपालः, राज्यपालस्य कृत्यानि निर्वहन् वा प्रत्येकं जनः, स्वपदारोहणात् प्राक् तद्राज्यस्य सम्बन्धे अधिकारितायाः प्रयोक्तुः उच्चन्यायालयस्य मुख्यन्यायमूर्तेः, तस्य अनुपस्थितौ तन्न्यायालयस्य उपलभ्य-ज्येष्ठतमन्यायाधीशस्य वा समक्षं शपथं, प्रतिज्ञानं वा निम्नलिखिते प्ररूपे कुर्यात् तं च स्वहस्ताङ्कितं कुर्यात्, तद् यथा — **राज्यपालस्य शपथः, प्रतिज्ञानं वा ।**

अहं $\frac{\text{अमुकः ईश्वरस्य नाम्ना शपे}}{\text{सत्यनिष्ठया प्रतिजाने}}$ यद् अहं श्रद्धापूर्वकं·········(राज्यस्य नाम) राज्यपालस्य कार्यपालनं करिष्यामि (अथवा राज्यपालस्य कृत्यानि निर्वक्ष्यामि), तथाच मम सम्पूर्णयोग्यतया संविधानस्य, विधेश्च परिरक्षणं, संरक्षणं, प्रतिरक्षणं च करिष्यामि किंच अहं·········(राज्यस्य नाम) जनतायाः सेवार्थं कल्याणार्थं च निरतः भविष्यामि ।

१६०. राष्ट्रपतिः तादृशान् उपबन्धान् कर्तुं क्षमते यादृशान्, अस्मिन् अध्याये यस्याः कृते उपबन्धः कृतः न भवेत् तादृश्यां आकस्मिकतायां, राज्यस्य राज्यपालस्य कृत्यानां निर्वहणार्थं सः उचितान् मन्यते । **आकस्मिकताविशेषेषु राज्यपालस्य कृत्यानां निर्वहणम् ।**

१६१. यस्मिन् विषये राज्यस्य कार्यपालिका शक्तिः विस्तारं आप्नोति तेन विषयेण सम्बध्यमानस्य कस्यापि विधेः विरुद्धे अपराधे राज्यस्य राज्यपालः सिद्धदोषस्य कस्यापि जनस्य दण्डे क्षमाणां, प्रविलम्बनानां, विरामाणां, परिहाराणां वा अनुदानाय, दण्डादेशस्य वा निलम्बनाय, परिहाराय, लघूकरणाय वा शक्तिं भजेत । **क्षमादीनां अनुदाने अभियोगविशेषेषु च दण्डादेशानां निलम्बने, परिहारे, लघूकरणे वा राज्यपालस्य शक्तिः ।**

१६२. अस्य संविधानस्य उपबन्धानां अधीनं, राज्यस्य कार्यपालिकाशक्तिः तेषु विषयेषु विस्तृता भवेत् येषां सम्बन्धे तद्राज्यस्य विधानमण्डलं विधिप्रणयने शक्तिं भजते — **राज्यस्य कार्यपालिकायाः शक्तेः विस्तारः ।**

परन्तु राज्यस्य विधानमण्डलं, संसत् च यस्मिन् विषये विधिं प्रणेतुं शक्तिं भजेते तस्मिन् कस्मिन् अपि विषये राज्यस्य कार्यपालिका शक्तिः संसदा प्रणीतेन केनापि विधिना, अनेन संविधानेन वा सङ्घाय, तत्प्राधिकारिभ्यः वा स्पष्टतया प्रदत्तायाः शक्तेः अधीना, तादृश्या शक्त्या परिसीमिता च भवेत् ।

## मन्त्रिपरिषत्

१६३. (१) अनेन संविधानेन तदधीनं वा येषु विषयेषु राज्यापालात् अपेक्ष्यते यत् सः स्वकृत्यानि तेषां अन्यतमं किमपि वा स्वविवेकानुसारं कुर्यात् तानि व्यतिरिच्य, राज्यपालाय स्वकृत्यानां प्रयोगे साहाय्यं मन्त्रणां च प्रदातुं मन्त्रिपरिषद् भवेत् यस्याः प्रमुखश्च मुख्यमन्त्री भवेत् । **राज्यपालाय साहाय्यस्य मन्त्रणायाश्च प्रदानार्थं मन्त्रिपरिषत् ।**

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६, इत्यस्य ७-अनुभागेन एषः खण्डः अन्तर्वेशितः ।

(२) यस्मिन् विषये राज्यपालः, एतत्संविधानेन तदधीनं वा, स्वविवेकानुसारं कार्यं कर्तुं अपेक्षितः अस्ति तद्रूपः अयं विषयः, तदन्यः वा अयं विषयः इति कोपि प्रश्नः यदि उत्पन्नः भवेत्, तदा राज्यपालेन स्वविवेकानुसारं तस्य प्रश्नस्य कृतः विनिश्चयः अन्तिमः भवेत्; तथा च राज्यपालेन कृतस्य कस्यापि कार्यस्य विधिमान्यता तेन स्वविवेकानुसारं कृतं कार्यं अर्हं आसीत् न वा इति आधारेण प्रश्नगता न क्रियेत ।

(३) राज्यपालाय मन्त्रिभिः काचिन् मन्त्रणा दत्ता न वा, यदि च दत्ता तर्हि का सा मन्त्रणा इति प्रश्नस्य कस्मिन् अपि न्यायालये मीमांसा न क्रियेत ।

**मन्त्रिसम्बन्धिनः अन्ये उपबन्धाः ।**

१६४. (१) राज्यपालः मुख्यमन्त्रिणः नियुक्तिं कुर्यात्; अन्येषां मन्त्रिणां नियुक्तिं च राज्यपालः मुख्यमन्त्रिणः मन्त्रणां अनुसृत्य कुर्यात्; मन्त्रिणश्च राज्यपालस्य प्रसादपर्यन्तं पदं धारयेयुः —

परन्तु बिहार-मध्यप्रदेश-ओडिश्शा राज्येषु जनजातीनां कल्याणस्य भारसाधकः एकः मन्त्री भवेत्, यः तदितरं च अनुसूचितजातीनां अप्रगतवर्गाणां च कल्याणस्य अन्यस्य कस्यापि का कार्यस्य भारसाधकः भवेत् ।

(२) मन्त्रिपरिषद् राज्यस्य विधानसभां प्रति समष्टिरूपेण उत्तरदायिनी भवेत् ।

(३) कस्यापि मन्त्रिणः, स्वपदारोहणात् प्राक्, राज्यपालः तेन पदस्य गोपनीयतायाश्च तृतीयानुसूच्यां तदर्थं निर्दिष्टे प्ररूपे शपथं कारयेत् ।

(४) यः मन्त्री निरन्तरं षण्णां मासानां कस्मिन् अपि कालावधौ राज्यविधानमण्डलस्य सदस्यः न भवेत् सः तस्य कालावधेः समाप्तौ मन्त्रित्वात् प्रविरमेत् ।

(५) मन्त्रिणां वेतनानि, भक्तानि च तादृशानि भवेयुः यादृशानि राज्यविधानमण्डलं काले काले विधिना अवधारयेत्; अथ च यावद् राज्यविधानमण्डलं एवं न अवधारयेत् तावत् तानि तथा भवेयुः यथा द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति ।

## राज्यस्य महाधिवक्ता

**राज्यस्य महाधिवक्ता ।**

१६५. (१) प्रत्येकं राज्यस्य राज्यपालः उच्चन्यायालयस्य न्यायाधीशरूपेण नियुक्तेः अर्हं कमपि जनं राज्यस्य महाधिवक्तृत्वेन नियोजयेत् ।

(२) महाधिवक्तुः एतत् कर्तव्यं भवेत् यत् सः तद्राज्यशासनाय तादृशेषु विधिसम्बन्धिविषयेषु मन्त्रणायाः प्रदानं, तादृशानां च विधिरूपाणां अन्येषां कर्तव्यानां पालनं च कुर्यात् यादृशानि काले काले तस्मै राज्यपालेन निर्दिष्टानि अर्पितानि वा स्युः, तथा च सः अनेन संविधानेन तदधीनं वा तदानीं प्रवृत्तेन केनापि अन्येन विधिना तदधीनं वा आत्मनः प्रदत्तानि कृत्यानि निर्वहेत् ।

(३) महाधिवक्ता राज्यपालस्य प्रसादपर्यन्तं स्वपदं धारयेत्, तादृशं पारिश्रमिकं च प्राप्नुयात् यादृशं राज्यपालः अवधारयेत् ।

## शासनकार्यस्य सञ्चालनम्

**राज्यशासनस्य कार्य-सञ्चालनम् ।**

१६६. (१) राज्यस्य सर्वा कार्यपालिका कृतिः राज्यपालस्य नाम्ना कृता इति कथ्येत ।

(२) राज्यपालस्य नाम्ना दत्तानां निष्पादितानां च आदेशानां, अन्येषां लिखितानां च अधिप्रमाणीकरणं तादृश्या रीत्या भवेत् यादृशी राज्यपालेन प्रणेतव्येषु नियमेषु विनिर्दिष्टा स्यात्; किं च एवं अधिप्रमाणितस्य आदेशस्य लिखितस्य वा विधिमान्यता न प्रश्नगता क्रियेत, यद् अयं आदेशः, इदं लिखितं वा न प्रणीतं निष्पादितं वा राज्यपालेन इति आधारेण ।

(३) अनेन संविधानेन तदधीनं वा येषु विषयेषु राज्यपालात् अपेक्ष्यते यत् सः स्वविवेकानुसारं राज्य-

कृत्यानि कुर्यात्, तानि व्यतिरिच्य, राज्यकार्यस्य अधिकसौकर्येण निर्वर्तनाय, मन्त्रिणां मध्ये उक्तकार्यस्य आवण्टनाय च राज्यपालः नियमान् प्रणयेत् ।

[1] * * * *

१६७. (क) राज्यकार्याणां प्रशासनविषये मन्त्रिपरिषदः सर्वेषां विनिश्चयानां, विधानार्थं प्रस्थापनानां च राज्यस्य राज्यपालाय संसूचनं; **राज्यपालाय सूचनादि-विषयकाणि मुख्यमन्त्रिणः कर्तव्यानि ।**

(ख) राज्यकार्याणां प्रशासनविषये विधानार्थं प्रस्थापना विषये च राज्यपालाय तादृशं सूचनं यादृशं स अपेक्षेत; किंच

(ग) यस्मिन् विषये केनापि मन्त्रिणा विनिश्चयः कृतः किन्तु मन्त्रिपरिषदा विचारः कृतः नास्ति, तस्य कस्यापि विषयस्य मन्त्रिपरिषदः विचारार्थं पुरतः स्थापनं यदि राज्यपालः एवं अपेक्षते,

इत्येतत् प्रत्येक राज्यस्यमुख्यमन्त्रिणः कर्तव्यं भवेत् ।

## अध्यायः ३—राज्यस्य विधानमण्डलम् साधारणम्

१६८. (१) प्रत्येक राज्यस्य विधानमण्डलं भवेत् यत् राज्यपालेन, तथा **राज्यविधानमण्डलानां घटनम् ।**

(क) [2][आन्ध्रप्रदेश-] बिहार- [3][ * * *] [4][* * *] [5][तमिलनाडु-] [6][महाराष्ट्र-] [7][कर्णाटक-] [8][* * *] [9][उत्तरप्रदेश] राज्येषु द्वाभ्यां सदनाभ्याम्;

(ख) अन्येषु राज्येषु एकसदनेन (च)

सम्भूय भवेत् ।

---

१. (४) खण्डः संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६, इत्यस्य २८-अनुभागेन अन्तर्वेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण); संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः १९७८, इत्यस्य २३-अनुभागेन लोपितश्च (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. विधानपरिषदाम् अधिनियमः, १९५७ (१९५७ वर्षस्य ३७) इत्यस्य ३-अनुभागेन अन्तर्वेशितः (१-७-१९५८ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

३. "मुम्बई" इति शब्दः मुम्बईपुनर्घटनं अधिनियमः १९६० (१९६० वर्षस्य ११)इत्यस्य २०-अनुभागेन लोपितः (१-५-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. संविधानस्य (संप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य ८(२)-अनुभागेन "मध्यप्रदेशः" इति शब्दस्य एतस्मिन् उपखण्डे अन्तर्वेशनाय दिनाङ्कः नियतः नास्ति ।

५. मद्रासराज्य (नामपरिवर्तनं) अधिनियमः, १९६८ (१९६८ वर्षस्य ५३)इत्यस्य ४-अनुभागेन "मद्रास" इति शब्दात् प्रति एषः शब्द संनिवेशितः ।

६. मुम्बईपुनर्घटनं अधिनियमः १९६० (१९६० वर्षस्य ११) इत्यस्य २०-अनुभागेन अन्तर्वेशितः (१-५-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

७. मैसूरराज्य-(नामपरिवर्तनं) अधिनियमः, १९७३ (१९७३ वर्षस्य ३१) इस्यस्य ४-अनुभागेन "मैसूर" इत्येतस्मात् प्रति "कर्णाटक" इति शब्दः संनिवेशितः (१-११-१९७३ दिनाङ्कात् प्रवर्तमानप्रभावेण) । "मैसूर" इतिशब्दः संविधानस्य(सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य ८(१)-अनुभागेन अन्तर्वेशितः आसीत् ।

८. "पञ्जाब" इतिशब्दः पञ्जाबविधानपरिषदः (उत्सादनं) अधिनियमः, १९६९ (१९६९ वर्षस्य ४६) इत्यस्य ४-अनुभागेन लोपितः (७-१-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण)।

९. पश्चिमबङ्गालविधानपरिषदः (उत्सादनं) अधिनियमः, १९६९ (१९६९ वर्षस्य २०) इत्यस्य ४-अनुभागेन "युक्तप्रान्त (उत्तरप्रदेश) पश्चिमबङ्गानां" इति एतस्मात् प्रति "उत्तरप्रदेश" इति एतत् संनिवेशितम् (१-८-१९६९ दिनाङ्कात् प्रवर्तमान प्रभावेण)" ।

(२) यत्र राज्यविधानमण्डलस्य द्वे सदने स्तः, तत्र तयोः एकं विधानपरिषद् इति अपरं च विधानसभा इति विज्ञातं भवेत्; यत्र च केवलं एकं सदनं अस्ति तत्र तद् विधानसभा इति विज्ञातं भवेत् ।

**राज्येषु विधानपरिषदां उत्सादनं, सर्जनं वा ।**

१६९. (१) १६८-तमानुच्छेदे किमपि सत्यपि विधानपरिषद्वति राज्ये एतादृश्याः परिषदः उत्सादनाय, एतादृश्या परिषदा रहिते राज्ये एतादृश्याः परिषदः सर्जने वा, संसद् विधिना उपबन्धयितुं क्षमते, यदि राज्यस्य विधानसभा एतद् उद्दिश्य सङ्कल्पं तत् सभायाः सदस्यानां समस्त सङ्ख्यायाः बहुमतेन, उपस्थितानां मतं ददतां च सदस्यानां सङ्ख्यायाः तृतीयांशद्वयात् अन्यूनेन बहुमतेन च पारयति ।

(२) (१) खण्डे निर्दिष्टः कोपि विधिः अस्य संविधानस्य संशोधनाय तादृशान् उपबन्धान् अन्तर्विष्टान् कुर्यात् यादृशाः तद् विधेः उपबन्धान् कार्यक्षमान् कर्तुं आवश्यकाः स्युः; किं च तादृशान् अनुपूरकान् आनुषङ्गिकान् पारिणामिकान् च उपबन्धान् अन्तर्विष्टान् कर्तुं क्षमते यादृशान् संसद् आवश्यकान् मन्येत ।

(३) पूर्वोक्तसदृशः कोपि विधिः ३६८-तमानुच्छेदस्य प्रयोजनानां कृते अस्य संविधानस्य संशोधनं इति न मन्येत ।

**विधानसभानां संरचना ।**

[1][१७० (१) ३३३-तमानुच्छेदस्य उपबन्धानां अधीनं, प्रत्येकराज्यस्य विधानसभा तद्राज्यगतप्रादेशिक-निर्वाचनक्षेत्रेभ्य प्रत्यक्षं निर्वाचनेन वृतैः पञ्चशतात् अनधिकैः षष्टितः अन्यूनैश्च सदस्यैः सम्भूय भवेत् ।

(२) (१)-खण्डस्य प्रयोजनानां कृते प्रत्येकं राज्यं एतादृश्या रीत्या प्रादेशिकनिर्वाचनक्षेत्रेषु विभज्येत यत् प्रत्येकनिर्वाचनक्षेत्रस्य जनसङ्ख्यायाः तत् प्रति आवण्टितानां स्थानानां सङ्ख्यायाश्च मध्ये अनुपातः समस्तराज्ये यथासाध्यं एकविधः भवेत् ।

[2][**स्पष्टीकरणम्**—अस्मिन् खण्डे "जनसंङ्ख्या" शब्दस्य अर्थे सा जनसङ्ख्या ग्राह्या या तस्यां अन्तिमायां पूर्ववृत्तायां जनगणनायां अभिनिश्चिताः यस्याः सुसम्बद्धाः अङ्काः प्रकाशिताः —

परन्तु एतस्मिन् स्पष्टीकरणे "अन्तिमायां पूर्ववृत्तायां जनगणनायां यस्याः सुसम्बद्धाः अङ्काः प्रकाशिता" इति निर्देशस्य तावत् १९७१-तमवर्षस्य जनगणनां प्रति निर्देशः इति अर्थः ग्राह्यः यावत् २०००-तमवर्षानन्तरं कृतायाः जनगणनायाः सुसम्बद्धाः अङ्का प्रकाशिताः न भवेयुः ।]

(३) प्रत्येकजनगणनायाः समाप्तौ प्रत्येकराज्यस्य विधानसभास्थानानां समस्तसङ्ख्यायाः प्रत्येकराज्यस्य प्रादेशिकनिर्वाचनक्षेत्रेषु विभाजनस्य च तादृशेन प्राधिकारिणा तादृश्या रीत्या च पुनः समायोजनं क्रियेत यत् संसद् विधिना अवधारयेत् —

परन्तु एतादृशं पुनः समायोजनं विधानसभायाः प्रतिनिधित्वे तावत् प्रभावं न आपादयेत् यावत् तदानीं विद्यमानायाः विधानसभायाः विघटनं न भवति ।]

[3][अपरं च एतादृशं पुनः समायोजनं तस्मात् दिनात् प्रभावं आपादयेत् यद् राष्ट्रपतिः आदेशेन विनिर्दिशेत्; तथा च यावत् एतादृशं पुनः समायोजनं प्रभावं न आपादयति तावत् विधानसभायाः कृते किमपि निर्वाचनं तेषां निर्वाचनक्षेत्राणां आधारेण भवेत् यानि एतादृशात् पुनः समायोजनात् पूर्वं विद्यमानानि स्युः;

तथैव च यावत् २०००-तमवर्षानन्तरं कृतायाः जनगणनायाः सुसम्बद्धाः अङ्का प्रकाशिताः न भवेयुः तावत् एतत्खण्डस्य अधीनं प्रत्येकराज्यस्य विधानसभायां स्थानानां समस्तसङ्ख्यायाः अथ च तेषां राज्यानां प्रादेशिक-निर्वाचनक्षेत्रेषु विभाजनस्य समायोजनं आवश्यकं न भवेत् ।]

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य ९-अनुभागेन १७०-तमानुच्छेदात् प्रति एषः संनिवेशितः ।

२. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २९-अनुभागेन स्पष्टीकरणात् प्रति एतत् संनिवेशितम् (३-१-१९७७ दिनाङ्कात् प्रवर्तनप्रभावेण) ।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन पारन्तुकद्वयं अन्तर्वेशितम् (३-१-१९७७ दिनाङ्कात् प्रवर्तमान-प्रभावेण) ।

१७१. (१) विधानपरिषद्वतः राज्यस्य विधानपरिषदः सदस्यानां समस्तसङ्ख्या तद्राज्यविधानसभायाः सदस्यानां समस्तसङ्ख्यायाः [1][तृतीयांशात्] अधिका न भवेत्— **विधानपरिषदां संरचना।**

परन्तु कस्यामपि अवस्थायां कस्यापि राज्यस्य विधानपरिषदः सदस्यानां समस्तसङ्ख्या चत्वारिंशतः न्यूना न भवेत्।

(२) यावत् संसद् विधिना अन्यथा उपबन्धं न करोति तावत् राज्यविधानपरिषदः रचना (३)-खण्डे उपबन्धितरीत्या भवेत्।

(३) राज्यविधानपरिषदः समस्तसङ्ख्यायाः—

(क) यथाशक्यं तृतीयांशः तस्य राज्यस्य नगरपालिकानां मण्डलमण्डलीनां, तादृशानां अन्येषां च स्थानीयानां प्राधिकरणानां यादृशानि संसद् विधिना विनिर्दिशेत्, सदस्यैः सम्भूय भूतैः निर्वाचकमण्डलैः निर्वाचितः भवेत्;

(ख) यथाशक्यं द्वादशांशः तस्मिन् राज्ये निवासिभिः तैः जनैः सम्भूय भूतैः निर्वाचकमण्डलैः निर्वाचितः भवेत् ये भारतराज्यक्षेत्रीयस्य कस्यापि विश्वविद्यालयस्य न्यूनात् न्यूनं वर्षत्रयं स्नातकाः सन्ति अथवा ये न्यूनात् न्यूनं वर्षत्रयं, तादृशीः अर्हताः धारितवन्तः सन्ति यादृशीः संसत्प्रणीतेन केनापि विधिना तदधीनं वा कस्यापि विश्वविद्यालयस्य स्नातकेन तुल्याः इति विहिताः सन्तिः;

(ग) यथाशक्यं द्वादशांशः तैः जनैः सम्भूय भूतैः निर्वाचकमण्डलैः निर्वाचितः भवेत् ये तद्राज्यस्य अभ्यन्तरे माध्यमिकपाठशालाभ्यः अनिम्नतरस्तरीयासु तादृशीषु शिक्षासंस्थासु अध्यापने न्यूनात् न्यूनं वर्षत्रयं व्याप्तृताः सन्ति यादृश्यः संसत् प्रणीतेन केनापि विधिना तदधीनं वा विहिताः सन्ति;

(घ) यथाशक्यं तृतीयांशः तद्राज्य विधानसभायाः सदस्यैः तत् सभायाः असदस्येभ्यः निर्वाचितः भवेत्;

(ङ) शेषाः सदस्याः राज्यपालेन (५)-खण्डगतोपबन्धान् अनुसृत्य नामनिर्देशिताः भवेयुः।

(४) (३) खण्डस्य (क), (ख), (ग) उपखण्डानां अधीनं निर्वाचनीयाः सदस्याः तादृशेषु प्रादेशिकेषु निर्वाचनक्षेत्रेषु वृताः भवेयुः यादृशानि संसत् प्रणीतेन केनापि विधिना तदधीनं वा विहितानि भवेयुः; तथा च उक्त-उपखण्डानां अधीनं उक्तखण्डस्थ (घ) उपखण्डस्य अधीनं च निर्वाचनानि आनुपातिक प्रतिनिधित्व पद्धतिं अनुसृत्य एकलसङ्क्रमणीयमतेन कृतानि भवेयुः।

(५) (३) खण्डस्य (ङ) उपखण्डाधीनं राज्यपालेन कृतनामनिर्देशाः सदस्याः निम्नलिखितविषयाणां विशेषज्ञानिनः व्यावहारिकानुभवन्तश्च भवेयुः; तद् यथा—

साहित्यम्, विज्ञानम्, कला, सहकार्यान्दोलनम्, सामाजिकसेवा च।

१७२. (१) प्रत्येकराज्यस्य प्रत्येकविधानसभा यदि पूर्वतरं न विघटिता स्यात् तर्हि स्वप्रथमाधिवेशनाय नियतात् दिनाङ्कात् [2][पञ्चवर्षाणि] अनुवर्तेत न तदधिकम्; उक्तपञ्चवर्षकालावधेः समाप्तिश्च तस्याः विधानसभायाः विघटने परिणमेत्— **राज्यविधानमण्डलानां अवधिः।**

परन्तु यदा आपातस्य उद्घोषणा प्रवर्तमाना अस्ति तदा संसद् उक्तकालावधिं एकस्मिन् काले एकवर्षात् अनधिकं, तस्याः उद्घोषणायाः प्रवर्तनस्य पर्यवसानात् परं कस्यामपि अवस्थायां षण्मासावधिं अनतीत्य च, विधिना वर्धयितुं क्षमते—

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य १०-अनुभागेन "एकचतुर्थांशात्" इति शब्दात् प्रति एषः शब्दः संनिवेशितः।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २४-अनुभागेन "षड्वर्षाणि" इत्येतस्मात् प्रति एतत् संनिवेशितम् (६-९-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण)। "षड्वर्षाणि" इत्येतत् "पञ्चवर्षाणि" इत्येतस्मात् प्रति संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ३०-अनुभागेन संनिवेशितं आसीत् (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

**भागः ६—राज्यानि—अनु० १७२-१७७**

(२) राज्यविधानपरिषदः विघटनं न भवेत् किन्तु तस्याः सदस्यानां यावत् शक्यं तृतीयांशः प्रत्येकद्वितीयवर्षस्य समाप्तौ संसदा तद्विषये विधिना प्रणीतान् उपबन्धान् अनुसृत्य यथासम्भवं शीघ्रं निवर्तेत ।

**राज्यविधानमण्डलस्य सदस्यत्वस्य अर्हता ।**

१७३. कोपि जनः राज्यविधानमण्डले कस्यापि स्थानस्य पूर्तये वरणार्हः केवलं तदा भवेत् यदा सः —

[1][(क) भारतस्य नागरिकः अस्ति; तथा च निर्वाचनायोगेन एतदर्थं प्राधिकृतस्य कस्यापि जनस्य समक्षं एतत् प्रयोजनस्य कृते तृतीयानुसूच्यां उल्लिखिते प्ररूपे शपथं प्रतिज्ञानं वा कुर्यात् तं च स्वहस्ताङ्कितं कुर्यात् ।]

(ख) विधानसभायाः स्थानाय अन्यूनपञ्चविंशद्वर्षवयस्कः,विधानपरिषदः स्थानाय च अन्यूनत्रिंशद्वर्षवयस्कः विद्यते; तथा च

(ग) तादृशीः अन्याः अर्हताः धारयति यादृश्यः संसदा तद्विषये कृतेन केनापि विधिना तदधीनं वा तदर्थं विहिताः भवेयुः ।

**राज्यविधानमण्डलस्य सत्राणि, सत्रावसानं, विघटनं च ।**

[2][१७४. (१) राज्यपालः काले काले राज्यस्य विधानमण्डलस्य सदनं सदने वा तादृशे काले तादृशे स्थाने च अधिवेशनाय आहूतं आहूते वा कुर्यात् यादृशं सः युक्तं मन्येत, किन्तु ईदृशस्य राज्यविधानमण्डलस्य सत्राणि, सत्राणां अवसानं विघटनं च एकस्य सत्रस्य अन्तिमोपवेशनस्य दिनाङ्कस्य तदनन्तरं भाविनः सत्रस्य प्रथमोपवेशनार्थं नियतदिनाङ्कस्य च मध्ये षण्णां मासनां व्यवधानं न भवेत् ।

(२) राज्यपालः काले काले—

(क) सदनस्य, सदनयोः अन्यतरस्य वा सत्रावसानं कर्तुं;

(ख) विधानसभायाः विघटनं कर्तुं, च

क्षमते ।

**राज्यपालस्य सदनं सदने वा प्रति अभिभाषणे सन्देशप्रेषणे च अधिकारः ।**

१७५. (१) राज्यपालः विधानसभायां अथवा विधानपरिषद्वतः राज्यस्य सम्बन्धे तद्राज्यस्य विधानमण्डलस्य अन्यतरे सदने, सहसमवेतयोः उभयोः वा सदनयोः वा अभिभाषणं कर्तुं क्षमते, तथाच तदर्थं सदस्यानां उपस्थितिं अपेक्षितुं क्षमते ।

(२) राज्यपालः तद्राज्यस्य विधानमण्डलस्य सदनं प्रति, सदने वा प्रति, तदानीं तस्मिन् विधानमण्डले लम्बितविधेयकं उद्दिश्य अन्यथा वा, सन्देशान् प्रेषयितुं क्षमते; तथा च यत् सदनं प्रति कोपि सन्देशः एवं प्रेषितः अस्ति, तत्सदनं तत्सन्देशेन विचाराय अपेक्षितं कमपि विषयं यथानुकूलं शीघ्रं विचारयेत् ।

**राज्यपालस्य विशेषाभिभाषणम् ।**

१७६. (१) राज्यपालः [3][प्रत्येक साधारणनिर्वाचनात् परं विधानसभायाः प्रथमसत्रस्य आरम्भे तथा च प्रत्येकवर्षस्य प्रथमसत्रस्य आरम्भे] विधानसभायां अथवा विधानपरिषद्वतः राज्यस्य सम्बन्धे एकत्रसमवेते सदनद्वये अभिभाषणं कुर्यात्; तथा च विधानमण्डलं तस्य आह्वानस्य कारणानि ज्ञापयेत् ।

(२) एतादृशे अभिभाषणे निर्दिष्टानां विषयाणां चर्चार्थं समयं नियन्तुं [4][ ...........] सदनस्य, अन्यतरत्ससदनस्य वा, प्रक्रियायाः विनियमनं कुर्वद्भिः नियमैः उपबन्धः कृतः भवेत् ।

**मन्त्रिणां महाधिवक्तुश्च सदनयोः सम्बन्धिताः अधिकाराः ।**

१७७. राज्यस्य प्रत्येकमन्त्री, महाधिवक्ता च तद्राज्यस्य विधानसभायां, अथवा विधानपरिषद्वतः राज्यस्य सम्बन्धे उभयोः सदनयोः, भाषणाय अन्यथा च कार्यप्रवृत्तिषु भागग्रहणाय अधिकारं भजेत; तथा च विधान-

---

१. संविधानस्य (षोडशं संशोधनं) अधिनियमः, १९६३ इत्यस्य ४-अनुभागेन (क) खण्डात् प्रति एषः खण्डः संनिवेशितः ।

२. संनिधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य ८-अनुभागेन १७४-तमानुच्छेदात् प्रति एषः अनुच्छेदः संनिवेशितः ।

३. उपर्युक्ताधिनियमस्य ९-अनुभागेन "प्रत्येकसत्रस्य" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

४. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन "तत् सदनस्य अन्यकार्यात् अस्याः पूर्ववर्तितायै च" इति शब्दाः लोपिताः ।

मण्डलस्य यस्यां समितौ सः नामनिर्दिष्टः सदस्यः भवेत् तस्यां भाषणाय अन्यथा च कार्यप्रवृत्तिषु भागग्रहणाय अधिकारं भजेत किन्तु अस्य अनुच्छेदस्य आश्रयेण सः मतदाने स्वत्ववान् न भवेत् ।

## विधानमण्डलस्य अधिकारिणः

**विधानसभायाः अध्यक्षः उपाध्यक्षश्च ।**

**१७८.** प्रत्येकराज्यस्य विधानसभा यथासम्भवं शीघ्रं स्वीयौ द्वौ सदस्यौ क्रमेण अध्यक्षरूपेण उपाध्यक्षरूपेण च वृणीत; तथा च यदा यदा अध्यक्षस्य उपाध्यक्षस्य वा पदं रिक्तं भवति, तदा तदा सा सभा अन्यं सदस्यं यथा-यथं अध्यक्षरूपेण उपाध्यक्षरूपेण वा वृणीत ।

**अध्यक्षस्य उपाध्यक्षस्य च पदरिक्तता, पदत्यागः पदात् अपसारणं च ।**

१७९. विधानसभायाः अध्यक्षरूपेण उपाध्यक्षरूपेण वा पदं धारयन् सदस्यः —

(क) स्वपदं रिक्तं कुर्यात् यदि सः तस्याः सभायाः सदस्यत्वात् प्रविरमेत्;

(ख) यदि तादृशः सदस्यः अध्यक्षः अस्ति तर्हि उपाध्यक्षं, यदि च तादृशः सदस्यः उपाध्यक्षः अस्ति तर्हि अध्यक्षं, सम्बोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वपदं कदापि त्यक्तुं क्षमते; तथा च

(ग) तदानीन्तनानां तस्याः सभायाः सर्वेषां सदस्यानां बहुमतेन पारितेन तस्याः सभायाः सङ्कल्पेन स्वपदात् अपसारितः भवितुं शक्यते—

परन्तु (ग) खण्डस्य प्रयोजनाय कोपि सङ्कल्पः तावत् प्रस्तावितः न भवेत् यावत् तत्सङ्कल्पप्रस्तावाशयस्य न्यूनात् न्यूनं चतुर्दशदिनानां सूचना न दत्ता भवेत्—

अपरं च यदा यदा सा सभा विघटिता भवेत् तदा तदा अध्यक्षः स्वपदं तद् विघटनात् परं तस्याः सभायाः प्रथमोपवेशनस्य अव्यवहितपूर्वकालपर्यन्तं न रिक्तीकुर्यात्—

**उपाध्यक्षस्य, अन्यस्य वा जनस्य अध्यक्षपदस्य कर्तव्यपालने अध्यक्षरूपेण कार्यकरणे वा शक्तिः ।**

१८०. (१) यदा अध्यक्षस्य पदं रिक्तं अस्ति तदा उपाध्यक्षेण, यदि च उपाध्यक्षस्यापि पदं रिक्तं अस्ति तदा तस्याः सभायाः तादृशेन सदस्येन तत्पदस्य कर्तव्यानि पालितानि भवेयुः यादृशं तदर्थं राज्यपालः नियोजयेत् ।

(२) विधानसभायाः कस्मिन् अपि उपवेशने अध्यक्षस्य अनुपस्थितौ उपाध्यक्षः तस्यापि च अनुपस्थितौ तादृशः जनः यादृशः विधानसभायाः प्रक्रियायाः नियमैः अवधारितः भवेत्; यदि तादृशोपि जनः अनुपस्थितः तर्हि अन्यः तादृशः जनः यादृशः तया सभया अवधारितः भवेत्, अध्यक्ष रूपेण कार्यं कुर्यात् ।

**अध्यक्षः उपाध्यक्षः वा पीठासीनः न स्यात् यदा तस्य स्वपदात् अपसारणाय सङ्कल्पः विचाराधीनः अस्ति ।**

**१८१.** (१) विधानसभायाः कस्मिन् अपि उपवेशने यदा अध्यक्षस्य स्वपदात् अपसारणाय कोपि सङ्कल्पः विचाराधीनः अस्ति तदा अध्यक्षः, अथवा यदा उपाध्यक्षस्य स्वपदात् अपसारणाय कोपि सङ्कल्पः विचाराधीनः अस्ति तदा उपाध्यक्षः उपस्थितोपि पीठासीनः न भवेत्; किं च १८०-तमानुच्छेदस्य (२) खण्डस्य उपबन्धाः प्रत्येकं तादृशं उपवेशनं तथैव विषयीकुर्युः यथा ते तद् उपवेशनं विषयीकुर्वन्ति यत्र यथायथं अध्यक्षः उपाध्यक्षः वा अनुपस्थितः भवति ।

(२) यदा अध्यक्षस्य स्वपदात् अपसारणाय कश्चिदपि सङ्कल्पः विधानसभायां विचाराधीनः अस्ति तदा सः तस्यां सभायां भाषणाय, अन्यथा तस्याः कार्यप्रवृत्तिषु भागग्रहणाय च अधिकारं भजेत; तथा च १८९-तमानुच्छेदे किमपि सत्यपि तादृशे सङ्कल्पे, तादृशीषु कार्यप्रवृत्तिषु वा, अन्यस्मिन् कस्मिन् अपि विषये वा प्रथमतः मतदाने तु स्वत्ववान् भवेत् किन्तु मतसाम्यदशायां स्वत्ववान् न भवेत् ।

**विधानपरिषदः सभापतिः उपसभापतिश्च ।**

१८२. विधानपरिषद्वतः प्रत्येकराज्यस्य विधानपरिषद् यथासम्भवं शीघ्रं स्वीयौ द्वौ सदस्यौ क्रमेण सभा-पतिरूपेण उपसभापतिरूपेण च वृणीत; तथा च यदा यदा सभापतेः उपसभापतेः वा पदं रिक्तं भवति, तदा तदा सा परिषद् अन्यं सदस्यं यथायथं सभापतिरूपेण उपसभापतिरूपेण वा वृणीत ।

**सभापतेः उपसभापतेश्च पदरिक्तता, पदत्यागः पदात् अपसारणं च।**

१८३. विधानपरिषदः सभापतिरूपेण उपसभापतिरूपेण वा पदं धारयन् सदस्यः—

(क) स्वपदं रिक्तं कुर्यात् यदि सः तस्याः परिषदः सदस्यत्वात् प्रविरमेत्;

(ख) यदि तादृशः सदस्यः सभापतिः अस्ति तर्हि उपसभापतिं, यदि च तादृशः सदस्यः उपसभापतिः अस्ति तर्हि सभापतिं सम्बोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वपदं कदापि त्यक्तुं क्षमते; तथा च

(ग) तदानीन्तनानां तस्याः परिषदः सर्वेषां सदस्यानां बहुमतेन पारितेन तस्याः परिषदः सङ्कल्पेन स्वपदात् अपसारितः भवितुं शक्यते—

परन्तु (ग) खण्डस्य, प्रयोजनाय कोपि सङ्कल्पः तावत् प्रस्तावितः न भवेत् यावत् तत्सङ्कल्पप्रस्तावाशयस्य न्यूनात् न्यूनं चतुर्दशदिनानां सूचना न दत्ता भवेत्

**उपसभापतेः अन्यस्य वा जनस्य सभापतिपदस्य कर्तव्यपालने सभापतिरूपेण कार्यकरणे वा शक्तिः।**

१८४. (१) यदा सभापतेः पदं रिक्तं अस्ति तदा उपसभापतिना, यदि च उपसभापतेः अपि पदं रिक्तं अस्ति तदा, तस्याः परिषदः तादृशेन सदस्येन, तत् पदस्य कर्तव्यानि पालितानि भवेयुः यादृशं तदर्थं राज्यपालः नियोजयेत्।

(२) विधानपरिषदः कस्मिन् अपि उपवेशने सभापतेः अनुपस्थितौ उपसभापतिः, तस्यापि च अनुपस्थितौ तादृशः जनः, यादृशः तस्याः परिषदः प्रक्रियायाः नियमैः अवधारितः भवेत्; यदि तादृशोपि जनः अनुपस्थितः तर्हि अन्यः तादृशः जनः यादृशः तया परिषदा अवधारितः भवेत्, सभापतिरूपेण कार्यं कुर्यात्।

**सभापतिः उपसभापतिः वा पीठासीनः न स्यात् यदा तस्य स्वपदात् अपसारणाय सङ्कल्पः विचाराधीनः अस्ति।**

१८५. (१) विधानपरिषदः कस्मिन् अपि उपवेशने यदा सभापतेः स्वपदात् अपसारणाय कोपि सङ्कल्पः विचाराधीनः अस्ति तदा सभापतिः, अथवा यदा उपसभापतेः स्वपदात् अपसारणाय कोपि सङ्कल्पः विचाराधीनः अस्ति तदा उपसभापतिः उपस्थितोपि, पीठासीनः न भवेत् : किं च १८४-तमानुच्छेदस्य (२) खण्डस्य उपबन्धाः प्रत्येकं तादृशं उपवेशनं तथैव विषयीकुर्युः, यथा ते तद् उपवेशनं विषयीकुर्वन्ति यत्र यथायथं सभापतिः उपसभापतिः वा अनुपस्थितः भवति।

(२) यदा सभापतेः स्वपदात् अपसारणाय कश्चिदपि सङ्कल्पः परिषदि विचाराधीनः अस्ति, तदा सः विधानपरिषदि भाषणाय, अन्यथा तस्याः कार्यप्रवृत्तिषु भागग्रहणाय च अधिकारं भजेत; किन्तु १८९-तमानुच्छेदे किमपि सत्यपि, सः तादृशे सङ्कल्पे तादृशीषु कार्यप्रवृत्तिषु वा अन्यस्मिन् कस्मिन् अपि विषये प्रथमतः मतदाने तु स्वत्ववान् भवेत्, किन्तु मतसाम्यदशायां स्वत्ववान् न भवेत्।

**अध्यक्षस्य उपाध्यक्षस्य सभापतेः उपसभापतेश्च वेतनानि, भक्तानि च।**

१८६. विधानसभायाः अध्यक्षाय, उपाध्यक्षाय तथा च विधानपरिषदः सभापतये, उपसभापतये, च तादृशानि वेतनानि, भक्तानि च सन्दत्तानि स्युः यादृशानि तद्राज्यमण्डलं विधिना क्रमशः नियतानि कुर्यात्; तथा च यावत् तदर्थं उपबन्धः कृतः नास्ति तावत् तादृशानि वेतनानि भक्तानि च सन्दत्तानि स्युः यादृशानि द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति।

**राज्यविधानमण्डलस्य सचिवालयः।**

१८७. (१) विधानमण्डलस्य सदनस्य, प्रत्येकसदनस्य वा, पृथक् सचिवीयः कर्मचारिवृन्दः भवेत्—

परन्तु विधानपरिषद्वतः राज्यस्य विषये एतत् खण्डगतस्य कस्यापि कथनस्य एवं अर्थः न ग्राह्यः यद् एतत् तादृशविधानमण्डलस्य उभयसदनसाधारणानां पदानां सर्जनं निवारयति इति।

(२) राज्यविधानमण्डलं विधिना तद्राज्यस्य विधानमण्डलस्य सदनस्य सदनयोर्वा सचिवीये कर्मचारिवृन्दे नियोजनं, नियुक्तानां जनानां सेवाविषयकान् प्रतिबन्धान् च विनियमयेत्।

(३) यावत् तद्राज्यविधानमण्डलं (२) खण्डाधीनं उपबन्धं न करोति, तावत् राज्यपालः यथायथं विधानसभायाः अध्यक्षेण, विधानपरिषदः सभापतिना वा, परामृश्य तस्याः सभायाः, तस्याः परिषदः वा सचिवीये कर्मचारिवृन्दे नियोजनस्य, नियुक्तानां जनानां सेवाविषयकाणां प्रतिबन्धानां च विनियमनाय नियमान् कर्तुं क्षमते।

किं च एवं कृताः केपि नियमाः उक्तखण्डाधीनं प्रणीतस्य कस्यापि विधेः उपबन्धानां अधीनं कार्यक्षमाः भवेयुः ।

## कार्यसञ्चालनम्

**सदस्यानां शपथः, प्रतिज्ञानं वा ।**

१८८. राज्यविधानसभायाः, राज्यविधानपरिषदः वा प्रत्येकं सदस्यः स्वस्थानग्रहणात् प्राक् राज्यपालस्य समक्षं तेन तदर्थं नियुक्तस्य कस्यचित् जनस्य वा समक्षं, तृतीयानुसूच्यां तदर्थं उल्लिखिते प्ररूपे शपथं, प्रतिज्ञानं वा कुर्यात्, तं च स्वहस्ताङ्कितं कुर्यात् ।

**सदनेषु मतदानं, रिक्ततासु सतीषु अपि सदनानां कार्यकरणे शक्तिः, गणपूर्तिश्च ।**

१८९. (१) अस्मिन् संविधाने अन्यथा उपबन्धितं व्यतिरिच्य, राज्यविधानमण्डलस्य अन्यतरस्य सदनस्य कस्मिन् अपि उपवेशने, अध्यक्षात्, सभापतेः, तद्रूपेण वा कार्यकारिणः जनात् व्यतिरिक्तानां, उपस्थितानां, मतं ददतां च सदस्यानां मध्ये बहुमतेन सर्वे प्रश्नाः अवधारिताः स्युः ।

अध्यक्षः, सभापतिः, तद्रूपेण कार्यकारी जनः वा प्रथमतः मतं न दद्यात्, किन्तु मतसाम्यावस्थायां निर्णायकं मतं भजेत, प्रयुञ्जीत च ।

(२) राज्यविधानमण्डलसदनं, तत्रत्यस्य सदस्यस्य कस्यामपि रिक्ततायां सत्यामपि, कार्यकरणे शक्तिं भजेत; तथा च यः कोपि एवं करणे अस्वत्ववान् जनः उपाविशत्, मतं वा अदात्, अन्यथा वा कार्यप्रवृत्तिषु भागग्रहणं अकरोत् इति एतदनन्तरं ज्ञाते अपि, राज्यविधानमण्डलस्य कार्यप्रवृत्तयः विधिमान्याः भवेयुः ।

(३) यावत् राज्यस्य विधानमण्डलं विधिना अन्यथा न उपबन्धयति तावत् तद्राज्यस्य विधानमण्डलसदनस्य अधिवेशनस्य घटनाय गणपूर्तिः तत् सदनस्य सदस्यानां पूर्णसङ्ख्यायाः दशमांशेन, दशभिः सदस्यैः वा, अत्र यद् अधिकतरं भवति तेन, भवेत् ।

(४) यदि राज्यविधानसभायाः राज्यविधानपरिषदः वा अधिवेशने कस्मिंश्चित् काले गणपूर्तिः नास्ति तर्हि अध्यक्षस्य, सभापतेः तद्रूपेण कार्यं कुर्वतः जनस्य वा एतत् कर्तव्यं भवेत् यत् यावत् गणपूर्तिः नास्ति तावत् तत्-सदनस्य स्थगनं, अधिवेशनस्य निलम्बनं वा कुर्यात् ।

## सदस्यानां निरर्हताः

**स्थानानां रिक्तता ।**

१९०. (१) कोपि जनः राज्यविधानमण्डलस्य उभयोः सदनयोः सदस्यः न भवेत्; तथा च यः जनः उभयोः सदनयोः सदस्यः वृतः अस्ति तेन एकस्मिन्, अन्यस्मिन् वा सदने स्थानं रिक्तं कारयितुं तद्राज्यविधान-मण्डलं विधिना उपबन्धं कुर्यात् ।

(२) कोपि जनः प्रथमानुसूच्यां विनिर्दिष्टयोः द्वयोः अधिकानां वा राज्यानां विधानमण्डलेषु सदस्यः न भवेत्; तथा च यदि कोपि जनः द्वयोः अधिकानां वा तादृशराज्यानां विधानमण्डलेषु निर्वाचितः सदस्यः अस्ति तर्हि तस्य जनस्य तादृशानां सर्वेषां राज्यानां विधानमण्डलेषु स्थानं तादृशस्य कालावधेः समाप्तेः परं रिक्तं भवेत् यादृशः राष्ट्रपतिना प्रणीतेषु नियमेषु[1] विनिर्दिष्टः स्यात्, यदि तेन एकराज्यात् व्यतिरिक्तानां सर्वेषां राज्यानां विधानमण्डलेषु स्थानं पूर्वतः एव न त्यक्तं भवेत् ।

(३) यदि राज्यविधानमण्डलस्य कस्यापि अन्यतरस्य सदनस्य सदस्यः —

(क) १९१-तमानुच्छेदस्य (१) खण्डे वर्णितानां निरर्हतानां अन्यतमया कयापि ग्रस्तः भवति; अथवा

---

१. भारतस्य असाधारणे राजपत्रे ६७८ पृष्ठे विधिमन्त्रालयस्य एफ०४६ । ५० सी क्रमाङ्केन २६-१-१९५० दिनाङ्केन च अङ्कितायां अधिसूचनायां प्रकाशिताः समसामयिकसदस्यताप्रतिषेध नियमाः, १९५० इत्येते द्रष्टव्याः ।

[1][(ख) यथायथं अध्यक्षं सभापतिं वा सम्बोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वस्थानं त्यजति, तस्य त्यागपत्रं च यथायथं अध्यक्षेन सभापतिना वा स्वीकृतं भवति],

तर्हि तदुत्तरं तस्य स्थानं रिक्तं भवेत् ।

[2][परन्तु (ख) उपखण्डे निर्दिष्टस्य त्यागपत्रस्य दशायां यदि समुपलब्धेन अवगमेन अन्यथा वा, सः यादृशीं यथायोग्यां मन्यते तादृश्याः मीमांसायाः परं च यथायथं अध्यक्षः सभापतिः वा समाहितः भवेत् यत् तादृशं त्यागपत्रं स्वैच्छिकं, अवितथं वा नास्ति, तर्हि सः तादृशं त्यागपत्रं न स्वीकुर्यात् ।]

(४) यदि कस्यचिद् राज्यविधानमण्डलस्य कस्यचित् सदनस्य सदस्यः तत्सदनस्य अनुज्ञां विना तस्य सर्वेषु अधिवेशनेषु षष्टिदिनकालावधौ अनुपस्थितः अस्ति, तर्हि तत् सदनं तस्य स्थानं रिक्तं इति घोषयितुं क्षमते—

परन्तु उक्तस्य षष्टिदिनकालावधेः सङ्गणनायां सः कालावधिः न गणितः भवेत् यस्मिन् सदनं अवसितसत्रं अस्ति, निरन्तरं दिनचतुष्टयात् अधिकं स्थगितं वा अस्ति ।

सदस्यतायै निरर्हताः ।

१९१. (१) सः कोपि जनः राज्यविधानसभायाः, राज्यविधानपरिषदः वा सदस्यरूपेण वृतत्वे, स्थितौ च निरर्हः भवेत्—

(क) यदि सः भारतशासनस्य, कस्यापि राज्यशासनस्य वा अधीनं लाभस्य किमपि तत् पदं धारयति यत् तस्मात् पदात् अन्यत् अस्ति यस्य धारकः न निरर्हः भवति इति तद्राज्यविधानमण्डलेन विधिना घोषितम्;

(ख) यदि सः विकृतचित्तः अस्ति, क्षमेण न्यायालयेन एवं घोषितश्च तिष्ठति;

(ग) यदि सः अनुन्मुक्तः ऋणशोधनाशक्तः अस्ति;

(घ) यदि सः भारतस्य नागरिकः नास्ति, अथवा वैदेशिकराज्यस्य स्वेच्छया अर्जितां नागरिकतां भजते; अथवा किमपि वैदेशिकराज्यं प्रति निष्ठां अनुषक्तिं वा अभिस्वीकुर्वन् वर्तते;

(ङ) यदि सः संसदा प्रणीतेन केनापि विधिना तदधीनं वा एवं निरर्हः कृतः अस्ति ।

(२) कोपि जनः भारतशासनस्य, प्रथमसूच्यां विनिर्दिष्टस्य कस्यापि राज्यशासनस्य वा अधीनं लाभस्य पदं धारयति इति एतदनुच्छेदस्य प्रयोजनानां अर्थे न मन्येत अस्मात् एव हेतोः यत् सः सङ्घस्य तादृशस्य राज्यस्य वा मन्त्री अस्ति इति ।

सदस्यनां निरर्हतानां प्रश्नेषु विनिश्चयः ।

[3][१९२. (१) यदि कोपि प्रश्नः उत्पद्येत यत् राज्यविधानमण्डलसदनस्य सदस्यः १९१-तमानुच्छेदस्य (१) खण्डे वर्णितानां निरर्हतानां अन्यतमां कामपि भजते न वा इति, तर्हि सः प्रश्नः राज्यपालस्य विनिश्चयार्थं निर्देश्यः, तथा च तस्य विनिश्चयः अन्तिमः भवेत् ।

(२) एतादृशे कस्मिन् अपि प्रश्ने विनिश्चयस्य प्रदानात् पूर्वं राज्यपालः निर्वाचनायोगस्य मतिं आप्नुयात्; तथा च तादृश्याः मतेः अनुसारेण कार्यं कुर्यात् ।]

---

१. संविधानस्य (त्रयस्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७४ इत्यस्य ३-अनुभागेन (ख) उपखण्डात् प्रति एषः उपखण्डः संनिवेशितः ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन एषः पारन्तुकः अन्तर्वेशितः ।

३. अनुक्रमशः संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ३३-अनुभागेन (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) तथा च संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८, इत्यस्य २५-अनुभागेन (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) संशोधितः एषः अनुच्छेदः इदं रूपं प्राप्तवान् ।

१९३. यदि कोपि जनः १८८-तमानुच्छेदस्य अपेक्षाणां पूर्तेः पूर्वं, यदा सः जानाति यत् सः तस्याः सदस्यतायां न अर्हः अस्ति, निरर्हः कृतः अस्ति वा, संसदा, तद्राज्यविधानमण्डलेन वा प्रणीतस्य कस्यापि विधेः प्रतिबन्धैः प्रतिषिद्धः अस्ति वा, तदा राज्यविधानसभायां राज्यविधानपरिषदि वा उपविशति, मतं वा ददाति, तर्हि यस्मिन् दिने सः उपविशति, मतं वा ददाति तं प्रत्येकं दिनं प्रति तस्य राज्यदेयस्य ऋणस्य रूपेण प्रत्यादेयानां पञ्चशत-रूप्यकाणां शास्तेः सः भागी भवेत् । **१८८-तमानुच्छेदस्य अधीनं शपथस्य प्रतिज्ञानस्य वा करणात् पूर्वं अथवा अनर्हे, निरर्हीकृते वा स्थानग्रहणात् मतदानात् वा शास्तिः ।**

## राज्यविधानमण्डलानां, तेषां सदस्यानां च शक्तयः, विशेषाधिकाराः, उन्मुक्तयश्च

१९४. (१) एतत् संविधानस्य उपबन्धानां, विधानमण्डलस्य प्रक्रियायाः विनियामकानां नियमानां स्थाय्यादेशानां च अधीनं, प्रत्येकराज्यविधानमण्डले वाक्स्वातन्त्र्यं भवेत् । **विधानमण्डलसदनानां, तत् सदस्यानां, तत् समितीनां च शक्तयः, विशेषाधिकारादयश्च ।**

(२) राज्यविधानमण्डलस्य सदस्यस्य विरुद्धं तस्मिन् विधानमण्डले तस्य कस्यामपि समित्यां वा तस्य कामपि उक्तिं किमपि मतदानं वा उद्दिश्य कस्मिन् अपि न्यायालये कार्यप्रवृत्तिः न भवेत्; तथा च कस्यापि जनस्य तादृश-विधानमण्डलसदनस्य प्राधिकारैः तदधीनं वा कस्यापि प्रतिवेदनस्य, पत्रस्य, मतानां, कार्यप्रवृत्तीनां वा प्रकाशनं उद्दिश्य तादृशं दायित्वं न भवेत् ।

(३) अन्येषु विषयेषु राज्यविधानमण्डलसदनस्य, तादृशविधानमण्डलस्य सदस्यानां समितीनां च शक्तयः, विशेषाधिकाराः, उन्मुक्तयश्च तादृशाः भवेयुः यादृशाः तद्विधानमण्डलेन काले काले विधिना परिणिश्चिताः भवेयुः, तथा च यावत् न एवं परिणिश्चिता तावत् [1][ते भवेयुः ये तत्सदनस्य, तस्य सदस्यानां, समितीनां च संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २६-अनुभागस्य प्रवर्तनात् अव्यवहितपूर्वं आसन् ।]

(४) ये जनाः अस्य संविधानस्य आश्रयेण राज्यविधानमण्डलस्य सदने, तस्य कस्यामपि समितौ वा भाषितुं अन्य प्रकारेण तस्य कार्यप्रवृत्तिषु भागं ग्रहीतुं वा अधिकारवन्तः सन्ति तेषां सम्बन्धे (१),(२),(३) खण्डानां उपबन्धाः तथैव विषयीकुर्युः यथा ते तद्विधानमण्डलस्य सदस्यान् विषयीकुर्वन्ति ।

१९५. राज्यविधानसभायाः राज्यविधानपरिषदश्च सदस्याः तादृशानां वेतनानां भक्तानां च प्राप्तौ स्वत्ववन्तः भवेयुः यादृशानि तद्राज्यविधानमण्डलेन विधिना काले काले अवधारितानि भवेयुः; तथा च यावत् तद्विषये एवं उपबन्धाः न कृताः तावत् तादृशैः मानैः, तादृशैः प्रतिबंधैश्च वेतनानां भक्तानां च, यादृशानि अस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं तद्राज्यस्थानीयस्य प्रान्तस्य विधानसभायाः सदस्यान् विषयीकुर्वाणानि आसन् । **सदस्यानां वतनानि, भक्तानि च ।**

## विधानप्रक्रिया

१९६. (१) धनविधेयकैः, अन्यैः वित्तविधेयकैश्च सम्बद्धानां १९८-२०७-तमानुच्छेदयोः उपबन्धानां अधीनं, किमपि विधेयकं कस्यापि विधानपरिषद्वतः राज्यस्य विधानमण्डलस्य अन्यतरस्मिन् कस्मिन् अपि सदने आरभेत । **विधेयकानां पुरः स्थापनस्य, पारणस्य च उपबन्धाः ।**

(२) १९७-१९८ तमानुच्छेदयोः उपबन्धानां अधीनं किमपि विधेयकं कस्यापि विधानपरिषद्वतः राज्यस्य विधानमण्डलसदनाभ्यां पारितं इति तावत् न मन्येत यावत् उभाभ्यां सदनाभ्यां संशोधनेन विना, केवलं तादृशैः संशोधनैः सह वा, तत् न स्वीकृतं भवति यादृशानि उभाभ्यां सदनाभ्यां स्वीकृतानि सन्ति ।

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २६-अनुभागेन कतिपयेभ्यः शब्देभ्यः प्रति एतत् संनिवेशितं (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(३) राज्यविधानमण्डले लम्बितं विधेयकं तदीयस्य सदनस्य सदनयोः वा सत्रावसानकारणात् व्यपगतं न भवेत्।

(४) तद्राज्यविधानपरिषदि लम्बितं यद् विधेयकं विधानसभया न पारितं भवति तद् विधानसभायाः विघटने व्यपगतं न भवेत्।

(५) यद् विधेयकं राज्यविधानसभायां लम्बितं अस्ति, अथवा विधानसभया पारितं भूत्वा विधानपरिषदि लम्बितं अस्ति तद् विधानसभायाः विघटने व्यपगतं भवेत्।

**धनविधेयकेभ्यः अन्यविधेयकसम्बन्धिषु विधानपरिषदः शक्तिषु निर्बन्धनानि।**

१९७. (१) यदि कस्यापि विधानपरिषद्वतः राज्यस्य विधानसभया किमपि विधेयकं पारितं, विधानपरिषदं प्रेषितं च अस्ति, ततः परं—

(क) तद् विधेयकं तत् परिषदा निराकृतं भवति; अथवा

(ख) तद् विधेयकं तत् परिषदः समक्षं यस्मिन् दिने संस्थापितं तस्मात् दिनात् त्रिभ्यः मासेभ्यः अधिकः कालः अत्येति किन्तु तया तद् विधेयकं न पार्यते; अथवा

(ग) विधानपरिषदा तद् विधेयकं तादृशैः संशोधनैः सह पारितं भवति यादृशैः विधानसभा सहमता न भवति;

तर्हि विधानसभा, स्वप्रक्रियाविनियामकनियमानां अधीनं, तद्विधेयकं तस्मिन् एव सत्रे कस्मिन् अपि उत्तरसत्रे वा तादृशैः संशोधनैः सह, विना वा, कानि अपि चेत् सन्ति, पारयितुं क्षमते, यादृशानि विधानपरिषदा कृतानि, व्यञ्जितानि, स्वीकृतानि वा सन्ति; तथा च ततः परं एवं पारितं तद् विधेयकं विधानपरिषदं प्रेषयितुं क्षमते।

(२) यदि विधानसभया द्वितीयवारं तद् विधेयकं एवं पारितं विधानपरिषदं च प्रेषितं अस्ति ततः परं—

(क) तद् विधेयकं तत् परिषदा निराकृतं भवति; अथवा

(ख) तत् परिषदः समक्षं यस्मिन् दिने तद् विधेयकं संस्थापितं, तस्मात् दिनात् एकमासात् अधिकः कालः अत्येति किन्तु तया तद्विधेयकं न पार्यते; अथवा

(ग) विधान परिषदा तद् विधेयकं तादृशैः संशोधनैः सह पारितं भवति यादृशैः विधानसभा सहमता न भवति,

तर्हि तद्राज्यविधानमण्डलसदनाभ्यां तद् विधेयकं तेन रूपेण पारितं इति मतं भवेत् येन रूपेण तत् तद्-विधानसभया द्वितीयवारं तादृशैः संशोधनैः सह, कानि अपि सन्ति चेत्, पारितं आसीत्, यादृशानि तत् परिषदा कृतानि, व्यञ्जितानि वा सन्ति तद् विधानसभया च स्वीकृतानि सन्ति।

(३) एतदनुच्छेदगतं किमपि धनविधेयकं न विषयीकरोति।

**धनविधेयकानां विषये विशेषप्रक्रिया।**

१९८. (१) धनविधेयकं विधानपरिषदि पुरःस्थापितं न भवेत्।

(२) कस्यापि विधानपरिषद्वतः राज्यस्य विधानसभया यदि धनविधेयकं पारितं अस्ति, ततः परं तद् विधेयकं विधानपरिषदं प्रति तस्याः पुरःप्रशंसनानां कृते प्रेषितं भवेत्, सा विधानपरिषत् च तद् विधेयकस्य प्राप्तेः दिनाङ्कात् चतुर्दशदिनानां कालावधेः अभ्यन्तरं तद् विधेयकं स्वस्य पुरः प्रशंसनैः सह तां विधानसभां प्रति निवर्तयेत्; सा विधानसभा च ततः परं तस्याः विधानपरिषदः सर्वाणि पुरः प्रशंसनानि तदन्यतमं किमपि वा स्वी-कुर्यात्, निराकुर्यात् वा।

(३) यदि तस्याः विधानपरिषदः पुरः प्रशंसनानां अन्यतमं किमपि सा विधानसभा स्वीकरोति, तर्हि तद् धनविधेयकं विधानपरिषदा पुरः प्रशंसितैः विधानसभया च स्वीकृतैः संशोधनैः सह उभाभ्यां सदनाभ्यां पारितं इति मन्येत।

(४) यदि विधानपरिषदः पुरः प्रशंसनानां अन्यतमं किमपि विधानसभा न स्वीकरोति, तर्हि तद् धनविधेयकं विधानपरिषदा पुरः प्रशंसितानां संशोधनानां अन्यतमेन केनापि विना तेन रूपेण उभाभ्यां सदनाभ्यां पारितं इति मन्येत येन रूपेण तद् विधानसभया पारितं आसीत् ।

(५) यदि विधानसभया पारितं, विधानपरिषदं तस्याः पुरः प्रशंसनानां कृते प्रेषितं च धनविधेयकं चतुर्दश-दिनानां उक्तकालावधेः अभ्यन्तरे विधानसभां प्रति न निवर्तेत, तर्हि उक्त कालावधेः समाप्तौ उभाभ्यां सदनाभ्यां तेन रूपेण तत् पारितं इति मन्येत येन रूपेण तद् विधानसभया पारितं आसीत् ।

**धनविधेयकानां परिभाषा ।**

१९९. (१) एतद् अध्यायस्य प्रयोजनानां कृते किमपि विधेयकं धनविधेयकं इति मतं भवेत् यदि तस्मिन् केवलं निम्नलिखितैः सर्वैः विषयैः, तेषां अन्यतमेन केनापि वा सम्बद्धाः उपबन्धाः सन्ति, तद् यथा—

(क) कस्यापि करस्य अधिरोपणं, उत्सादनं, परिहारः, परिवर्तनं, विनियमनं वा;

(ख) राज्येन करणीयस्य धनोद्धारस्य कस्याः अपि प्रत्याभूतेः दानस्य वा विनियमनं अथवा तद्राज्येन अङ्गीकृतैः अङ्गीकर्तव्यैः वा वित्तीयैः आभारैः सम्बन्धिनः विधेः संशोधनम्;

(ग) राज्यस्य सञ्चितनिधेः आकस्मिकतानिधेः वा अभिरक्षा तादृशे कस्मिन् अपि निधौ धनस्य विनिवेशनं तस्मात् धनस्य प्रत्याहरणं वा;

(घ) राज्यस्य सञ्चितनिधेः मध्यात् धनस्य विनियोगः;

(ङ) कस्यापि व्ययस्य राज्यस्य सञ्चितनिधौ भारितव्ययरूपेण घोषणं, तादृशस्य कस्यापि व्ययस्य राशेः वर्धनं वा;

(च) राज्यस्य सञ्चितनिधौ, राज्यस्य लोकलेखायां वा धनस्य प्रापणं, अथवा तादृशस्य धनस्य अभि-रक्षा निर्गमनं वा; अथवा

(छ) (क) उपखण्डात् आरभ्य (च)उपखण्डपर्यन्तेषु विनिर्दिष्टविषयाणां अन्यतमस्य कस्यापि आनुषङ्गिकः कोपि विषयः ।

(२) किमपि विधेयकं धनविधेयकं अस्ति इति केवलं एतेन एव हेतुना न मतं भवेत् यत् तत् अर्थदण्डानां, अन्यासां आर्थिकशास्तीनां वा अधिरोपणाय, अनुज्ञप्तीनां अर्थे प्रशुल्कानां, आचरितसेवानां अर्थे प्रशुल्कानां अभि-याचनायै सन्दानाय वा उपबन्धयति इति; अथवा एतेन हेतुना यत् तत् केनापि स्थानीयेन प्राधिकारिणा, निकायेन वा स्थानीयप्रयोजनानां अर्थे कस्यापि करस्य अधिरोपणाय, उत्सादनाय, परिहाराय, परिवर्तनाय, विनियमनाय वा उपबन्धयति इति ।

(३) कस्यापि विधानपरिषद्वतः राज्यस्य विधानमण्डले पुरः स्थापितं किमपि विधेयकं धनविधेयकं अस्ति न वा इति कोपि प्रश्नः यदि उत्पद्यते तर्हि तत्र एतादृशराज्यस्य विधानसभायाः अध्यक्षस्य विनिश्चयः अन्तिमः भवेत् ।

(४) १९८-तमानुच्छेदस्य अधीनं यदा धनविधेयकं विधानपरिषदं प्रति प्रेषितं भवेत् तथा च यदा २००-तमानुच्छेदस्य अधीनं तद् राज्यपालस्य समक्षं अनुमत्यर्थं उपस्थापितं भवेत् तदा प्रत्येकधनविधेयके विधानसभायाः अध्यक्षस्य हस्ताङ्कितं "एतत् धन विधेयकं अस्ति" इति प्रमाणपत्रं पृष्ठाङ्कितं भवेत् ।

**विधेयकानि प्रति अनुमतिः ।**

२००. यदा किमपि विधेयकं राज्यविधानसभया पारितं भवेत्, अथवा कस्यापि विधानपरिषद्वतः राज्यस्य सम्बन्धे तद्राज्यमण्डलस्य उभाभ्यां सदनाभ्यां पारितं भवेत् तदा तत् राज्यपालस्य समक्षं उपस्थापितं भवेत्; तथा

च राज्यपालः घोषयेत् यत् सः तद् विधेयकं अनुमन्यते वा तत्प्रति अनुमतिं निरुणद्धि वा, अथवा सः तद् विधेयकं राष्ट्रपतेः विचारार्थं आरक्षति इति वा—

परन्तु राज्यपालः तद् विधेयकस्य स्वानुमत्यर्थं उपस्थापनात् परं तद्विधेयकं यदि धनविधेयकं नास्ति तर्हि- यथासम्भवं शीघ्रं निवर्तयितुं क्षमते, एवं प्रार्थयता सन्देशेन सह यत् तत् सदनं, ते सदने वा तद् विधेयकं, तस्मिन् विनिर्दिष्टान् कान् अपि उपबन्धान् वा पुनर्विचारयेताम्; विशेषतश्च तादृशानां केषामपि संशोधनानां पुनःस्थापनायाः वाञ्छनीयतां विचारयेतां यादृशानि सः स्वीये सन्देशे पुरःप्रशंसयेत्; तथा च यदा विधेयकं एवं निवर्तितं भवति तदा तत् सदनं,ते सदने वा, तद् विधेयकं तदनुसारेण पुनःविचारयेताम्; तथा च यदि तद् विधेयकं तेन सदनेन ताभ्यां सदनाभ्यां वा संशोधनेन सह, विना वा, पुनः पारितं राज्यपालस्य समक्षं अनुमत्यर्थं उपस्थापितं भवति तर्हि राज्यपालः तस्य अनुमतिं न निरुन्ध्यात्—

अपरं च, यदि यत् किमपि विधेयकं विधिः भवेत् तर्हि स उच्चन्यायालयस्य शक्तीः एवं न्यूनीकुर्यात् येन स न्यायालयः, अनेन संविधानेन यत् स्थानस्य पूर्त्यै परिकल्पितः अस्ति तत् स्थानं भयापन्नं भवेत् इति एवं राज्य-पालस्य मते सञ्जाते राज्यपालः तद् विधेयकं न अनुमन्येत किन्तु राष्ट्रपतेः विचारार्थं तद् रक्षेत् ।

**विचारार्थं आरक्षितानि विधेयकानि ।**

२०१. यदा किमपि विधेयकं राष्ट्रपतेः विचारार्थं राज्यपालेनारक्षितं भवति तदा राष्ट्रपतिः घोषयेत् यत् सः तद् विधेयकं अनुमन्यते यद् वा तत् प्रति अनुमतिं निरुणद्धि वा इति—

परन्तु यत्र तद् विधेयकं धनविधेयकं नास्ति तत्र राष्ट्रपतिः राज्यपालं निदेशयेत् यत् सः तद् विधेयकं यथायथं राज्यविधानमण्डलस्य सदनं, सदने वा प्रति एतादृशेन सन्देशेन सह प्रत्यावर्तयतु यादृशः २००-तमानुच्छेदस्य प्रथमपारन्तुके वर्णितः अस्ति; तथा च यदा किमपि विधेयकं एवं प्रत्यावर्तितं अस्ति तदा तेन सदनेन ताभ्यां सदनाभ्यां वा तादृशस्य सन्देशस्य प्राप्तेः दिनाङ्कात् षण्णां मासानां कालावधेः अभ्यन्तरं तदनुसारेण एव तत् पुनःविचारणीयं; तथा च यदि तेन सदनेन ताभ्यां सदनाभ्यां वा संशोधनेन सह, विना वा, पुनः पारितं भवेत् तर्हि तत् राष्ट्रपतेः समक्षं तस्य विचारार्थं पुनः उपस्थापितं भवेत् ।

## वित्तीयविषयाणां प्रक्रिया

**वार्षिकवित्तविवरणम् ।**

२०२. (१) राज्यपालः प्रत्येकं वित्तीयवर्षस्य विषये तद् वर्षार्थं अस्मिन् भागे "वार्षिकवित्तविवरणं" इति निर्दिष्टं, राज्यसम्बन्धिनां प्राक्कलितानां प्राप्तीनां, व्ययानां च विवरणं राज्यविधानमण्डलस्य सदनस्य सदनयोः वा समक्षं निधापयेत् ।

(२) वार्षिकवित्तविवरणे प्रदत्तस्य व्ययस्य प्राक्कलनेषु—

(क) यः व्ययः अस्मिन् संविधाने राज्यस्य सञ्चितनिधेः उपरि भारितव्ययरूपेण वर्णितः तस्य पूर्तये अपेक्षिताः राशयः; तथा—

(ख) राज्यस्य सञ्चितनिधितः करिष्यमाणत्वेन प्रस्थापितानां अन्येषां व्ययानां पूर्तये अपेक्षिता राशयश्च, पृथक् पृथक् प्रदर्शिताः स्युः, तथा च राजस्वलेखार्थं व्ययस्य अन्यस्मात् व्ययात् भेदः करणीयः ।

(३) निम्नलिखितः व्ययः प्रत्येकराज्यस्य सञ्चित निधौ भारितः व्ययः भवेत्—

(क) राज्यपालस्य उपलब्धयः भक्तानि च; तथा च तस्य पदेन सम्बद्धः अन्यः व्ययः;

(ख) विधानसभायाः अध्यक्षस्य उपाध्यक्षस्य तथा च विधानपरिषदः सभापतेः उपसभापतेश्च वेतनानि भक्तानि च;

(ग) वृद्धिं, निक्षेपनिधिभारं, मोचनभारं च तथा च उद्धारादानेन, ऋणसेवया, ऋणमोचनेन च सम्बद्धं अन्यं व्ययं च अन्तर्भावयन्तः ऋणभाराः येषां तद् राज्यस्य दायित्वं भवति;

(घ) कस्यापि उच्चन्यायालयस्य न्यायाधीशानां वेतनानां भक्तानां च सम्बन्धी व्ययः;

(ङ) कस्यापि न्यायालयस्य, मध्यस्थन्यायाधिकरणस्य वा निर्णयस्य, आज्ञप्तेः मध्यस्थनिर्णयस्य वा तुष्ट्यर्थं अपेक्षिताः राशयः;

(च) अनेन संविधानेन राज्यविधानमण्डलेन वा विधिना एवं भारितः करणीयः इति घोषितः कोपि अन्यः व्ययः।

**प्राक्कलनानां विषये विधानमण्डलस्य प्रक्रिया।**

२०३. (१) प्राक्कलनेषु यानि यानि राज्यस्य सञ्चितनिधौ भारितव्ययेन सम्बद्धानि सन्ति तानि विधानसभायाः मतदानार्थं न पुरतः स्थापितानि भवेयुः; किन्तु एतत् खण्डगतस्य कस्यापि कथनस्य एवं अर्थः न ग्राह्यः यद् एतत् तेषां प्राक्कलनानां अन्यतमस्य कस्यापि चर्चां विधानमण्डले निवारयति इति।

(२) उक्तप्राक्कलनानां यावन्मात्रं अन्यव्ययेन सम्बध्यते तावन्मात्रं विधानसभायाः समक्षं अनुदानानां अभियाचनारूपेण पुरतः स्थापितं भवेत्; तथा च विधानसभा कस्याः अपि अभियाचनायाः अनुमतौ, अनुमतेः प्रत्याख्याने वा कस्याः अपि अभियाचनायाः तस्यां विनिर्दिष्टं राशिं न्यूनीकृत्वा अनुमतौ वा शक्तिं भजेत।

(३) राज्यपालस्य पुरः प्रशंसनात् एव अनुदानस्य कापि अभियाचना कृता भवेत्, नान्यथा।

**विनियोगविधेयकानि।**

२०४. (१) २०३-तमानुच्छेदस्य अधीनं विधानसभया यदा अनुदानानि कृतानि सन्ति तदुत्तरं यथासम्भवं शीघ्रं राज्यस्य सञ्चितनिधितः —

(क) तत् सभया एवं कृतानां अनुदानानां; तथा च

(ख) राज्यस्य सञ्चितनिधौ भारितस्य किन्तु तत् सदनस्य तयोः सदनयोः वा समक्षं पूर्वं निहिते विवरणे प्रदर्शितराशेः कस्यामपि अवस्थायां अनधिकस्य व्ययस्य,

पूर्त्यर्थं अपेक्षितानां सर्वेषां धनराशीणां विनियोगार्थं उपबन्धयितुं विधेयकं पुरःस्थापितं भवेत्।

(२) एवं कृतस्य अनुदानस्य राशिं परिवर्तयितुं तस्य लक्ष्यं वा परिवर्तयितुं, राज्यस्य सञ्चितनिधौ भारितस्य व्ययस्य राशिं परिवर्तयितुं वा यत् किमपि संशोधनं कार्यक्षमं भवेत्, तत् राज्यविधानमण्डलस्य सदने, कस्मिन् अपि अन्यतरस्मिन् सदने वा तादृशे कस्मिन् अपि विधेयके प्रस्थापितं न भवेत्; तथा च किमपि संशोधनं एतत् खण्डाधीनं अग्राह्यं अस्ति न वा इति विषये पीठासीनस्य जनस्य विनिश्चयः अन्तिमः भवेत्।

(३) २०४, २०६-तमानुच्छेदयोः उपबन्धानां अधीनं राज्यस्य सञ्चितनिधितः किमपि धनं एतद् अनुच्छेदस्य उपबन्धानां अनुसारेण पारितेन विधिना कृतेन विनियोगेन एव प्रत्याहरणीयं, नान्यथा।

**अनुपूरकाणि, अपराणि, अधिकानि वा अनुदानानि।**

२०५. (१) यदि—

(क) २०४-तमानुच्छेदस्य उपबन्धानां अनुसारेण प्रणीतेन विधिना कस्यामपि विशेषसेवायां वर्तमाने वित्तीयवर्षे व्ययार्थं प्राधिकृतः राशिः तद् वर्षस्य प्रयोजनानां कृते अपर्याप्तः इति अवगतः अस्ति; अथवा तस्य वित्तीयवर्षस्य वार्षिकवित्तविवरणेन अननुध्यातायां सेवायां अनुपूरकस्य, अपरस्य वा व्ययस्य आवश्यकता वर्तमाने वित्तीयवर्षे उत्पन्ना अस्ति; अथवा

(ख) वित्तीयवर्षस्य कस्यामपिसेवायां तत् सेवार्थं तद् वर्षार्थं अनुदत्तात् राशेः अधिकं धनं व्ययितं अस्ति,

तर्हि राज्यपालः यथायथं राज्यविधानमण्डलस्य सदनस्य, सदनयोः वा समक्षं तस्य व्ययस्य प्राक्कलितं राशिं प्रदर्शयत् अन्यद् विवरणं निधापयेत्; अथवा राज्यस्य विधानसभायां तादृश्याः अधिकतायाः अभियाचनां उपस्थापयेत्।

(२) एतादृशस्य कस्यापि विवरणस्य, व्ययस्य च अभियाचनायाः वा सम्बन्धे, राज्यस्य सञ्चितनिधितः

तादृशस्य व्ययस्य, तादृश्याः अभियाचनायाः वा सम्बन्धे च अनुदानस्य पूर्तये धनानां विनियोगं प्राधिकृतं कुर्वतः प्रणेतव्यस्य कस्यापि विधेः सम्बन्धे अपि च २०२, २०३, २०४-तमानुच्छेदानां उपबन्धाः तथा कार्यक्षमाः भवेयुः यथा ते वार्षिकवित्तविवरणस्य तस्मिन् वर्णित व्ययस्य च सम्बन्धे अनुदानस्य कस्याः अपि अभियाचनायाः सम्बन्धे च राज्यस्य सञ्चितनिधितः तादृशस्य कस्यापि व्ययस्य अनुदानस्य वा पूर्तये धनानां विनियोगं प्राधिकृतं कुर्वतः प्रणेतव्यस्य विधेः सम्बन्धे च कार्यक्षमाः भवन्ति ।

लेखानुदानं, प्रत्ययानुदानं, अपवादानुदानं च ।

२०६. (१) अस्य अध्यायस्य पूर्वगामिषु उपबन्धेषु किमपि सत्यपि—

(क) कस्यापि वित्तीयवर्षस्य भागार्थं प्राक्कलितस्य व्ययस्य सम्बन्धे कमपि अनुदानं, तादृशे अनुदाने मतदानार्थं २०३-तमानुच्छेदे विहितायाः प्रक्रियायाः पूर्तौ लम्बितायां सत्यां, तथा तस्य व्ययस्य सम्बन्धे २०४-तमानुच्छेदस्य उपबन्धानां अनुसारेण विधेः पारणे लम्बिते सति, अग्रिमं दातुं;

(ख) यदा कस्याः अपि सेवायाः महत्तया, अनिश्चितरूपतया वा अभियाचना वार्षिकवित्तविवरणे साधारणतया विवरणेन सह वर्णयितुं न शक्यते तदा राज्यस्य सम्पत्तिसाधनेषु अपूर्वचिन्तितायाः अभियाचनायाः पूर्त्यै अनुदानं कर्तुम्;

(ग) कस्यापि वित्तवर्षस्य विद्यमानसेवायाः अभागभूतस्य अनुदानस्य कृते अपवादानुदानं कर्तुं च; राज्यविधानसभा शक्तिं भजेत; तथा च उक्तानुदानानि येभ्यः प्रयोजनेभ्यः कृतानि भवन्ति तानि उद्दिश्य राज्यस्य सञ्चितनिधितः धनस्य विधिना आहरणं प्राधिकर्तुं राज्यविधानमण्डलं शक्तिं भजेत ।

(२) २०३, २०४-तमानुच्छेदयोः उपबन्धाः (१) खण्डाधीनं अनुदानस्य तथा तत्खण्डाधीनं प्रणेतव्यस्य कस्यापि विधेः सम्बन्धे तथैव कार्यक्षमाः भवेयुः, यथा ते वार्षिकवित्तविवरणे वर्णितं कमपि व्ययं उद्दिश्य किमपि अनुदानं कर्तुं, राज्यस्य सञ्चितनिधितः तादृशस्य व्ययस्य पूर्त्यै धनानां विनियोगं प्राधिकृतं कुर्वतः प्रणेतव्यस्य विधेः सम्बन्धे च कार्यक्षमाः भवन्ति ।

वित्तविधेयकानां विषये विशेषाः उपबन्धाः ।

२०७. (१) १९९-तमानुच्छेदस्य (१) खण्डस्य (क) उपखण्डं आरभ्य (च) उपखण्डपर्यन्तेषु उपखण्डेषु विनिर्दिष्टानां विषयाणां अन्यतमाय कस्मै अपि उपबन्धं कुर्वद् विधेयकं, संशोधनं वा राज्यपालस्य पुरःप्रशंसनानन्तरमेव पुरःस्थापितं, प्रस्तावितं वा भवेत्, नान्यथा; तथा च तादृशं उपबन्धं कुर्वद् विधेयकं विधानपरिषदि पुरःस्थापितं न भवेत्—

परन्तु कस्यापि करस्य न्यूनीकरणाय, उत्सादनाय वा उपबन्धं कुर्वतः संशोधनस्य प्रस्तावार्थं एतत् खण्डाधीनं किमपि पुरः प्रशंसनं अपेक्षितं न भवेत् ।

(२) किमपि विधेयकं संशोधनं वा उक्तविषयाणां अन्यतमाय कस्मै अपि उपबन्धं करोति इति केवलं एतेन एव हेतुना न मन्येत यत् तत् अर्थे दण्डानां अन्यासां वा अर्थशास्तीनां अधिरोपणाय, अनुज्ञप्तीनां अर्थे प्रशुल्कानां, आचरितसेवानां अर्थे प्रशुल्कानां वा अभियाचनायै, सन्दानाय वा उपबन्धयति इति; अथवा एतेन हेतुना यत्, केनापि स्थानीयेन प्राधिकारिणा निकायेन वा स्थानीयप्रयोजनानां अर्थे कस्यापि करस्य अधिरोपणाय उत्सादनाय, परिहाराय, परिवर्तनाय, विनियमनाय वा उपबन्धयति इति ।

(३) यस्मिन् विधेयके अधिनियमिते प्रवर्तिते च, राज्यस्य सञ्चितनिधितः व्ययं करणीयं भवेत्, तत् राज्यविधानमण्डलसदनेन तावत् पारितं न भवेत् यावत् तादृशे विधेयके विचारार्थं राज्यपालः तत् सदनस्य कृते पुरः प्रशंसनं न कुर्यात् ।

## साधारणतया प्रक्रिया

प्रक्रियायाः नियमाः ।

२०८. अस्य संविधानस्य उपबन्धानां अधीनं, राज्यविधानमण्डलसदनं स्वीयप्रक्रियायाः स्वीयकार्यसञ्चालनस्य च विनियमनार्थं नियमान् प्रणेतुं क्षमते ।

(२) यावत् (१) खण्डाधीनं नियमाः प्रणीताः न सन्ति तावत् अस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं तत्स्थानीयस्य प्रान्तस्य विधानमण्डलं उद्दिश्य ये प्रक्रियानियमाः स्थाय्यादेशाश्च प्रवृत्ताः आसन् ते तादृशानां उपान्तराणां, अनुकूलनानां च अधीनं राज्यविधानमण्डलस्य सम्बन्धे कार्यक्षमाः भवेयुः, यादृशानि यथायथं विधानसभायाः अध्यक्षः, विधान परिषदः सभापतिः वा तत्र कर्तुं क्षमते ।

(३) राज्यपालः, विधानपरिषद्वति राज्ये विधानसभायाः अध्यक्षेण, विधानपरिषदः सभापतिना च परामृश्य उभयोः सदनयोः परस्परसञ्चारान् उद्दिश्य प्रक्रियायाः नियमान् प्रणेतुं क्षमते।

२०९. वित्तीयकार्यस्य यथाकालं समाप्त्यर्थं राज्यविधानमण्डलं कमपि वित्तीयविषयं राज्यस्य सञ्चित-निधितः धनस्य विनियोगं कुर्वतः किमपि विधेयकं वा विषयीकृत्य राज्यविधानमण्डलस्य सदनस्य, सदनयोः वा प्रक्रियां, कार्यसञ्चालनं च विधिना विनियमयितुं क्षमते; तथा च यदि यावत् च एवं प्रणीतस्य कस्यापि विधेः उपबन्धः २०८-तमानुच्छेदस्य (१) खण्डाधीनं राज्यविधानमण्डलस्य सदनेन अथवा सदनयोः अन्यतरेण केनापि सदनेन प्रणीतैः नियमैः, तदनुच्छेदस्य (२) खण्डाधीनं वा राज्यविधानमण्डलस्य सम्बन्धे कार्यक्षमेण केनापि नियमेन स्थाय्यादेशेन वा असङ्गतः अस्ति तर्हि तादृशः उपबन्धः अभिभवेत्। **राज्यविधानमण्डले वित्तीयकार्यसम्बन्धि-प्रक्रियायाः विधिना विनियमनम्।**

२१०. (१) १७-भागे किमपि सत्यपि ३४८-तमानुच्छेदस्य उपबन्धानां अधीनं, राज्यविधानमण्डलस्य कार्यं तद् राज्यस्य राजभाषायां, राज्यभाषासु, हिन्दीभाषायां, आङ्ग्लभाषायां वा कृतं भवेत्— **विधानमण्डले प्रयोज्या भाषा।**

परन्तु यः पूर्वोक्तभाषासु स्वाभिप्रायस्य सुतरां अभिव्यक्तिं कर्तुं न शक्नोति तस्मै सदस्याय यथायथं, विधान-सभायाः अध्यक्षः, विधानपरिषदः सभापतिः वा, एतादृशरूपेण कार्यकारी जनः वा, स्वस्य मातृभाषायां तत् सदनस्य सम्बोधने अनुज्ञां दातुं क्षमते।

(२) यावद् राज्यविधानमण्डलं विधिना अन्यथा न उपबन्धयति, तावत् अस्य संविधानस्य प्रारम्भात् पञ्च-दशवर्षाणां कालावधेः समाप्तेः परं एषः अनुच्छेदः एवं कार्यक्षमः भवेत् यथा एतस्मिन् "आङ्ग्लभाषायां वा" इत्येते शब्दाः लुप्ताः इव स्युः;

[1][परन्तु [2][हिमाचलप्रदेशराज्यस्य, मणिपुरराज्यस्य, मेघालयराज्यस्य तथा च त्रिपुराराज्यस्य विधान-मण्डलानां] सम्बन्धे एषः खण्डः एवं प्रकारेण प्रभावी भवेत् यथा एतस्मिन् "पञ्चदशवर्षाणां" इति पदात् प्रति "पञ्चविंशतिवर्षाणां" इति पदं संनिवेशितं भवेत्।]

२११. उच्चतमन्यायालयस्य उच्चन्यायालयस्य वा न्यायाधीशेन स्वकर्तव्यपालने कृतं आचरणं उद्दिश्य कापि चर्चा राज्यविधानमण्डले न भवेत्। **विधानमण्डले चर्चायां निर्बन्धनम्।**

२१२. (१) राज्यविधानमण्डलस्य कासामपि कार्यप्रवृत्तीनां विधिमान्यता प्रक्रियायाः कस्याः अपि अभि-कथितायाः अनियमिततायाः आधारेण प्रश्नगता न कृता भवेत्। **न्यायालयाः विधान-मण्डलस्य कार्यप्रवृत्तीनां विषये प्रतिप्रश्नं न कुर्युः।**

(२) अनेन संविधानेन एतदधीनं वा राज्यविधानमण्डले प्रक्रियायाः कार्यसञ्चालनस्य वा विनियमनं कर्तुं, व्यवस्थां रक्षितुं वा यस्मिन् शक्तयः निहिताः सः राज्यविधानमण्डलस्य कोपि अधिकारी, सदस्यः वा तासां शक्तीनां स्वकृतस्य प्रयोगस्य विषये कस्यापि न्यायालयस्य अधिकारितायाः अधीनः न भवेत्।

## अध्यायः ४—राज्यपालस्य विधायिन्यः शक्तयः

२१३. (१) यस्मिन् काले राज्यस्य विधानसभा सत्रे अस्ति अथवा विधान परिषद्वति राज्ये विधानमण्डलस्य उभे सदने सत्रे स्तः, तस्मात् अन्यस्मिन् कस्मिन् अपि काले, यदि राज्यपालः समाहितः भवति यत् तं अचिरकार्ये अवश्यं प्रवर्तयन्त्यः परिस्थितयः विद्यन्ते, तर्हि सः तादृशान् अध्यादेशान् प्रख्यापयितुं क्षमते यादृशान् अपेक्षयन्त्यः परिस्थितयः तेन प्रतीयन्ते— **विधानमण्डलस्य विश्रान्तिकाले राज्यपालस्य अध्यादेश-प्रख्यापने शक्तिः।**

परन्तु राज्यपालः राष्ट्रपतेः अनुदेशेन विना कमपि तादृशं अध्यादेशं न प्रख्यापयेत् यदि—

(क) तान् एव उपबन्धान् अन्तर्वेशयद् विधेयकं विधानमण्डले पुरःस्थापनार्थं अस्य संविधानस्य अधीनं राष्ट्रपतेः पूर्वानुमतिः अपेक्षिता अभविष्यत्; अथवा

---

१. हिमाचलप्रदेशराज्यअधिनियमः, १९७० (१९७० वर्षस्य ५३) इत्यस्य ४६-अनुभागेन अन्तर्वेशितः (२५-१-१९७१ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. पूर्वोत्तरक्षेत्र-(पुनर्घटनम्) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१) इत्यस्य ७१-अनुभागेन "हिमाचल-प्रदेश राज्यस्य विधानमण्डलस्य" इत्येतस्मात् प्रति एतत् संनिवेशितम् (२१-१-१९७२ दिनाङ्कात् प्रवर्तमान-प्रभावेण)।

(ख) तान् एव उपबन्धान् अन्तर्वेशयद् विधेयकं राष्ट्रपतेः विचारार्थं रक्षितुं तन्मते आवश्यकं अभविष्यत्; अथवा

(ग) तान् एव उपबन्धान् अन्तर्वेशयन् राज्यविधानमण्डलस्य अधिनियमः अस्य संविधानस्य अधीनं तावत् अमान्यः अभविष्यत् यावत् राष्ट्रपतेः विचारार्थं तस्मिन् रक्षिते सति राष्ट्रपतेः अनुमतिं सः न प्राप्स्यत् ।

(२) एतदनुच्छेदस्य अधीनं प्रख्यापिते अध्यादेशे तादृशं एव बलं प्रभावश्च भवेत् यादृशं राज्यपालेन अनुमते राज्यविधानमण्डलस्य अधिनियमे भवेत्; किन्तु एतादृशः प्रत्येकं अध्यादेशः —

(क) राज्यविधानसभायाः पुरतः स्थापितः भवेत् अथवा यस्मिन् राज्ये विधानपरिषद् अस्ति तत्र उभयोः सदनयोः पुरतः स्थापितः भवेत्; तथा च विधानमण्डले पुनःसमवेते षण्णां सप्ताहानां समाप्तौ, अथवा यदि तत् कालावधेः समाप्तेः प्राक् विधानसभया तस्य निरनुमोदनस्य सङ्कल्पः पारितः अस्ति, विधानपरिषदा च, यदि अस्ति चेत्, सः स्वीकृतः अस्ति, तर्हि यथायथं तत्सङ्कल्पस्य पारणोत्तरं तत्परिषदा कृतस्य तत्सङ्कल्पस्य स्वीकरणस्य उत्तरं वा सः प्रवर्तनात् प्रविरमेत्;

(ख) राज्यपालेन कस्मिन् अपि काले प्रत्याहृतः भवेत् ।

**स्पष्टीकरणम्**:—यदा विधान परिषद्वतः राज्यस्य विधानमण्डलस्य सदने पुनः समवायार्थं भिन्नयोः दिनाङ्कयोः आहूते भवतः तदा एतत् खण्डस्य प्रयोजनानां अर्थे षण्णां सप्ताहानां कालावधिः तयोः दिनाङ्कयोः उत्तरदिनाङ्कात् परिगणितः भवेत् ।

(३) यदि, यावन्मात्रं च, एतदनुच्छेदस्य अधीनं प्रख्यापितः अध्यादेशः एवं विधं कमपि उपबन्धं करोति यः राज्यविधानमण्डलेन एवं विधे अधिनियमे कृतः अस्ति यत्कृते राज्यपालः अनुमतिं दत्तवान्, एवं अधिनियमितश्च अमान्यः भवेत् तर्हि, तावन्मात्रं च, सः अध्यादेशः शून्यः भवेत् —

परन्तु राज्यविधानमण्डलस्य यः अधिनियमः संसदः अधिनियमेन विद्यमानविधिना वा समवर्तिसूच्यां प्रगणितविषयस्य सम्बन्धे विरुद्धः अस्ति तस्य राज्यविधानमण्डलस्य अधिनियमस्य कार्यक्षमतासम्बन्धिनां एतत् संविधानस्य उपबन्धानां अर्थे राष्ट्रपतेः अनुदेशानां अनुसरणार्थं एतदनुच्छेदस्य अधीनं, यः अध्यादेशः प्रख्यापितः अस्ति सः राज्यविधानमण्डलस्य अधिनियमः इति मतः भवेत् यः राष्ट्रपतेः विचारार्थं रक्षितः तेन अनुमतश्च अस्ति ।

[1][ * * * * ]

## अध्याय : ५—राज्यानां उच्चन्यायालयाः

**राज्यानां कृते उच्चन्यायालयाः ।**

२१४. [2][ * * * ] प्रत्येकराज्यस्य एकः उच्चन्यायालयः भवेत् ।

[3][ * * * * * ]

**उच्चन्यायालयाः अभिलेखन्यायालयाः ।**

२१५. प्रत्येकं उच्चन्यायालयः अभिलेखन्यायालयः भवेत्, स्वावमाने दण्डनशक्तिं अन्तर्भावयन्तीः तादृशन्यायालयस्य सर्वाः शक्तीश्च भजेत ।

---

१. संविधानस्य (अष्टत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ३-अनुभागेन (भूतलक्षि प्रभावेण) (४) खण्डः अन्तर्वेशितः आसीत्; ततः परं संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २७-अनुभागेन लोपितश्च (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. "(१)" इति कोष्ठकगतः अङ्कः संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च लोपितः ।

३. (२) खण्डः (३) खण्डश्च उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च लोपितौ ।

**भागः ६ —राज्यानि—अनु० २१६-२१७**

**उच्चन्यायालयानां घटनम् ।**

२१६. मुख्यन्यायमूर्तिना तादृशैः अन्यैः न्यायाधीशैश्च यादृशान् राष्ट्रपतिः काले काले नियोक्तुं आवश्यकान् मन्यते, सम्भूय प्रत्येकं उच्चन्यायालयः भवेत् ।

[1][ * * * * ]

**उच्चन्यायालये न्यायाधीशस्य नियुक्तिः तस्य पदस्य प्रतिबन्धाश्च ।**

२१७. (१) राष्ट्रपतिः भारतस्य मुख्यन्यायमूर्तिना, तद् राज्यस्य राज्यपालेन च, मुख्यन्यायमूर्तेः अन्यस्य न्यायाधीशस्य नियुक्तिविषये राज्यस्य उच्चन्यायालयस्य मुख्यन्यायमूर्तिना सह च परामृश्य स्वहस्तेन स्वमुद्रया च अङ्कितेन अधिपत्रेण उच्चन्यायालयस्य प्रत्येकं न्यायाधीशं नियुक्तं कुर्यात्; सः च न्यायाधीशः यदि सः [2][अपरः न्यायाधीशः अथवा कार्यकारी न्यायाधीशः अस्ति तर्हि २२४-तमानुच्छेदे यथा उपबन्धितं अस्ति तदनुसारं यदि च अन्यः अस्ति तर्हि सः] यावत् [3][वर्षाणां द्विषष्टिः] वयः न आप्नोति तावत् पदं धारयेत् —

परन्तु—

(क) कोपि न्यायाधीशः राष्ट्रपतिं सम्बोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वपदं त्यक्तुं क्षमते;

(ख) उच्चन्यायालयस्य न्यायाधीशं अपसारयितुं १२४-तमानुच्छेदस्य (४) खण्डे उपबन्धितया रीत्या राष्ट्रपतिः न्यायाधीशं स्वपदात् अपसारयितुं क्षमते;

(ग) कस्यापि न्यायाधीशस्य पदं, राष्ट्रपतिना उच्चतमन्यायालये न्यायाधीशरूपेण तस्य नियुक्तौ, अथवा राष्ट्रपतिना भारतस्य राज्यक्षेत्राभ्यन्तरे अन्यस्मिन् उच्चन्यायालये न्यायाधीशरूपेण तस्य स्थानान्तरे कृते रिक्तं भवेत् ।

(२) कोपि जनः उच्चन्यायालयस्य न्यायाधीशरूपेण नियुक्तेः अर्हः केवलं तदा भवेत् यदा सः भारतस्य नागरिकः अस्ति; तथा च

(क) भारतस्य राज्यक्षेत्रे न्यूनात् न्यूनं दशवर्षाणि न्यायिकपदं धारयन् संवृत्तः अस्ति; अथवा

(ख) [4][ * * * ] कस्यापि उच्चन्यायालयस्य कयोश्चिद् उच्च न्यायालयोः केषांचिद् उच्चन्यायालयानां वा निरन्तरक्रमेण न्यूनात् न्यूनं दशवर्षाणि अधिवक्ता संवृत्तः अस्ति; [5][ * * * ]

[5][ * * * * ]

**स्पष्टीकरणम्**—अस्य खण्डस्य प्रयोजनानां कृते—

[6][(क) कोपि जनः यस्मिन् कालावधौ भारतस्य राज्यक्षेत्रे न्यायिकपदं धारितवान् तदवधेः सङ्गणनायां

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य ११-अनुभागेन पारन्तुकः लोपितः ।

२. उपर्युक्ताधियमस्य १२-अनुभागेन "यावद् वर्षाणां षष्टिः वयः नाप्नोति तावत् पदं धारयेत्" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

३. संविधानस्य (पञ्चदशं संशोधनं) अधिनियमः, १९६३ इत्यस्य ४-अनुभागेन "वर्षाणां षष्टिः" इत्येताभ्यां शब्दाभ्यां प्रति एतौ शब्दौ संनिवेशितौ ।

४. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्यां उल्लिखिते कस्मिन् अपि राज्ये" इत्येते शब्दाः लोपिताः ।

५. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ३६-अनुभागेन "अथवा" इति शब्दः (ग) उपखण्डश्च, अन्तर्वेशितौः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण); संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २८-अनुभागेन लोपितौ च (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण ।

६. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २८-अनुभागेन अन्तर्वेशितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

सः कालावधिः अन्तर्भावितः भवेत् यस्मिन् सः जनः न्यायिकपदधारणात् परं कस्यापि उच्चन्यायालयस्य, अधिवक्ता संवृत्तः अथवा कस्यापि अधिकरणस्य सदस्यपदं धारितवान्, अथवा सङ्घस्य वा कस्यापि राज्यस्य अधीनं किमपि तादृशं पदं धारितवान् यदर्थं विधेः विशेषज्ञानं अपेक्ष्यते ।]

[1][कक] कोपि जनः यस्मिन् कालावधौ कस्यापि उच्चन्यायालयस्य अधिवक्ता संवृत्तः अस्ति तदवधेः सङ्गणनायां सः कालावधिः अन्तर्भावितः भवेत् यस्मिन् सः जनः कस्यापि उच्चन्यायालयस्य अधिवक्ता संवृत्तः ततः परं च [2][न्यायिकपदं धारितवान् अथवा कस्यापि अधिकरणस्य सदस्यपदं धारितवान् अथवा सङ्घस्य वा राज्यस्य वा अधीनं कमपि तादृशं पदं धारितवान् यदर्थं विधेः विशेषज्ञानं अपेक्ष्यते ।]

(ख) कोपि जनः यस्मिन् कालावधौ भारतस्य राज्यक्षेत्रे न्यायिकपदं धारितवान्, अथवा उच्चन्यायालयस्य अधिवक्ता संवृत्तः आसीत् तदवधेः सङ्गणनायां अस्य संविधानस्य प्रारम्भात् प्राक्तनीयः सः कालावधिः अन्तर्भावितः भवेत् यस्मिन् सः १९४७ वर्षस्य अगस्तमासस्य १५ दिनाङ्कात् प्राक् भारतशासनाधिनियमः, १९३५ इत्यस्मिन् परिभाषिते भारते समाविष्टे कस्मिन् अपि क्षेत्रे न्यायिकपदं धारितवान्, अथवा तादृशे कस्मिन् अपि क्षेत्रे कस्यापि उच्चन्यायालयस्य अधिवक्ता संवृत्तः असीत् ।

[3][(३) यदि उच्च न्यायालयस्य न्यायाधीशस्य वयसः विषये कोपि प्रश्नः उत्पद्येत तर्हि तस्य प्रश्नस्य विनिश्चयः राष्ट्रपतिना भारतस्य मुख्यन्यायमूर्तिना सह परामृश्य कृतः भवेत्, राष्ट्रपतेः विनिश्चयश्च अन्तिमः भवेत् ।]

**उच्चतमन्यायालय-सम्बन्धिभिः उपबन्ध-विशेषैः उच्चन्यायालयानां विषयीकरणम् ।**

२१८. यथा १२४-तमानुच्छेदस्य (४), (५) खण्डयोः उपबन्धाः यत्र यत्र उच्चतमन्यायालयं प्रति निर्दिशन्ति तत्र तत्र उच्चन्यायालयं प्रति अपि निर्दिशन्ति इति मत्वा ते उच्चन्यायालयान् तथैव विषयीकुर्युः तथा उच्चतमन्यायालयं विषयीकुर्वन्ति ।

**उच्चन्यायालयस्य न्यायाधीशानां शपथः, प्रतिज्ञानं वा ।**

२१९. [4][ * * * ] उच्चन्यायालयस्य न्यायाधीशरूपेण नियुक्तः प्रत्येकं जनः स्वपदे आरोहणात् प्राक् राज्यस्य राज्यपालस्य समक्षं तेन तदर्थं नियुक्तस्य कस्यचित् जनस्य समक्षं वा तृतीयानुसूच्यां तदर्थं उल्लिखिते प्ररूपे शपथं, प्रतिज्ञानं वा, कुर्यात्; तं च स्वहस्ताङ्कितं कुर्यात् ।

**स्थायिन्यायाधीश-पदधारणात् परं न्यायाधीशैः विधिवृत्ति-करणे प्रतिषेधः ।**

[5][२२०. यः जनः अस्य संविधानस्य प्रारम्भात् परं कस्यापि उच्चन्यायालयस्य स्थायिन्यायाधीशरूपेण पदं धारितवान् अस्ति सः भारते उच्चतमन्यायालयात् उच्चन्यायालयेभ्यश्च व्यतिरिक्ते अन्यस्मिन् कस्मिन् अपि न्यायालये अथवा कस्यापि प्राधिकारिणः समक्षं अभिवचनं वा कार्यं वा न कुर्यात् ।

**स्पष्टीकरणम्**—अस्मिन् अनुच्छेदे "उच्चन्यायालयः" इति पदं संविधानस्य (सप्तमं संशोधनं) अधिनियमः,

---

१. संविधानस्यः (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २८-अनुभागेन (क) खण्डः (कक) खण्डः इति पुनः अक्षराङ्कितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः: १९७६ इत्यस्य ३६-अनुभागेन "न्यायिक पदं धृतवान्" इत्यस्मात् प्रति एतत् संनिवेशितं (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (पञ्चदशं संशोधनं) अधिनियमः, १९६३ इत्यस्य ४-अनुभागेन एतत् अन्तर्वेशितम् (भूतलक्षिप्रभावेण) ।

४. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन, अनुसूच्या च "राज्ये" इति पदं लोपितम् ।

५. उपर्युक्ताधिनियमस्य १३-अनुभागेन २२०-तम अनुच्छेदात् प्रति एषः अनुच्छेदः संनिवेशितः ।

१९५६, इत्यस्य प्रारम्भात्[1] पूर्वं या विद्यमाना आसीत् तस्याः प्रथमानुसूच्याः "ख" भागे विनिर्दिष्टस्य राज्यस्य उच्चन्यायालयं न अन्तर्भावयति ।]

**न्यायाधीशानां वेतनादीनि ।**

२२१. (१) प्रत्येकउच्चन्यायालयस्य न्यायाधीशेभ्यः तादृशानि वेतनानि सन्दत्तानि भवेयुः यादृशानि द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति ।

(२) प्रत्येकं न्यायाधीशः तादृशेषु भक्तेषु, तथैव च अनुपस्थित्यनुमतिसम्बन्धिषु, निवृत्तिवेतनसम्बन्धिषु च तादृशेषु अधिकारेषु स्वत्ववान् भवेत् यादृशानि संसत् प्रणीतेन विधिना तदधीनं वा काले काले अवधारितानि भवेयुः; तथा च यावत् एवं न अवधारितानि तावत् तादृशेषु भक्तेषु, अधिकारेषु च, यादृशानि द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति —

परन्तु नियुक्तेः परं कस्यापि न्यायाधीशस्य भक्तेषु, अनुपस्थित्यनुमतिसम्बन्धिषु, निवृत्तिवेतनसम्बन्धिषु अधिकारेषु वा तादृशं परिवर्तनं न भवेत् यादृशं तस्मै लाभन्यूनीकारकः भवेत् ।

**एकस्मात् उच्चन्यायालयात् अन्यस्मिन् न्यायाधीशस्य स्थानान्तरणम् ।**

२२२. (१) राष्ट्रपतिः भारतस्य मुख्यन्यायमूर्तिना परामर्शात् परं एकस्मात् उच्चन्यायालयात् [2][ * * * ] अन्यस्मिन् कस्मिन् अपि उच्चन्यायालये न्यायाधीशं स्थानान्तरितं कर्तुं क्षमते ।

[3][(२) यदा कोपि न्यायाधीशः एवं स्थानान्तरितः अस्ति, क्रियेत वा तदा सः यस्मिन् कालावधौ, संविधानस्य (पञ्चदशं संशोधनं) अधिनियमः, १९६३ इत्यस्य प्रारम्भात् परं अन्यस्य उच्चन्यायालयस्य न्यायाधीशरूपेण सेवां करोति तस्मिन् कालावधौ स्ववेतनाद् अतिरिक्ते तादृशे प्रतिकरात्मके भक्ते अपि स्वत्ववान् भवेत् यादृशं संसदा विधिना अवधारितं भवेत् तथा च यावत् एवं अवधारितं न भवेत् तावत् तादृशे प्रतिकरात्मके भक्ते सः स्वत्ववान् भवेत् यादृशं राष्ट्रपतिः आदेशेन अवधारितं कुर्यात् ।]

**कार्यकारिणः मुख्य-न्यायमूर्तेः नियुक्तिः ।**

२२३. यदा उच्चन्यायालयस्य मुख्यन्यायमूर्तेः पदं रिक्तं भवेत्, अथवा यदा मुख्यन्यायमूर्तिः अनुपस्थित्या, अन्येन वा कारणेन स्वपदस्यकर्तव्यानां पालने असमर्थः भवेत् तदा, तत् पदस्य कर्तव्यानि तन्न्यायालस्य न्यायाधीशानां अन्यतमेन केनापि पालितानि भवेयुः यं राष्ट्रपतिः तत्प्रयोजनाय नियोजयेत् ।

**अपराणां कार्यकारिणां च न्यायाधीशानां नियुक्तिः ।**

[4][२२४. (१) यदि कस्यापि उच्चन्यायालयस्य कार्ये कस्याः अपि अस्थायिवृद्धेः कारणात् अवशिष्ट-कार्यसमुच्चयस्य कारणात् वा राष्ट्रपतेः प्रतीतिः भवति यत् तत् कालावध्यर्थं तन्न्यायालयस्य न्यायाधीशानां सङ्ख्यावृद्धिः करणीया, तर्हि राष्ट्रपतिः सभ्यरूपेण अर्हान् जनान् तन्न्यायालयस्य अपरन्यायाधीशरूपेण तेन वर्षद्वयादनधिकं विनिर्दिष्टकालावध्यर्थं नियोजयितुं क्षमते ।

(२) यदा कस्यापि उच्चन्यायालयस्य मुख्यन्यायमूर्तेः अन्यः कोपि न्यायाधीशः स्वस्य अनुपस्थितेः कारणेन अन्येन कारणेन वा स्वकर्तव्यानां पालने असमर्थः स्यात्, अथवा मुख्यन्यायमूर्तिरूपेण अस्थायिरूपेण कार्यकरणार्थं वा नियुक्तः स्यात् तदा राष्ट्रपतिः सम्यग् रूपेण अर्हं कमपि जनं, तावत् कालावध्यर्थं न्यायाधीशरूपेण कार्यकरणार्थं नियोजयितुं क्षमते यावत् स्थायिन्यायाधीशः स्वकर्तव्यपालनं पुनः आरभते ।

(३) उच्चन्यायालयस्य अपरन्यायाधीशरूपेण, कार्यकारिन्यायाधीशरूपेण वा नियुक्तः कोपि जनः यदा [5][वर्षाणां द्विषष्टिः] वयः आप्नोति ततः परं पदं न धारयेत् ।]

---

१. १-११-१९५६ दिनाङ्कात् ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६, इत्यस्य १४-अनुभागेन "भारतराज्यक्षेत्रे" इति पदं लोपितम् ।

३. संविधानस्य (पञ्चदशं संशोधनं) अधिनियमः, १९६३ इत्यस्य ५-अनुभागेन अन्तर्वेशितः । मूलपाठस्य (२) खण्डः संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य १४-अनुभागेन लोपितः आसीत् ।

४. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य १५-अनुभागेन २२४-तमात् अनुच्छेदात् प्रति एषः अनुच्छेदः संनिवेशितः ।

५. संविधानस्य (पञ्चदशं संशोधनं) अधिनियमः, १९६३ इत्यस्य ६-अनुभागेन "वर्षाणां षष्टिः" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

**उच्चन्यायालयानां उपवेशनेषु निवृत्त-न्यायाधीशानां उपस्थितिः ।**

[1][२२४अ. अस्मिन् अध्याये किमपि सत्यपि कस्यापि राज्यस्य उच्चन्यायालयस्य मुख्यन्यायमूर्तिः कस्मिन् अपि काले राष्ट्रपतेः पूर्वसम्मत्या तस्मिन् उच्चन्यायालये न्यायाधीशरूपेण उपस्थातुं, कार्यं कर्तुं च कमपि तादृशं जनं प्रार्थयितुं क्षमते यः तन्न्यायालयस्य अन्यस्य कस्यापि उच्चन्यायालयस्य वा न्यायाधीशरूपेण पदं धारितवान्; तथा च एवं प्रार्थितः तादृशः प्रत्येकं जनः यदा एवं उपस्थितः, कार्यं कुर्वन् च भवेत् तदा तादृशेषु भक्तेषु स्वत्ववान् भवेत् यादृशानि राष्ट्रपतिः आदेशेन अवधारयेत्; तथा च सः तदुच्चन्यायालयस्य न्यायाधीशस्य सर्वाः अधिकारिताः, शक्तीश्च, सर्वान् विशेषाधिकारान् च भजेत किन्तु अन्यथा तस्य उच्चन्यायालयस्य न्यायाधीशः इति न मन्येत—

परन्तु यावत् पूर्वोक्तः कोपि तादृशः जनः एवं कर्तुं न सम्मनुते तावत् सः तन्न्यायालयस्य न्यायाधीशरूपेण उपविशेत्, कार्यं कुर्यात् च इति एतदनुच्छेदगतं किमपि तस्माद् अपेक्षते इति न मन्येत ।]

**विद्यमानानां उच्च-न्यायालयानां अधिकारिता ।**

२२५. अस्य संविधानस्य उपबन्धानां अधीनं, अनेन संविधानेन समुचिताय विधानमण्डलाय प्रदत्तानां शक्तीनां आश्रयेण तद् विधानमण्डलेन प्रणीतस्य कस्यापि विधेः उपबन्धानां अधीनं च, कस्यापि विद्यमानस्य उच्चन्यायालयस्य अधिकारिता, प्रशासितः विधिश्च तथा तन्न्यायालयस्य न्यायाधीशानां तस्मिन् न्यायालये न्यायप्रशासनस्य सम्बन्धे तेषां शक्तयश्च तस्य न्यायालयस्य नियमानां प्रणयने तथा तस्मिन् न्यायालये उपवेशनानां नियमने तथा तस्य सदस्यानां एकाकित्वेन, खण्डन्यायालयेषु वा उपवेशनानां नियमने सर्वा शक्तिं अन्तर्भावयन्त्यः तथा एव भवेयुः यथा अस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं आसन्—

[2][परन्तु राजस्वसम्बन्धिनि, तस्य सङ्ग्रहार्थं आदेशितस्य कृतस्य वा कस्यापि कार्यस्य सम्बन्धिनि वा कस्मिन् अपि विषये उच्चन्यायालयानां अन्यतमस्य कस्यापि प्रारम्भिकाधिकारितायाः प्रयोगः अस्य संविधानस्य प्रारम्भात् अव्यहितपूर्वं यस्य कस्यापि निबन्धनस्य अधीनं आसीत् तन्निर्बंधनं तादृशीं अधिकारितां न विषयीकुर्यात् ।]

**केषांचित् लेखविशेषाणां प्रचालने उच्च-न्यायालयानां शक्तिः ।**

[3][२२६. (१) ३२-तमानुच्छेदे किमपि सत्यपि [4][ * * * ] प्रत्येकं उच्चन्यायालयः येषां सम्बन्धे सः स्वीयां अधिकारितां प्रयोजयति तेषु सर्वेषु राज्यक्षेत्रेषु [5][तृतीयभागेन प्रदत्तानां अधिकाराणां कस्यापि अन्यतमस्य प्रवर्तनार्थं, अथवा अन्यस्मै कस्मै अपि प्रयोजनाय वा, तेषां राज्यक्षेत्राणां अभ्यन्तरं कस्यापि जनस्य, प्राधिकारिणः समुचितान् विषयान् अधिकृत्य कस्यापि वा शासनस्य वा कृते निदेशानां, आदेशानां, बन्दीप्रत्यक्षीकरण-परमादेश-प्रतिषेध-अधिकारपृच्छा-उत्प्रेषणादीन् वा लेखान्] अन्तर्भावयन्तां विशेषलेखानां तेषां अन्यतमस्य वा प्रचालने शक्तिं भजेत ।

---

१. संविधानस्य (पञ्चदशं संशोधनं) अधिनियमः, १९६३ इत्यस्य ७-अनुभागेन एषः अनुच्छेदः अन्तर्वेशितः ।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य २९-अनुभागेन एषः पारन्तुकः अन्तर्वेशितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) । मूलपारन्तुकः संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ३७-अनुभागेन लोपितः आसीत् (१-२-१९७७ दिनाङ्कात् प्रवर्तमान-प्रभावेण) ।

३. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ३८-अनुभागेन २२६-तमानुच्छेदात् प्रति एषः अनुच्छेदः संनिवेशितः (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. संविधानस्य (त्रिचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७७ इत्यस्य ७-अनुभागेन "किन्तु १३१-अ अनुच्छेदस्य, २२६-अ अनुच्छेदस्य उपबन्धानां अधीनं" इत्येते शब्दाः अङ्काः, अक्षरे च लोपितानि (१३-४-१९७८ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३०-अनुभागेन "बन्दीप्रत्यक्षीकरण-परमादेश-प्रतिषेधाधिकारपृच्छोत्प्रेषण स्वरूपान् तदन्यतमस्य कस्यापि वा स्वरूपलेखान्" इत्येतस्मात् आरभ्य "एतादृशी अवैधिकता न्यायस्य निष्फलतायां परिणता अस्ति" एतदन्तात् पाठात् प्रति एषः पाठः संनिवेशितः (१-८-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(२) येषां राज्यक्षेत्राणां अभ्यन्तरे पूर्णतः भागतः वा वादहेतुकः उत्पन्नः अस्ति तेषां सम्बन्धे अधिकारितायाः प्रयोगं कुर्वन् कोपि उच्चन्यायालयः कस्यापि शासनस्य, प्राधिकारिणः, जनस्य वा कृते अपि, तादृशस्य प्रशासनस्य प्राधिकारिणः वा स्थानं तादृशस्य जनस्य निवासस्थानं वा तेषां राज्यक्षेत्राणां अभ्यन्तरे असत्यपि निदेशानां, आदेशानां, विशेषलेखानां वा प्रचालने (१) खण्डेन प्रदत्तायाः शक्तेः प्रयोगं कर्तुं क्षमते ।

[1][(३) यत्र कोपि पक्षकारः, यस्य विरुद्धं (१) खण्डाधीनं कयापि याचिकया सम्बद्धायां प्रक्रियायां अन्तरिमः आदे व्यादेशरूपेण, निरोधरूपेण अन्यया रीत्या वा—

(क) तादृशाय पक्षकाराय तादृश्याः याचिकायाः, तादृशस्य अन्तरिमआदेशस्य अभिवचनस्य समर्थनं कुर्वतां पत्राणां च प्रतिलिपिः,

(ख) तादृशाय पक्षकाराय अवेक्षणावसरं, च

न दत्वा कृतः अस्ति, सः पक्षकारश्च उच्चन्यायालयाय आवेदनं कुरुते तथा एतादृशस्य आवेदनस्य एकां प्रतिलिपिं, यस्य पक्षे एतादृशः आदेशः दत्तः अस्ति तस्मै तस्य अधिवक्त्रे वा ददाति तत्र उच्चन्यायालयः तस्य आवेदनस्य प्राप्तेः तत्प्रतिलिपेः एवं प्रदानस्य च दिनाङ्कयोः परतरात् दिनाङ्कात् सप्ताहद्वयावधेः अभ्यन्तरे, अथवा यदि उच्चन्यायालयः तस्य अवधेः अन्तिमदिनाङ्के विरतः भवेत् तर्हि तदनुवर्तिदिनस्य समाप्तेः प्राक् यस्मिन् उच्चन्यायालयः कार्यं कुर्वन् आसीत्, आवेदनं परिकल्पितं न अस्ति तर्हि यथायथं तदवधेः अथवा उक्तानुवर्तिदिनस्य समाप्तौ, सः आदेशः शून्यीकृतः भवेत् ।]

[2][(४) एतन अनुच्छेदेन उच्चन्यायालयाय प्रदत्ता शक्तिः ३२-तमानुच्छेदस्य (२) खण्डेन उच्चतमन्यायालयाय प्रदत्तायाः शक्तेः अल्पीकरणाय न भवेत् ।]

[3][२२६अ. २२६-तमानुच्छेदस्य अधीनं प्रक्रियासु केन्द्रीयविधीनां सांविधानिकवैधताविषये विचारः न कर्त्तव्यः] संविधानस्य (त्रिचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७७ इत्यस्य ८-अनुभागेन निरसितः। (१३-४-१९७८ दिनाङ्कात् प्रवर्तमानप्रभावेण ।)

**सर्वेषां न्यायालयानां अधीक्षणे उच्चन्यायालयस्य शक्तिः ।**

२२७. [4][(१) प्रत्येकं उच्चन्यायालयः तेषु सर्वेषु राज्यक्षेत्रेषु सर्वेषां न्यायालयानां न्यायाधिकरणानां च अधीक्षणं कुर्यात्, येषां सम्बन्धे सः अधिकारितां प्रयुङ्क्ते ।]

(२) पूर्वगाम्युपबन्धस्य व्यापकतायां प्रतिकूलं प्रभावं अकुर्वन् उच्चन्यायालयः —

(क) तादृशान् न्यायालयान् विवरणीः प्रेषणाय आज्ञप्तुं;

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३०-अनुभागेन (३), (४), (५), (६) खण्डेभ्यः प्रति एष खण्डः संनिवेशितः (१-८-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन (७) खण्डः (४) खण्डरूपेण पुनरङ्काङ्कितः (१-८-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ३९-अनुभागेन अन्तर्वेशितः आसीत् (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. अनुक्रमशः संविधास्नय (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४०-अनुभागेन (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण), तथा च संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३१-अनुभागेन (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) च संशोधितः एषः खण्डः इदं रूपं प्राप्तवान् ।

(ख) तादृशानां न्यायालयानां कार्यपद्धत्याः, कार्यप्रवृत्तीनां च विनियमनाय साधारणान् नियमान् प्रणेतुं, प्रचालयितुं, प्ररूपाणि विधातुं; तथा च

(ग) तादृशानां केषामपि न्यायालयानां अधिकारिभिः येषां अनुसारेण पुस्तकानि प्रविष्टयः लेखाश्च गोप्याः तानि प्ररूपाणि विधातुं,

क्षमते ।

(३) तादृशानां न्यायालयानां शेरिफाय सर्वेभ्यः लिपिकारेभ्यः अधिकारिभ्यश्च तथा तेषु न्यायालयेषु विधि-व्यवसायं कुर्वद्भ्यः न्यायवादिभ्यः, अधिवक्तृभ्यः विधिवृत्तिकरेभ्यःश्च ये प्रशुल्काः अनुमन्तव्याः तेषां प्रशुल्कानां सारणीः अपि उच्चन्यायालयः स्थापयेत् :—

परन्तु (२) खण्डस्य, (३) खण्डस्य वा अधीनं प्रणीताः केपि नियमाः, विहितानि कानि अपि प्ररूपाणि, स्थापिताः काः अपि सारिण्यः वा तदानीं प्रवृत्तस्य कस्यापि विधेः उपबन्धेन असङ्गताः न भवेयुः, तथा च राज्यपालस्य पूर्वानुमोदनं अपेक्षेरन् ।

(४) एतदनुच्छेदगतं किमपि उच्चन्यायालयाय सशस्त्रबलैः सम्बन्धितेन केनापि विधिना तदधीनं वा सङ्घटिते कस्मिन् अपि न्यायालये न्यायाधिकरणे वा अधीक्षणस्य शक्तीः प्रददाति इति न मन्येत ।

[1](५) * * * *

**केषांचिद् वाद विशेषाणां उच्चन्यायालयाय अन्तरणम् ।**

२२८. यदि उच्चन्यायालयः समाहितः भवति यत् तस्य अधीने न्यायालये लम्बितः कोपि वादः अस्य संविधानस्य निर्वचनेन सम्बद्धं कमपि सारवन्तं विधिप्रश्नं अन्तर्गृह्णाति यस्य निर्धारणं तस्य वादस्य व्यवस्था-दानाय आवश्यकं अस्ति तर्हि सः [2][तं वादं प्रत्याहरेत्], तथा च [3][ * * *]

(क) तस्मिन् वादे स्वयं एव व्यवस्थादानं कर्तुं क्षमते; अथवा

(ख) उक्तं विधिप्रश्नं अवधारयितुं क्षमते, तथा तं वादं तं न्यायालयं प्रति तत्प्रश्ननिर्णयस्य प्रतिलिप्या सह निवर्तयितुं क्षमते यस्मात् सः वादः प्रत्याहृतः आसीत्; तथा च सः न्यायालयः तस्य प्राप्तेः परं तादृशस्य निर्णयस्य अनुरूपं तस्मिन् वादे व्यवस्थादानाय प्रक्रमेत ।

[4]२२८अ. [राज्यविधीनां सांविधानिकवैधतासम्बद्धानां प्रश्नानां विषये व्यवस्थादानाय विशेषोपबन्धाः] संविधानस्य (त्रिचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७७ इत्यस्य १०-अनुभागेन निरसितः (१३-४-१९७८ दिनाङ्कात् प्रवर्तमानप्रभावेण ।)

**उच्चन्यायालयानां अधिकारिणः, सेवकाः, व्ययाश्च ।**

२२९. (१) उच्चन्यायालयस्य अधिकारिणां, सेवकानां च नियुक्तयः तन्न्यायालयस्य मुख्यन्यायमूर्तिना, तेन निर्दिष्टेन तन्न्यायालयस्य अन्येन न्यायाधीशेन, अधिकारिणा वा कृताः भवेयुः—

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४०-अनुभागेन (५) खण्डः अन्तर्वेशितः (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण); संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३१-अनुभागेन लोपितश्च (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४१-अनुभागेन "स तं वादं प्रत्याहरेत् किं च" इत्याद्यात् प्रति एतत् संनिवेशितं (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३ संविधानस्य (त्रिचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७७ इत्यस्य ९- अनुभागेन "१३१अ-अनुच्छेदस्य उपबन्धानां अधीनं" इत्येते अङ्काः, अक्षरः, शब्दाश्च लोपिताः (१३-४-१९७८ दिनाङ्कात् प्रवर्तमान प्रभावेण)।

४. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४२-अनुभागेन अन्तर्वेशितः (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

परन्तु [1][ * * * ] तस्य राज्यस्य राज्यपालः नियमेन एतद् अपेक्षितुं क्षमते यत् यादृश्यः अवस्थाः नियमे विनिर्दिष्टाः स्युः तादृशीषु अवस्थासु यः कोपि जनः तन्न्यायालयेन पूर्वं एव असंलग्नः सः राज्यसेवायोगेन सह परामर्शनं कृत्वा एव तन्न्यायालयेन सम्पृक्ते कस्मिन् अपि पदे नियुक्तः भवेत्, नान्यथा ।

(२) राज्यस्य विधानमण्डलेन प्रणीतस्य कस्यापि विधेः उपबन्धानां अधीनं, उच्चन्यायालयस्य अधिकारिणां, सेवकानां च सेवाप्रतिबन्धाः तादृशा भवेयुः यादृशाः तन्न्यायालयस्य मुख्यन्यायमूर्तिना अथवा तदर्थं नियमप्रणयनार्थं मुख्यन्यायमूर्तिना प्राधिकृतेन तन्न्यायालयस्य अन्येन न्यायाधीशेन अधिकारिणा वा प्रणीतैः नियमैः विहिताः भवेयुः —

परन्तु एतत् खण्डाधीनं प्रणीताः नियमाः यावत् पर्यन्तं वेतनैः, भक्तैः, अनुपस्थित्यनुमत्या, निवृत्तिवेतनैः वा सम्बद्धाः सन्ति तावत् ते [2][* * * ] तद्राज्यस्य राज्यपालस्य अनुमोदनं अपेक्षेरन् ।

(३) उच्चन्यायालयस्य अधिकारिभ्यः सेवकेभ्यश्च तेषां सम्बन्धे सन्देयानि सर्वाणि वेतनानि, भक्तानि निवृत्तिवेतनानि च अन्तर्भावयन्तः, तन्न्यायालयस्य प्रशासनव्ययाः तद्राज्यस्य सञ्चितनिधौ भारिताः भवेयुः; तथा च तन्न्यायालयेन आदेयाः, प्रशुल्काः अन्यानि च धनानि तस्य निधेः भागाः भवेयुः ।

[3][२३०. (१) संसद् विधिना कस्मिन् अपि सङ्घराज्यक्षेत्रे कस्यापि उच्चन्यायालयस्य अधिकारितां विस्तारयितुं, कस्माद् अपि सङ्घराज्यक्षेत्रात् उच्चन्यायालयस्य अधिकारितां अपवर्जयितुं च क्षमते । उच्चन्यायालयानां अधिकारितायाः सङ्घ-राज्यक्षेत्रेषु विस्तारः ।

(२) यत्र कस्यापि राज्यस्य उच्चन्यायालयः कस्यापि सङ्घराज्यक्षेत्रस्य सम्बन्धे अधिकारितां प्रयुङ्क्ते, तत्र—

(क) एतत्-संविधानगतस्य कस्यापि कथनस्य एवं अर्थः न ग्राह्यः यत् तत् तद्राज्यस्य विधानमण्डलस्य तदधिकारितायाः वृद्धिं, निर्बन्धनं, उत्सादनं वा कुर्वतीं शक्तिं प्रददाति; तथा

(ख) २२७-तमानुच्छेदे राज्यपालं प्रति निर्देशस्य, तस्मिन् राज्यक्षेत्रे अधीनस्थानां न्यायालयानां कृते केषामपि नियमानां, प्ररूपाणां, सारणीनां च सम्बन्धे तथा अर्थः ग्राह्यः यथा सः राष्ट्रपतिं प्रति निर्देशः इति ।

२३१. (क) एतद् अध्यायस्य पूर्ववर्तिषु उपबन्धेषु किमपि सत्यपि संसद् विधिना द्वयोः अधिकानां वा राज्यानां अर्थे, अथवा द्वयोः अधिकानां राज्यानां एकस्य सङ्घराज्यक्षेत्रस्य च अर्थे एकं एव उच्चन्यायालयं स्थापयितुं क्षमते । द्वयोः अधिकानां वा राज्यानां अर्थे एकस्य उच्चन्यायालयस्य स्थापना ।

(२) एतादृशस्य कस्यापि उच्चन्यायालयस्य सम्बन्धे—

(क) २१७-तमानुच्छेदे राज्यस्य राज्यपालं प्रति निर्देशस्य तथा अर्थः ग्राह्यः यथा तन्निर्देशः तेषां सर्वेषां राज्यानां राज्यपालानां प्रति निर्देशः स्यात् येषां (राज्यानां) सम्बन्धे सः उच्चन्यायालयः अधिकारितां प्रयुङ्क्ते; तथा च

(ख) २१७-तमानुच्छेदे राज्यस्य राज्यपालं प्रति निर्देशस्य अधीनस्थन्यायालयानां कृते केषांचित् नियमानां, प्ररूपाणां, सारणीनां च सम्बन्धे तथा अर्थः ग्राह्यः यथा तन्निर्देशः तद् राज्यस्य राज्यपालं प्रति निर्देशः स्यात् यस्मिन् तस्य उच्चन्यायालयस्य मुख्यं स्थानं अस्ति ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "यस्मिन् न्यायालयस्य स्वीयं मुख्यं स्थानमस्ति" इति शब्दाः लोपिताः ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "यस्मिन् न्यायालयस्य स्वीयं मुख्यं स्थानमस्ति" इति शब्दाः लोपिताः ।

३. उपर्युक्ताधिनियमस्य १६-अनुभागेन २३०, २३१, २३२-तमानुच्छेदेभ्यः प्रति एतौ अनुच्छेदौ संनिवेशितौ ।

(ग) २१९-तमानुच्छेदे, २२९-तमानुच्छेदे च राज्यं प्रति निर्देशस्य तथा अर्थः ग्राह्यः यथा तन्निर्देशः तद् राज्यं प्रति निर्देशः स्यात् यस्मिन् तस्य उच्चन्यायालयस्य मुख्यं स्थानं अस्ति—

परन्तु यदि तादृशं मुख्यस्थानं कस्मिन् अपि सङ्घराज्यक्षेत्रे अस्ति तर्हि २१९-तमानुच्छेदे २२९-तमानुच्छेदे च राज्यस्य राज्यपालं प्रति, लोकेसेवायोगं प्रति, विधानमण्डलं प्रति, सञ्चितनिधिं प्रति च निर्देशानां तथा अर्थः ग्राह्यः यथा ते निर्देशाः क्रमशः राष्ट्रपतिं प्रति, संघलोकसेवायोगं प्रति, संसदं प्रति, भारतस्य सञ्चितनिधिं प्रति निर्देशाः इति ।]

## अध्यायः ६—अधीनस्थाः न्यायालयाः

**मण्डलन्यायाधीशानां नियुक्तिः ।**

२३३. (१) कस्मिन् अपि राज्ये जनानां मण्डलन्यायाधीशरूपेण नियुक्तयः, मण्डलन्यायाधीशानां च पदान्तरणं, पदोन्नतिश्च तादृशस्य राज्यस्य सम्बन्धे अधिकारिता प्रयुञ्जानेन उच्चन्यायालयेन सह परामृश्य तद्राज्यस्य राज्यपालेन कृताः भवेयुः ।

(२) सङ्घस्य राज्यस्य वा सेवायां पूर्वं न सन् जनः, यदि सः सप्तवर्षेभ्यः अन्यूनकालं अधिवक्ता, विधिवृत्तिकरः वा संवृत्तः अस्ति, उच्चन्यायालयेन नियुक्तये प्रशंसितः च अस्ति तर्हि मण्डलन्यायाधीशरूपेण नियुक्तेः पात्रं भवेत् ।

**केषांचित् मण्डलन्यायाधीशानां नियुक्तीनां, तेभिः प्रदत्तानां निर्णयादीनां च विधिमान्यकरणम् ।**

[1][२३३अ. कस्यापि न्यायालयस्य कस्मिन् अपि निर्णये, आज्ञप्तौ, आदेशे वा सत्यपि—

(क) (प्रथमः) यः जनः राज्यस्य न्यायिकसेवायां पूर्वतः एव अस्ति अथवा यश्च सप्तवर्षेभ्यः अन्यूनकालं अधिवक्ता, विधिवृत्तिकरः वा संवृत्तः अस्ति तस्य तस्मिन् राज्ये मण्डलन्यायाधीशरूपेण नियुक्तिः, तथा च

(द्वितीय) तादृशस्य जनस्य मण्डलन्यायाधीशरूपेण पदस्थापनं, प्रोन्नतिः, अन्तरणं वा,

संविधानस्य (विंशत्तमं संशोधनं) अधिनियमः, १९६६ इत्यस्य प्रारम्भात् पूर्वं, कस्मिन् अपि काले २३३-तमानुच्छेदस्य २३४-तमानुच्छेदस्य वा उपवन्धानां अनुसारं न कृतं अस्ति, तर्हि तत् पदस्थापनं, नियुक्तिः, प्रोन्नतिः, अन्तरणं वा उक्तोपबन्धानां अनुसारं न अक्रियत इति एतत् तथ्यस्य आधारेण, अवैधं, शून्यीभूतश्च अस्ति इति न मन्येत अथवा कदापि अवैधं, शून्यीभूतं वा आसीत् इत्यपि न मन्येत ।

(ख) कस्मिन् अपि राज्ये २३३-तमानुच्छेदस्य २३४-तमानुच्छेदस्य वा अनुसरणं न कृत्वा, अन्यथा मण्डलन्यायाधीशरूपेण नियुक्तेन, पदस्थापितेन, प्रोन्नतेन, अन्तरितेन वा जनेन संविधानस्य (विंशत्तमं संशोधनं) अधिनियमः, १९६६ इत्यस्य प्रारम्भात् पूर्वं प्रयुक्ता अधिकारिता, पारिताः प्रदत्ताः वा निर्णयाः, आज्ञप्तयः, दण्डादेशाः, आदेशाः वा तेन कृतानि अन्यानि कार्याणि, कार्यप्रवृत्तयः वा अवैधानि, अविधिमान्यानि वा आसन् इति केवलं एतत् तथ्यस्य कारणेन न मन्येत यत् तत् पदस्थापनं नियुक्तिः, प्रोन्नतिः, अन्तरणं वा उक्तोपबन्धानां अनुसारं न अक्रियत ।]

**न्यायसम्बन्धिसेवायां मण्डलन्यायाधीशेभ्यः अन्येषां जनानां नियोजनम् ।**

२३४. राज्यस्य न्यायसम्बन्धिसेवायां मण्डलन्यायाधीशेभ्यः अन्येषां जनानां नियुक्तयः राज्यस्य लोकसेवायोगेन तद् राज्यस्य सम्बन्धे अधिकारितायाः प्रयोगं कुर्वता उच्चन्यायालयेन च परामर्शात् परं तद्राज्यस्य राज्यपालेन तदर्थं तेन प्रणीतानां नियमानां अनुसारं कृताः भवेयुः ।

**अधीनस्थन्यायालयानां नियन्त्रणम् ।**

२३५. राज्यस्य न्यायसम्बन्धिसेवायां स्थितानां मण्डलन्यायाधीशपदात् अवरं किमपि पदं धारयमाणानां च जनानां पदस्थापनं, प्रोन्नतिं, अनुपस्थित्यनुमतिं च अन्तर्भावयन् मण्डलन्यायालयानां तदधीनानां न्यायालयानां च नियन्त्रणं उच्चन्यायालये निहितं भवेत्; किन्तु एतदनुच्छेदगतं किमपि एतादृशात् जनात्, स जनः स्वास्थ्य सेवायाः प्रतिबन्धानां विनियमयितुः अथवा एतादृशस्य विधेः अधीनं विहितानां सेवाप्रतिबन्धानां अनुसरणात् अन्यथा

---

१. संविधानस्य (पञ्चविंशतितमं संशोधनं) अधिनियमः, १९६६ इत्यस्य २-अनुभागेन अन्तर्वेशितः ।

उच्चन्यायालयं प्राधिकुर्वाणस्य विधेः अधीनं यं अधिकारं भोक्तुं क्षमते, तस्य पुनर्विचारप्रार्थनायाः अधिकारं अपहरति इति अर्थः न ग्राह्यः ।

**निर्वचनम् ।**

२३६. अस्मिन् अध्याये—

(क) "मण्डलन्यायाधीशः" इति पदे अन्तर्भवति नगरव्यवहारन्यायालयस्य न्यायाधीशः, अपरमण्डलन्यायाधीशः, संयुक्तमण्डलन्यायाधीशः, सहायक मण्डलन्यायाधीशः, लघुवादन्यायालयस्य मुख्यन्यायाधीशः, मुख्यप्रान्तीय (प्रेसिडेन्सि) दण्डाधीशः, अपरमुख्यप्रान्तीयदण्डाधीशः, आपराधिकन्यायाधीशः, अपरआपराधिकन्यायाधीशः, सहायक आपराधिकन्यायाधीशश्च ।

(ख) "न्यायिकसेवा" इति शब्देन सा सेवा अभिधीयते या मण्डलन्यायाधीशपदस्य, मण्डलन्यायाधीशपदात् अवराणां व्यवहारन्यायिकपदनां च पूर्तये उद्दिष्टैः एव केवलैः जनैः सम्भूता ।

**वर्गविशेषस्य वर्गविशेषाणां वा दण्डाधीशानां एतद् अध्यायस्थैःउपबन्धैः विषयीकरणम् ।**

२३७. राज्यपालः सार्वजनिकाधिसूचनया निदेशं दातुं क्षमते, यत् अस्य अध्यायस्य पूर्वगताः उपबन्धाः तदधीनं प्रणीताः नियमाश्च सः यादृशं दिनाङ्कं तदर्थं नियमयेत् तादृशात् दिनाङ्कात् तद्राज्यस्थानां केषामपि दण्डाधीशानां कस्यापि वर्गस्य वर्गाणां वा सम्बन्धं, यादृशाः अधिसूचनायां विनिर्दिष्टाः भवेयुः तादृशानां अपवादानां, उपान्तराणां च अधीनं विषयीकुर्युः; यथा ते राज्यस्य न्यायिकसेवासु नियुक्तानां जनानां सम्बन्धं विषयीकुर्वन्ति ।

भाग : ७

## [प्रथमानुसूचीस्थानि (ख) भागीयराज्यानि]

संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २७-अनुभागेन अधिसूच्या च निरसितः ।

## भाग : ८

# [1][सङ्घराज्यक्षेत्राणि]

[2][२३९. (१) राष्ट्रपतिः, संसदा विधिना अन्यथा उपबन्धितं व्यतिरिच्य, यावन्मात्रं स उचितं मन्यते तावन्मात्रं कार्यं कुर्वाणस्य, स्वविनिर्दिष्टपदाभिधानेन नियुक्तस्य प्रशासकस्य द्वारा, प्रत्येक-सङ्घराज्यक्षेत्रस्य प्रशासनं कुर्यात् । **सङ्घस्य राज्यक्षेत्राणां प्रशासनम् ।**

(२) षष्ठे भागे किमपि सत्यपि, राष्ट्रपतिः कस्यापि राज्यस्य राज्यपालं संनिकृष्टसङ्घराज्यक्षेत्रस्य प्रशासकरूपेण नियोक्तुं क्षमते तथा च यत्र राज्यपालः एवं नियुक्तः भवेत् तत्र सः एतादृशप्रशासकरूपेण स्वकृत्यानां प्रयोगं स्वमन्त्रिपरिषदं अनाश्रित्य कुर्यात् ।

[3][२३९अ. (१) संसद् विधिना [4][ * * * ] [5][ * * * ] [6][गोवा-दमण-दीव], [7][पाण्डिचेरि-मिजोरम-अरुणाचलप्रदेश] इत्येतेषां सङ्घराज्यक्षेत्रणाणां मध्यात् कस्यापि कृते— **केषांचित् सङ्घराज्यक्षेत्राणां कृते स्थानीयविधानमण्डलानां मन्त्रिपरिषदां, उभयोः वा सर्जनम् ।**

(क) तत् सङ्घराज्यक्षेत्रस्य विधानमण्डलरूपेण कार्यं कर्तुं निर्वाचितनिकायस्य अथवा भागतः नामनिर्दिष्टस्य भागतः निर्वाचितस्य च निकायस्य,

(ख) मन्त्रिपरिषदः, अथवा

उभयोः वा सर्जनं कर्तुं क्षमते ययोः प्रत्येकस्य घटनं, शक्तयः कृत्यानि च तादृशानि भवेयुः यादृशानि विधिना विनिर्दिष्टानि सन्तिः ।

(२) यादृशः (१) खण्डे [illegible]र्दिष्टः तादृशः कोपि विधिः ३६८-तमानुच्छेदस्य प्रयोजनानां कृते अस्य संविधानस्य संशोधनं इति न मतं भवेत्; यद्यपि सः तं कमपि उपबन्धं अन्तर्वेशयति यः एतत् संविधानं संशोधयति अथवा तस्य संशोधनस्य प्रभावं धारयति ।]

[8][२३९आ. (१) यस्मिन् काले २३९अ-तमानुच्छेदस्य (१) खण्डे विनिर्दिष्टस्य सङ्घराज्यक्षेत्रस्य विधानमण्डलं सत्रे अस्ति, तस्मात् अन्यस्मिन् कस्मिन् अपि काले यदि प्रशासकः समाहितः भवति यत् तं अचिरकार्ये अवश्यं प्रवर्तयन्त्यः परिस्थितयः विद्यन्ते तर्हि सः तादृशान् अध्यादेशान् प्रख्यापयितुं क्षमते यादृशान् अपेक्षयन्त्यः परिस्थितयः प्रतीयन्ते— **विधानमण्डलस्य विश्रान्तिकाले अध्यादेशप्रख्यापने प्रशासकस्य शक्तिः ।**

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य १७-अनुभागेन "प्रथमानुसूचीस्थ-(ग) भागीय राज्यानि" इति शीर्षकात् प्रति एतत् संनिवेशितम् ।

२. उपर्युक्ताधिनियमस्य १७-अनुभागेन २३९-२४० अनुच्छेदेभ्यः प्रति एते अनुच्छेदाः संनिवेशिताः ।

३. संविधानस्य (चतुर्दशं संशोधनं) अधिनियमः, १९६२ इत्यस्य ४-अनुभागेन अन्तर्वेशितः ।

४. हिमाचलप्रदेशराज्याधिनियमः, १९७० (१९७० वर्षस्य ५३) इत्यस्य ४६-अनुभागेन "हिमाचलप्रदेशः" इति पदं लोपितं (२५-१-१९७१ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. पूर्वोत्तरक्षेत्र-(पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१) इत्यस्य ७१-अनुभागेन "मणिपुरराज्यं त्रिपुराराज्यं इत्येते पदे लोपिते (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

६. संविधानस्य (सप्तविंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य २-अनुभागेन "गोवा-दमण-दीवक्षेत्रं च पाण्डिचेरिक्षेत्रं च" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१५-२-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

७. संविधानस्य (सप्तत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य २-अनुभागेन 'पाण्डिचेरिक्षेत्रं-मिजोरमक्षत्रं च" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

८. संविधानस्य (सप्तविंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य ३-अनुभागेन एषः अनुच्छेदः अन्तर्वेशितः (३०-१२-१९७१ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

परन्तु एतस्मिन् सम्बन्धे राष्ट्रपतेः अनुदेशं अभिप्राप्य एव प्रशासकेन कोपि तादृशः अध्यादेशः प्रख्यापितः भवेत्, नान्यथा—

अपरं च यदा उक्त विधानमण्डलस्य विघटनं कृतं अस्ति अथवा २३९अ.-तमानुच्छेदस्य (१) खण्डे निर्दिष्टस्य विधेः अधीनं कृतेन कार्येण एतस्य कार्यप्रवर्तनं निलम्बितं अस्ति तदा प्रशासकः तादृशस्य विघटनस्य निलम्बनस्य वा कालावधौ कमपि अध्यादेशं न प्रख्यापयेत् ।

(२) राष्ट्रपतेः अनुदेशानां अनुसरणेन एतदनुच्छेदस्य अधीनं प्रख्यापितः अध्यादेशः, २३९अ.-तमानुच्छेदस्य (१) खण्डे एतदर्थं अन्तर्विष्टानां उपबन्धानां अनुपालनं कृत्वा सङ्घराज्यक्षेत्रस्य विधानमण्डलेन सम्यग्रूपेण अधिनियमितः अधिनियमः अस्ति इति मतं भवेत्;

किन्तु तादृशः प्रत्येकं अध्यादेशः —

(क) सङ्घराज्यक्षेत्रस्य विधानमण्डलस्य पुरतः प्रस्थापितः भवेत्; तथा च विधानमण्डलस्य पुनः समागमात् षण्णां सप्ताहानां समाप्तौ अथवा यदि तत् कालावधेः प्राक् विधानमण्डलेन तस्य निरनुमोदनस्य सङ्कल्पः पारितः भवेत् तर्हि तत् सङ्कल्पस्य पारणोत्तरं सः प्रवर्तनात् विरमेत्; तथा च

(ख) राष्ट्रपतेः तदर्थं अनुदेशस्य अभिप्राप्तेः परं प्रशासकेन कस्मिन् अपि काले प्रत्याहृतः भवितुं शक्यते ।

(३) यदि यावन्मात्रं च एतदनुच्छेदस्य अधीनं प्रख्यापितः अध्यादेशः एवं विधं कमपि उपबन्धं करोति, यः उपबन्धः यदि २३९-अ तमानुच्छेदस्य (१) खण्डे निर्दिष्टे विधौ, एतदर्थं अन्तर्विष्टानां उपबन्धानां अनुपालनं कृत्वा सङ्घराज्यक्षेत्रस्य विधानमण्डलेन प्रणीते अधिनियमे अधिनियमितः भवेत् तर्हि विधिमान्यः न भवति, तदा तावन्मात्रं च स अध्यादेशः शून्यः भवेत् ।]

[1][ * * * *]

**केषांचित् सङ्घराज्यक्षेत्राणां कृते विनियमानां प्रणयने राष्ट्रपतेः शक्तिः ।**

२४०. (१) राष्ट्रपतिः—

(क) अन्दमान-निकोबारद्वीपपुञ्जः;

[2](ख) लक्षद्वीपः;

[3](ग) दादरा-नगरहवेलीक्षेत्रं;

[4](घ) गोवा-दमण-दीवक्षेत्रं;

[5](ङ) पाण्डिचेरिक्षेत्रं;

---

१. संविधानस्य (सप्तत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ४-अनुभागेन (४) खण्डः अन्तर्वेशितः आसीत् (भूतलक्षिप्रभावेण); संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३२-अनुभागेन लोपितश्च (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. लक्षयदीव-मिनिकोय्-अमीनदीवि-द्वीपपुञ्जानाम् (नामान्तरणं) अधिनियमः, १९७३ (१९७३ वर्षस्य ३४) इत्यस्य ४-अनुभागेन "ख-लक्षदीव-मिनिकोय्-अमीनदीवि द्वीपपुञ्जानां" इत्येतस्मात् प्रति संनिवेशितः (१-११-१९७३ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (दशमं संशोधनं) अधिनियमः, १९६१ इत्यस्य ३-अनुभागेन अन्तर्वेशितः ।

४. संविधानस्य (द्वादशं संशोधनं) अधिनियमः १९६२ इत्यस्य ३-अनुभागेन अन्तर्वेशितः ।

५. संविधानस्य (चतुर्दशं संशोधनं) अधिनियमः, १९६२ इत्यस्य ५-अनुभागेन, ७-अनुभागेन च अन्तर्वेशितः (१६-८-६२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

[1](च) मिजोरमक्षेत्रं;

(छ) अरुणाचलप्रदेशः]

इत्येतेषु सङ्घराज्यक्षेत्रेषु शान्तेः, प्रगतेः, सुशासनस्य च कृते विनियमान् प्रणेतुं क्षमते—

[2][परन्तु यदा [3][गोवा-दमण-दीव क्षेत्रं, [4][पाण्डिचेरिक्षेत्रं, मिजोरमक्षेत्रं, अरुणाचलप्रदेशश्च] ] इत्येषां कस्यापि सङ्घराज्यक्षेत्रस्य कृते विधानमण्डलरूपेण कार्यकरणाय २३९अ-अनुच्छेदस्य अधीनं कस्यापि निकायस्य सर्जनं कृतं भवति तदा, राष्ट्रपतिः विधानमण्डलस्य प्रथमाधिवेशनस्य कृते नियतात् दिनाङ्कात् एतादृशस्य सङ्घराज्यक्षेत्रस्य शान्तेः, प्रगतेः, सुशासनस्य च कृते विनियमान् न प्रणयेत्—

[5][अपरं च यदा गोवा-दमण-दीवक्षेत्रं, [4][पाण्डिचेरिक्षेत्रं, मिजोरमक्षेत्रं, अरुणाचल प्रदेशश्च] इत्येषां कस्यापि सङ्घराज्यक्षेत्रस्य विधानमण्डलरूपेण कार्यं कुर्वाणस्य निकायस्य विघटनं कृतं भवेत् अथवा तादृश विधानमण्डल-रूपेण कार्यकारणं, २३९अ-तमानुच्छेदस्य (१) खण्डे निर्दिष्टस्य विधेः अधीनं कृतया कार्यप्रवृत्या निलम्बितं भवेत्, तदा राष्ट्रपतिः तादृशस्य विघटनस्य, निलम्बनस्य वा कालावधेः अभ्यन्तरे तादृशस्य सङ्घराज्यक्षेत्रस्य शान्तेः, प्रगतेः, सुशासनस्य च कृते विनियमान् प्रणेतुं क्षमते ।]

(२) एवं प्रणीतः कोपि विनियमः संसदा प्रणीतस्य कस्यापि विधेः अथवा तदानीं तादृशराज्यक्षेत्रस्य सम्बन्धे अनुप्रयुक्तस्य अधिनियमस्य [6]कस्यापि अन्यस्य विधेः वा निरसनं, संशोधनं वा कर्तुं क्षमते; तथा च यदा (विनियमः) राष्ट्रपतिना प्रख्यापितः भवति तदा तस्य तादृग्बलं प्रभावश्च भवेत् यादृक् तस्य क्षेत्रस्य सम्बन्धे अनुप्रयुक्तस्य संसदा प्रणीतस्य अधिनियमस्य भवति ।]

**सङ्घराज्यक्षेत्राणां कृते उच्चन्यायालयाः ।**

२४१. (१) संसद् विधिना कस्यापि [7][सङ्घराज्यक्षेत्रस्य] कृते उच्चन्यायालयं घटयितुं क्षमते अथवा [8][तादृशे कस्मिन् अपि राज्यक्षेत्रे] स्थितं कमपि न्यायालयं अस्य संविधानस्य सर्वेभ्यः प्रयोजनेभ्यः अन्यतमाय प्रयोजनाय वा उच्चन्यायालयं घोषयितुं क्षमते ।

---

१. संविधानस्य (सप्तविंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य ४-अनुभागेन अन्तर्वेशितः (१५-२-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (चतुर्दशं संशोधनं) अधिनियमः, १९६२ इत्यस्य ५-अनुभागेन अन्तर्वेशितः ।

३. संविधानस्य (सप्तविंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य ४-अनुभागेन "गोवा-दमण-दीव-क्षेत्रं अथवा पाण्डिचेरिक्षेत्रं इत्येतयोः सङ्घराज्यक्षेत्रयोः कृते" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१५-२-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. संविधानस्य (सप्तत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ३-अनुभागेन "पाण्डिचेरिक्षेत्रं-मिजोरम क्षेत्रं वा" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

५. संविधानस्य (सप्तविंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य ४-अनुभागेन अन्तर्वेशितः (१५-२-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

६. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन "कस्यापि विद्यमानस्य विधेः", इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

७. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः ग-भागे विनिर्दिष्टस्य राज्यस्य" एत्येतस्मात् प्रति एतत् संनिवेशितम् ।

८. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "तादृशराज्यस्य" एत्येतस्मात् प्रति एतत् संनिवेशितम् ।

(२) षष्ठभागस्य पञ्चमस्य अध्यायस्य उपबन्धाः, संसद् यादृशान् विधिना उपबन्धयितुं क्षमते तादृशानां रूपान्तरणानां, अपवादानां वा अधीनं, (१) खण्डे निर्दिष्टस्य प्रत्येकं न्यायालयस्य सम्बन्धं तथा विषयीकुर्युः यथा ते २१४-तमानुच्छेदे निर्दिष्टस्य कस्यापि उच्चन्यायालयस्य सम्बन्धं विषयीकुर्वन्ति ।

[1][(३) अस्य संविधानस्य उपबन्धानां अधीनं, तथा एतत् संविधानेन तदधीनं वा समुचितविधानमण्डलस्य कस्यापि, तद्विधानमण्डलाय प्रदत्तानां शक्तीनां आधारेण प्रणीतस्य विधेः उपबन्धानां अधीनं प्रत्येकं उच्चन्यायालयः यः संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य प्रारम्भात् अव्यवहितपूर्वं कस्यापि राज्यक्षेत्रस्य सम्बन्धे अधिकारितायाः प्रयोगं कुर्वन् आसीत् सः तादृशात् प्रारम्भात् परमपि तस्य राज्यक्षेत्रस्य सम्बधे तादृश्याः अधिकारितायाः प्रयोगं कुर्वन् अनुवर्तेत ।

(४) एतदनुच्छेदगतं किमपि कस्यापि राज्यस्य उच्चन्यायालयस्य अधिकारितां कस्मिन् अपि सङ्घराज्यक्षेत्रे, तस्य भागे वा विस्तारयित्रीं, तस्मात् अपवर्जयित्रीं वा संसदः शक्तिं न न्यूनीकरोति ।]

२४२. [कोडगु] संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च निरसितः ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च (३)-(४) खण्डाभ्यां प्रति एतौ खण्डौ संनिवेशितौ ।

## भागः ९

## [प्रथमानुसूचीस्थ-घ-भागीय राज्यक्षेत्राणि तस्यां अनुसूच्यां न विनिर्दिष्टानि राज्यक्षेत्राणि च]

संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च निरसितः ।

भागः १०

## अनुसूचितक्षेत्राणि जनजातिक्षेत्राणि च

**अनुसूचितक्षेत्राणां जनजातिक्षेत्राणां च प्रशासनम्।**

२४४. (१) पञ्चमानुसूच्याः उपबन्धा [1][असमराज्यात् मेघालयराज्यात्] च व्यतिरिक्तस्य [2][ * * * ] कस्यापि राज्यस्य अनुसूचितक्षेत्राणां अनुसूचितजनजातीनां च प्रशासनं, नियन्त्रणं च विषयीकुर्युः।

(२) षष्ठानुसूच्याः उपबन्धाः असमराज्यस्य, मेघालयराज्यस्य, तथा च मिजोरमसङ्घराज्यक्षेत्रस्य जनजातिक्षेत्राणां प्रशासनं विषयीकुर्युः।

**असमराज्यस्य कानिचित् क्षत्राणि समावेशयतः एकस्य स्वशासिराज्यस्य निर्माणं, तदर्थं, स्थानीय-विधानमण्डलस्य वा मन्त्रिपरिषदः वा उभयोः वा सर्जनम्।**

[3][२४४अ. (१) अस्मिन् संविधाने किमपि सत्यपि संसद् विधिना असमराज्यस्य अभ्यन्तरे एकं स्वशासिराज्यं निर्मातुं क्षमते यस्मिन् षष्ठानुसूच्याः २०-प्रच्छेदेन संलग्नसारिण्याः [4][प्रथमे भागे] विनिर्दिष्टानां सर्वेषां अथवा तेषां मध्यतः केषांचित् जनजाति क्षेत्राणां पूर्णतः भागतः वा समावेशः भवेत्; तदर्थं च —

(क) तस्य स्वशासिराज्यस्य विधानमण्डलरूपेण कार्यं कर्तुं निर्वाचितस्य निकायस्य वा भागतः नामनिर्दिष्टस्य भागतः निर्वाचितस्य च निकायस्य; अथवा

(ख) मन्त्रि परिषदः, अथवा

उभयोः वा सर्जनं कर्तुं क्षमते, येषां च घटनं, शक्तयः, कृत्यानि च तादृशानि भवेयुः यादृशानि विधिना विनिर्दिष्टानिः सन्ति।

(२) (१) खण्डे निर्दिष्टः कोपि ईदृशः विधिः, विशिष्टतया—

(क) राज्यसूच्यां वा समवर्तिसूच्यां वा प्रगणितानि तानि विषयाणि विनिर्देष्टुं क्षमते येषां सम्बन्धे स्वशासिराज्यस्य विधानमण्डलाय अखिलराज्यस्य कृते अथवा तस्य कस्यापि भागस्य कृते विधिप्रणयने शक्तिः, असमराज्यस्य विधानमण्डलं अपवर्ज्य, अन्यथा वा, भवेत्;

(ख) येषु विषयेषु तस्य स्वशासिराज्यस्य कार्यपालिकाशक्तेः विस्तारः भवेत् तान् विषयान् परिणिश्चितान् कर्तुं क्षमते;

(ग) इमं उपबन्धं कर्तुं क्षमते यत् असमराज्येन उद्गृहीतः कोपि करः स्वशासिराज्याय तावत् समर्पितः भवेत् यावत् तस्य आगमाः तस्मात् स्वशासिराज्यात् प्राप्ताः इति मतं भवति;

---

१. पूर्वोत्तरक्षेत्र-(पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१) इत्यस्य ७१-अनुभागेन "असमराज्यात्" इत्येतस्मात् प्रति एतत् संनिवेशितम् (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः क-भागे, ख-भागे वा विनिर्दिष्टस्य" इतिः लोपितः।

३. संविधानस्य (द्वाविंशतितमं संशोधनं) अधिनियमः, १९६९ इत्यस्य २-अनुभागेन अन्तर्वेशितः।

४. पूर्वोत्तरक्षेत्र-(पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१ इत्यस्य ७१-अनुभागेन "क-भागे" इत्येतस्मात् प्रति एतत् संनिवेशितम् (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

(घ) इमं उपबन्धं कर्तुं क्षमते यत् अस्य संविधानस्य कस्मिन् अपि अनुच्छेदे राज्यस्य सम्बन्धे कस्यापि निर्देशस्य तथा अर्थः ग्राह्यः यथा तादृशः निर्देशः स्वशासिराज्यस्य निर्देशं अन्तर्भावयतिः;

(ङ) यादृशान् आवश्यकान् मन्यते तादृशान् अनुपूरकान्, आनुषङ्गिकान्, पारिणामिकान् च उपबन्धान् कर्तुं क्षमते ।

(३) पूर्वोक्तप्रकारस्य कस्यापि विधेः किमपि संशोधनं, यत् (२) खण्डस्य (क) उपखण्डे, (ख) उपखण्डे वा विनिर्दिष्टानां विषयाणां मध्यात् केनापि विषयेण सम्बद्धं अस्ति तत् तावत् प्रभावकरं न भवेत् यावत् तत् संशोधनं संसदः उभयोः सदनयोः उपस्थितानां मतदातॄणां न्यूनात् न्यूनं तृतीयांशद्वयमितैः सदस्यैः पारितं न भवति ।

(४) एतस्मिन् अनुच्छेदे निर्दिष्टः कोपि विधिः, ३६८-तमानुच्छेदस्य प्रयोजनानां कृते अस्य संविधानस्य संशोधनं इति न मतं भवेत्, यद्यपि सः तं कमपि उपबन्धं अन्तर्वेशयति यः एतत् संविधानं संशोधयति अथवा तस्य संशोधनस्य प्रभावं धारयति ।]

भाग : ११

# सङ्घस्य राज्यानां च परस्परं सम्बन्धाः

## अध्याय : १—विधायिनः सम्बन्धाः

### विधायिनीनां शक्तीनां वितरणम्

**संसदा राज्यविधान-मण्डलैश्च प्रणीतानां विधीनां विस्तारः ।**

२४५. (१) अस्य संविधानस्य अधीनं, संसद् सम्पूर्णस्य भारतराज्यक्षेत्रस्य कृते, तस्य कस्यापि भागस्य वा कृते विधीन् प्रणेतुं क्षमते; तथा च राज्यविधानमण्डलं सम्पूर्णस्य तस्य राज्यस्य कृते तस्य कस्यापि भागस्य वा कृते विधीन् प्रणेतुं क्षमते ।

(२) संसदा प्रणीतः कोपि विधिः, राज्यक्षेत्रातीतं अस्य प्रवर्तनं भवति इति आधारेण, विधौ अमान्यः न भवेत् ।

**संसदा राज्यविधान-मण्डलेन च प्रणीतानां विधानां विषयाः ।**

२४६. (१), (२), (३) खण्डे किमपि सत्यपि, संसद् सप्तमानुसूच्याः (अस्मिन् संविधाने "सङ्घसूची" इति निर्दिष्टायां) प्रथमसूच्यां प्रगणितानां विषयाणां अन्यतमं कमपि उद्दिश्य विधीनां प्रणयने अनन्यां शक्तिं भजते ।

(२) (३) खण्डे किमपि सत्यपि तथा च (१) खण्डस्य अधीनं [1][ * * * ] कस्यापि राज्यस्य विधान मण्डलंमपि सप्तमानुसूच्याः (अस्मिन् संविधाने "समवर्तिनी सूची" इति निर्दिष्टायां) तृतीयसूच्यां प्रगणितानां विषयाणां अन्यतमं कमपि उद्दिश्य विधीन् प्रणेतुं शक्तिं भजते ।

(३) (१),(२) खण्डयोः अधीनं [1][ * * ] कस्यापि राज्यस्य विधान मण्डलं सप्तमानुसूच्याः (अस्मिन् संविधाने "राज्यसूची" इति निर्दिष्टायां) द्वितीयसूच्यां प्रगणितानां विषयाणां अन्यतमं कमपि उद्दिश्य तस्य राज्यस्य कृते, तस्य कस्यापि भागस्य वा कृते, विधीन् प्रणेतुं अनन्यां शक्तिं भजते ।

(४) [2][कस्मिन् अपि राज्ये] न अन्तर्भावितस्य कस्यापि भारतराज्यक्षेत्रभागस्य कृते विधीन् प्रणेतुं संसद् कमपि विषयं उद्दिश्य, तद्विषये राज्यसूच्यां प्रगणिते अपि, शक्तिं भजते ।

**अपरन्यायालयविशेषाणां स्थापनार्थं उवन्धयितुं संसदः शक्तिः ।**

२४७. एतस्मिन् अध्याये किमपि सत्यपि संसदा प्रणीतानां विधीनां, सङ्घसूच्यां प्रगणितं विषयं उद्दिश्य विद्यमानस्य कस्यापि विधेः वा साधुतरप्रशासनार्थं अपरन्यायालयानां स्थापनायै संसद् विधिना उपबन्धयितुं क्षमते ।

**अवशिष्टाः विधानशक्तयः ।**

२४८. (१) समवर्तिसूच्यां राज्यसूच्यां वा न प्रगणितं कमपि विषयं उद्दिश्य कस्यापि विधेः प्रणयने संसद् अनन्यां शक्तिं भजते ।

(२) एतादृशी शक्तिः तयोः सूच्योः अन्यतरस्यां कस्यामपि अवर्णितं करं अधिरोपयतः कस्यापि विधेः प्रणयनस्य शक्तिं अन्तर्भावयति ।

**राष्ट्रियहितार्थं राज्य-सूच्याः कमपि विषयं उद्दिश्य विधेः विधाने संसदः शक्तिः ।**

२४९. (१) एतस्य अध्यायस्य पूर्वगामिषु उपबन्धेषु किमपि सत्यपि यदि द्वाभ्यां तृतीयांशाभ्यां अन्यूनैः उपस्थितैः मतं च ददद्भिः सदस्यैः समर्थितेन सङ्कल्पेन राज्यसभया घोषितं भवति यद् राष्ट्रियहितार्थं एतद् आवश्यकं प्रसङ्गोचितं वा अस्ति यद् राज्यसूच्यां प्रगणितं तस्मिन् सङ्कल्पे विनिर्दिष्टं च कमपि विषयं उद्दिश्य संसदा विधयः प्रणेतव्याः इति, तर्हि यावत् सः सङ्कल्पः प्रवृत्तः भवति तावत् तं विषयं उद्दिश्य सम्पूर्णभारतराज्यस्य कृते कस्यापि तस्य भागस्य वा कृते, विधीनां संसदा प्रणयनं विधिसङ्गतं भवेत् ।

---

१. संविधान (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः क-भागे ख-भागे वा उल्लिखितस्य" इत्येते शब्दाः लोपिताः ।

२. उपर्युक्ताधिनियमस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः क-भागे ख-भागे वा अन्तर्भावितस्य" इत्येतस्मात् प्रति एतत् संनिवेशितम ।

भागः ११—सङ्घस्य राज्यानां च परस्परं सम्बन्धाः—अनु० २४९-२५३

(२) (१) खण्डाधीनं पारितः सङ्कल्पः एकस्मात् वर्षात् अन्यूनं तादृशं कालावधिं प्रवृत्तः भवेत् यादृशः तत्र विनिर्दिष्टः भवेत् ।

परन्तु यदि यावद्वारं च (१) खण्डे उपबन्धितया रीत्या, एतादृशस्य सङ्कल्पस्य प्रवर्तनस्य अनुवर्तनं अनुमोदयन् सङ्कल्पः पारितः भवति तर्हि सः तादृशः सङ्कल्पः तस्मात् दिनाङ्कात् एकं वर्षं यावत् अधिकावधि प्रवर्तमानः अनुवर्तेत, यस्मिन् दिनाङ्के एतत् खण्डाधीनं सः प्रवर्तनात् प्रविरतः अभविष्यत् ।

(३) (१) खण्डाधीनं सङ्कल्पस्य पारणे न कृते सति संसद् यं प्रणेतुं क्षमा न अभविष्यत् सः संसदा प्रणीतः विधिः, यदा सः सङ्कल्पः प्रवर्तनात् विरतः भवति ततः परं षण्णां मासानां कालावधेः समाप्तौ, उक्तकालावधेः समाप्तेः पूर्वं कृतान् कर्तव्यत्वात् लोपितान् वा विषयान् विहाय यावद् अक्षमता प्रसरति तावन्मात्रं, कार्यक्षमतायाः विरतः भवति ।

**यदि आपात-उद्घोषणा प्रवृत्ता अस्ति तर्हि राज्यसूच्याः कमपि विषयं उद्दिश्य विधेः विधाने संसदः शक्तिः ।**

**२५०.** (१) एतस्मिन् अध्याये किमपि सत्यपि, यदा आपातस्य उद्घोषणा प्रवृत्ता अस्ति तदा राज्यसूच्यां प्रगणितानां विषयाणां अन्यतमं कमपि उद्दिश्य सम्पूर्णस्य भारतराज्यक्षेत्रस्य कृते, कस्यापि तद्भागस्य वा कृते, विधीन् प्रणेतुं संसद् शक्तिं भजेत ।

(२) आपातस्य उद्घोषणायाः प्रचालने अकृते सति संसद् यं प्रणेतुं क्षमा न अभविष्यत्, सः संसदा प्रणीतः विधिः, यदा सा उद्घोषणा प्रवर्तनात् विरता भवति ततः परं षण्णां मासानां कालावधेः समाप्तौ, उक्तकालावधेः समाप्तेः प्राक् कृतान् कर्तव्यत्वात् लोपितान् विषयान् विहाय, यावद् अक्षमता प्रसरति तावन्मात्रं, कार्यक्षमतायाः विरतः भवति ।

**२४९-२५०-तमानुच्छेदयोः अधीनं संसदा प्रणीतानां विधीनां राज्यविधान-मण्डलैः प्रणीतानां विधीनां च मध्ये विसङ्गतिः ।**

**२५१.** २४९, २५०-तमानुच्छेदगतं किमपि, तस्य कस्यापि विधेः प्रणयने राज्यविधानमण्डलस्य शक्तिं न निर्बन्धयेत् यं विधिं प्रणेतुं तद् विधानमण्डलं संविधानस्य अधीनं शक्तिं भजते किन्तु यदि संसदा प्रणीतः विधिः राज्यविधानमण्डलेन प्रणीतस्य तस्य विधेः केनापि उपबन्धेन सुतरां विरुद्धः अस्ति यं (विधिं) प्रणेतुं उक्तानुच्छेदयोः अन्यतरस्य अधीनं संसद् शक्तिं भजते, तर्हि राज्यविधानमण्डलेन प्रणीताद् विधेः प्राक् परं वा पारितः संसदः विधिः अभिभावी भवेत्, तथा च राज्यविधानमण्डलेन प्रणीतः विधिः यावत् तु संसदा प्रणीतः विधिः कार्यक्षमतया अनुवर्तते तावत्, यावद् विरोधमात्रं, प्रवर्तनशून्यः भवेत् ।

**द्वयोः अधिकानां वा राज्यानां कृते सहमतया विधाने संसदः शक्तिः; अन्येन केनापि राज्येन तादृशस्य विधानस्य अङ्गीकरणम्**

**२५२.** (१) यदि द्वयोः अधिकानां वा राज्यानां विधानमण्डलानि एतत् वाञ्छनीयं गणयन्ति यत् २४९, २५०-तमानुच्छेदयोः उपबन्धितेभ्यः अन्यत्र येषां विषयाणां अन्यतमं कमपि विषयं उद्दिश्य राज्यानां कृते विधीनां प्रणयने संसद् शक्तिं न भजते तेषां अन्यतमः सः विषयः संसदा विधिना विनियमितः कर्तव्यः; यदि च तेषां राज्यानां विधानमण्डलानां सर्वैः सदनैः तदर्थं सङ्कल्पाः पारिताः भवन्ति तर्हि तदनुसारं तस्य विषयस्य विनियमनार्थं अधिनियमस्य पारणं संसदः कृते विधिसङ्गतं भवेत्; तथा च एवं पारितः कोपि अधिनियमः तादृशानि राज्यानि तदन्यत् तादृशं किमपि राज्यं च विषयीकुर्यात् यादृशेन पश्चात् तदर्थं सदनेन, यत्र वा द्वे सदने स्तः तत्र तद्राज्यविधान-मण्डलस्य उभाभ्यां सदनाभ्यां, पारितेन सङ्कल्पेन अङ्गीक्रियते ।

(२) संसदा एवं पारितः कोपि अधिनियमः सदृशरीत्या पारितेन अङ्गीकृतेन च संसदः अधिनियमेन संशोधितः निरस्तः वा भवितुं क्षमते, किन्तु सः विधिः यत् किमपि राज्यं विषयीकरोति तद्राज्यं उद्दिश्य तस्य राज्यस्य विधानमण्डलस्य अधिनियमेन सः विधिः संशोधितः निरस्तः वा न भवेत् ।

**आन्ताराष्ट्रियसमयानां कार्यक्षमतायै विधानम् ।**

**२५३.** एतदध्यायस्य पूर्वगामिषु उपबन्धेषु किमपि सत्यपि, सम्पूर्णस्य भारतराज्यक्षेत्रस्य कृते केनापि अन्येन देशेन, कैरपि देशैः वा कृतस्य सन्धेः, समयस्य, अभिसमयस्य वा आन्ताराष्ट्रियसम्मेलने, सभायां, अन्यस्मिन् वा निकाये कृतस्य कस्यापि विनिश्चयस्य वा परिपालनाय कस्यापि विधेः प्रणयने संसद् शक्तिं भजते ।

**संसदा प्रणीतानां विधीनां राज्यविधानमण्डलैः प्रणीतानां विधीनां च मध्ये विसङ्गतिः ।**

२५४. (१) यदि राज्यविधानमण्डलेन प्रणीतस्य विधेः कोपि उपबन्धः, यं विधिं संसद् अधिनियमितुं क्षमा अस्ति तस्य संसद् प्रणीतस्य विधेः कस्यापि उपबन्धस्य सुतरां विरुद्धः अस्ति, समवर्तिसूच्यां प्रगणितानां विषयाणां अन्यतमं उद्दिश्य विद्यमानस्य वा विधेः कस्यापि उपबन्धस्य सुतरां विरुद्धः अस्ति, तर्हि (२) खण्डस्थानां उपबन्धानां अधीनं तादृशस्य राज्यस्य विधानमण्डलेन प्रणीतात् विधेः प्राक् परं वा पारितः संसदा प्रणीतः विधिः, विद्यमानः वा विधिः यथायथं अभिभावी भवेत्; तथा च तद्राज्यविधानमण्डलेन प्रणीतः विधिः यावद् विरोधमात्रं शून्यः भवेत् ।

(२) यत्र [1][ * * * ] राज्यस्य विधानमण्डलेन समवर्तिसूच्यां प्रगणितविषयाणां अन्यतमं एकं उद्दिश्य प्रणीतः विधिः संसदा प्रणीतस्य पूर्वतरस्य विधेः तं विषयं उद्दिश्य विद्यमानस्य वा विधेः उपबन्धैः विरुद्धं कमपि उपबन्धं अन्तर्वेशयति, तत्र तादृशस्य राज्यस्य विधानमण्डलेन एवं प्रणीतः विधिः, यदि सः राष्ट्रपतेः विचारार्थं रक्षितः तस्य अनुमतिं च प्राप्तवान्, तस्मिन् राज्ये अभिभावी भवेत्—

परन्तु एतत् खण्डगतं किमपि, राज्यविधानमण्डलेन एवं प्रणीतस्य विधेः परिवर्धनं, संशोधनं, परिवर्तनं, निरसनं वा कुर्वन्तं विधिं अन्तर्भावयतः कस्यापि विधेः अधिनियमनात् संसदं न निवारयेत् ।

**पुरःप्रशंसनानां, पूर्वस्वीकृतानां च अपेक्षाः केवलं प्रक्रियायाः विषयाः इति अनुदर्शनम् ।**

२५५. यदि संसदः [1][ * * * ] राज्यविधानमण्डलस्य वा अधिनियमाय—

(क) यत्र राज्यपालस्य पुरः प्रशंसनं अपेक्षितं आसीत् तत्र राज्यपालेन, राष्ट्रपतिना वा;

(ख) यत्र राज्यप्रमुखस्य पुरः प्रशंसनं अपेक्षितं आसीत् तत्र राज्यप्रमुखेन, राष्ट्रपतिना वा;

(ग) यत्र राष्ट्रपतेः पुरःप्रशंसनं, पूर्वस्वीकरणं वा अपेक्षितं आसीत् तत्र राष्ट्रपतिना,

अनुमतिः प्रदत्ता अभूत् तर्हि तादृशः अधिनियमः तादृशस्य अधिनियमस्य कोपि उपबन्धश्च अस्माद् एव हेतोः शून्यः न भवेत् यत् अनेन संविधानेन अपेक्षितं पुरः प्रशंसनं, पूर्वस्वीकरणं वा न कृतं आसीत् इति ।

## अध्याय २—प्रशासनसम्बन्धाः

## साधारणम्

**राज्यानां सङ्घस्य च आभाराः ।**

२५६. प्रत्येकराज्यस्य कार्यपालिका शक्तिः तथा प्रयुक्ता भवेत् यथा संसदा प्रणीतानां विधीनां, तथा ये तद् राज्यं विषयीकुर्वन्ति तेषां केषामपि विद्यमानानां विधीनां च अनुपालनं सुनिश्चितं भवेत्; तथा च सङ्घस्य कार्यपालिका शक्तिः राज्याय तादृशानां निदेशानां प्रदानपर्यन्तं विस्तारं आप्नुयात् यादृशान् भारतशासनं तदर्थं आवश्यकान् प्रतीयात्।

**अवस्थाविशेषेषु सङ्घस्य राज्येषु नियन्त्रणम् ।**

२५७. (१) प्रत्येकराज्यस्य कार्यपालिका शक्तिः तथा प्रयुक्ता भवेत् यथा सङ्घस्य कार्यपालिकायाः शक्तेः प्रयोगं न प्रतिरुन्ध्यात् न वा तादृशप्रयोगे प्रतिकूलं प्रभावं आपादयेत्; तथा च सङ्घस्य कार्यपालिका शक्तिः राज्याय तादृशानां निदेशानां प्रदानपर्यन्त विस्तारं आप्नुयात् यादृशान् भारतशासनं तदर्थं आवश्यकान् प्रतीयात्

(२) सङ्घस्य कार्यपालिका शक्तिः सञ्चारसाधनानां निर्माणे, धारणे च राज्याय निदेशानां प्रदानपर्यन्तं विस्तारं आप्नुयात् येषां सञ्चारसाधनानां राष्ट्रियं, सैनिकं वा गौरवं तस्मिन् निदेशे घोषितं भवेत्—

परन्तु एतत् खण्डगतं किमपि राजपथान्, जलपथान् वा राष्ट्रियराजपथरूपेण, राष्ट्रियजलपथरूपेण वा घोषणे सङ्घस्य शक्तेः, एवं घोषितान् राजपथान् जलपथान् वा उद्दिश्य सङ्घस्य शक्तेः वा नौसेना-स्थलसेना-वायुसेना-सङ्कर्माणि उद्दिश्य स्वकृत्यानां भागरूपेण सञ्चारसाधनानां निर्माणे, धारणे च सङ्घस्य शक्तेः वा निर्बन्धकं अस्ति इति न मन्येत ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्य क-भागे, ख-भागे वा उल्लिखितस्य" इत्येते शब्दाः लोपिताः ।

(३) सङ्घस्य कार्यपालिका शक्तिः राज्याभ्यन्तरस्थानां लोहमार्गाणां रक्षार्थं ग्रहीतव्यानां उपायानां सम्बन्धे राज्याय निदेशानां प्रदानपर्यन्तं विस्तारं आप्नुयात् ।

(४) यत्र (२) खण्डाधीनं सञ्चारसाधनानां निर्माणे धारणे वा, (३) खण्डाधीनं वा कस्यापि लोहमार्गस्य रक्षणाय उपायानां अवलम्बने राज्याय प्रदत्तस्य कस्यापि निदेशस्य पालनेन ये व्ययाः, यदि एतादृशः निदेशः न प्रदत्तः अभिवष्यत् तर्हि तद्राज्यस्य नित्यप्राप्तकर्त्तव्यानां अनुष्ठाने अभविष्यन् तेभ्यः अधिकतराः परिव्ययाः कृताः सन्ति, तत्र यादृशः समयेन निश्चितः स्यात् तादृशः राशिः भारतशासनेन तस्मै राज्याय सन्दत्तः भवेत्, अथवा समयाभावे, राज्येन एवं कृतानां अधिकतराणां परिव्ययानां सम्बन्धे भारतस्य मुख्यन्यायमूर्तिना नियुक्तेन मध्यस्थेन यादृशः राशिः अवधारितः भवेत् ।

[1][२५७अ. [सङ्घस्य सशस्त्रबलानां अन्यबलानां वा अभिनियोजनेन राज्येभ्यः साहाय्यम्] संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३३ अनुभागेन निरसितः (२०-६-१९७९ दनाङ्कात् प्रवर्तमानप्रभावेण)] ।

**अवस्थाविशेषेषु राज्येभ्यः शक्त्यादीनां प्रदाने सङ्घस्य शक्तिः ।**

२५८. (१) एतस्मिन् संविधाने किमपि सत्यपि राष्ट्रपतिः यत् पर्यन्तं सङ्घस्य कार्यपालिकाः शक्तिः विस्तारं आप्नोति तानि, कस्यापि विषयस्य सम्बन्धीनि कृत्यानि, राज्यशासनस्य सहमत्या तत् शासने, तत्-अधिकारिषु वा सप्रतिबन्धं अप्रतिबन्धं वा न्यस्तुं क्षमते।

(२) यः सर्वं किमपि राज्यं विषयीकरोति सः संसदा प्रणीतः विधिः, राज्यविधानमण्डलं यस्मिन् विषये विधीनां प्रणयने शक्तिं न भजते तेन विषयेण एषः सम्बध्यते इति अविगणय्य, तस्मै राज्याय तदीयेभ्यः अधिकारिभ्यः, प्राधिकारिभ्यश्च शक्तीः प्रदातुं तेषु कर्तव्यानि च आरोपयितुं शक्तीनां प्रदाने, कर्तव्यानां च आरोपणे तान् प्राधिकारयितुं वा क्षमते ।

(३) यत्र एतस्य अनुच्छेदस्य आश्रयेण राज्याय, अधिकारिभ्यः, प्राधिकारिभ्यः वा शक्तयः प्रदत्ताः तेषु कर्तव्यानि वा आरोपितानि सन्ति, तत्र भारतशासनेन तस्मै राज्याय यादृशः समयेन अवधारितः भवेत् तादृशः राशिः सन्दत्तः भवेत्; अथवा समयाभावे तासां शक्तीनां, कर्तव्यानां च प्रयोगसम्बन्धे तेन राज्येन कृतानां अतिरिक्तानां प्रशासनस्य परिव्ययानां सम्बन्धे भारतस्त मुख्यन्यायमूर्तिना नियुक्तेन मध्यस्थेन यादृशः अवधारितः भवेत् तादृशः राशिः सन्दत्तः भवेत् ।

**सङ्घाय कृत्यानां अर्पणे राज्यस्य शक्तिः ।**

[2][२५८अ. एतस्मिन् संविधाने किमपि सत्यपि, कस्यापि राज्यस्य राज्यपालः भारतशासनस्य सहमत्या तद् राज्यस्य शासने, तस्य अधिकारिषु वा, यत् पर्यन्तं तद्राज्यस्य कार्यपालिका शक्तिः विस्तारं आप्नोति तानि, कस्यापि विषयस्य सम्बन्धीनि कृत्यानि, सप्रतिबन्धं अप्रतिबन्धं वा न्यस्तुं क्षमते ।]

२५९. [प्रथमानुसूच्याः (ख) भागस्य राज्यानां सशस्त्र बलानि] संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च निरसितः ।

**भारतात् बहिर्भूतानां राज्यक्षेत्राणां सम्बन्धे सङ्घस्य अधिकारिता ।**

२६०. भारतशासनं भारतराज्यक्षेत्रस्य यः न भागः तस्य कस्यापि राज्यक्षेत्रस्य शासनेन समयं कृत्वा तादृशस्य राज्यक्षेत्रस्य शासने निहितानि कार्यपालकानि, विधायीनि, न्यायसम्बन्धीनि वा कृत्यानि स्वीकुर्यात्; किन्तु तादृशः कोपि समयः तदानीं प्रवृत्तस्य वैदेशिकअधिकारिता प्रयोगेन सम्बध्यमानस्य कस्यापि विधेः अधीनः तेन शासितश्च भवेत ।

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४३-अनुभागेन अन्तर्वेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य १८-अनुभागेन अन्तर्वेशितः ।

**सार्वजनिक्यः क्रियाः अभिलेखाः न्यायसम्बन्धि-कार्यं प्रवृत्तयश्च ।**

२६१. (१) सर्वत्र भारतराज्यक्षेत्रे, सङ्घस्य प्रत्येकं राज्यस्य च सार्वजनिकीषु क्रियासु, अभिलेखेषु, न्याय-सम्बन्धि कार्यप्रवृत्तिषु च पूर्णः विश्वासः विश्रम्भश्च भवेत् ।

(२) (१) खण्डे निर्दिष्टाः क्रियाः, अभिलेखाः कार्यप्रवृत्तयश्च यया रीत्या, येषां प्रतिबन्धानां अधीनं च सिद्धाः भवेयुः, तदीयः प्रभावश्च अवधारितः भवेत्, ते संसदा प्रणीतस्य विधिना यथा उपबन्धिताः स्युः तथा भवेयुः ।

(३) भारतराज्यक्षेत्रस्य कस्मिन् अपि भागे व्यवहारन्यायालये पारिताः, प्रतिपादिताश्च निर्णयाः आदेशाः वा तद्राज्यक्षेत्राभ्यन्तरं विधेः अनुसारं निष्पादनयोग्याः भवेयुः ।

## जलैः सम्बध्यमानाः विवादाः

**आन्ताराज्यिकानां नदीनां नदीद्रोणीनां वा जलैः सम्बन्धिनां विवादानां न्याय-निर्णयनम् ।**

२६२. आन्ताराज्यिकायाः कस्याः अपि नद्याः नदीद्रोण्याः वा, तत्रस्थानां जलानां वा उपयोगं, वितरणं, नियन्त्रणं वा उद्दिश्य कस्यापि विवादस्य, परिवादस्य वा न्यायनिर्णयनाय विधिना उपबन्धं कर्तुं संसद् क्षमते ।

(२) एतस्मिन् संविधाने किमपि सत्यपि, संसद् उपबन्धयितुं क्षमते यत् न उच्चतमन्यायालयः न वा अन्यः न्यायालयः, यादृशः (१) खण्डे निर्दिष्टः अस्ति तादृशं कमपि विवादं, परिवादं वा उद्दिश्य, अधिकारितां प्रयुञ्जीत ।

## राज्यानां परस्परं समन्वयः

**आन्ताराज्यिकपरिषदं उद्दिश्य उपबन्धाः ।**

२६३. यदि कस्मिन् अपि काले राष्ट्रपतेः प्रतीतिः भवति यद् एतादृश्याः परिषदः स्थापनया लोकहितानि सिद्धानि भवेयुः यस्यां—

(क) राज्यानां परस्परं ये विवादाः उत्पन्नाः भवेयुः तेषु विवादेषु परिप्रश्नः, मन्त्रणा च;

(ख) येषु विषयेषु कतिपयानि सर्वाणि वा राज्यानि अथवा सङ्घः एकं राज्यं च, अधिकानि वा राज्यानि च समानं हितं भजन्ते तेषु विषयेषु अन्वेषणं, विचारविमर्शश्च;

(ग) कस्मिन् अपि एतादृशे विषये पुरः प्रशंसनानि, विशेषतः तद्विषयं उद्दिश्य नीतेः कृतेश्च साधुतर-समन्वायार्थं पुरः प्रशंसनानि,

इत्येतस्य कर्तव्यस्य भारः न्यस्तः भवेत्, तर्हि राष्ट्रपतिना आदेशेन तादृश्याः परिषदः स्थापना, तथा तया अनुष्ठेयानां कर्तव्यानां स्वरूपस्य च तस्याः सङ्घटनस्य च प्रक्रियायाः परिणिश्चयनं विधिसङ्गतं भवेत् ।

## भाग : १२

# वित्तम्, सम्पत्तिः, संविदः, वादाश्च

### अध्यायः १—वित्तम्

### साधारणम्

[1][२६४. अस्मिन् भागे "वित्तायोगः" इत्यनेन संविधानस्य २८०-तमानुच्छेदस्य अधीनं घटितः वित्तायोगः अभिप्रेतः अस्ति ।] **निर्वचनम् ।**

२६५. विधेः प्राधिकारेण एव कोपि करः अध्यारोपितः सङ्गृहीतः वा भवेत्, नान्यथा । **विधिप्राधिकारं अन्तरेण कराणां अनधिरोपणीयत्वम् ।**

२६६. (१) २६७-तमानुच्छेदस्य उपबन्धानां, केषांचित् कराणां शुल्कानां, शुद्धागमानां राज्येभ्यः पूर्णतः अंशतः वा अर्पणविषयकाणां अस्य अध्यायस्य उपबन्धानां च अधीनं, भारत शासनेन प्राप्तैः सवः राजस्वैः, तेन शासनेन राजकोषहुण्डिकानां, ऋणानां, अर्थोपायाग्रिमधनानां च प्रचालनेन गृहीतैः उद्धारैः तथा उद्धाराणां प्रतिसन्दाने च तेन शासनेन प्राप्तैः सर्वैः धनैः "भारतसञ्चितनिधिः" इत्याख्यः एकः सञ्चितः निधिः निष्पन्नः भवेत्; तथा च राज्यशासनेन प्राप्तैः सर्वैः राजस्वैः तेन शासनेन राजकोषहुण्डिकानां, ऋणानां, अर्थोपायाग्रिमधनानां च प्रचालनेन गृहीतैः उद्धारैः, उद्धाराणां प्रतिसन्दाने च तेन शासनेन प्राप्तैः सर्वैः धनैश्च "तद्राज्यसञ्चितनिधिः" इत्याख्यः एकः सञ्चितः निधिः निष्पन्नः भवेत् । **भारतस्य राज्यानां च सञ्चितनिधयः लोकलेखाश्च ।**

(२) भारतशासनेन, राज्यशासनेन वा, तयोः प्रतिनिधित्वेन वा प्राप्तानि अन्यानि सर्वाणि लोकधनानि यथायथं भारतस्य, तद्राज्यस्य वा लोकलेखायां आकलितानि भवेयुः ।

(३) भारतस्य कस्यापि राज्यस्य वा सञ्चितनिधेः कानि अपि धनानि, विधेः अनुसारं, अस्मिन् संविधाने उपबन्धितेभ्यः प्रयोजनेभ्यः उपबन्धितया रीत्या एव च विनियुक्तानि भवेयुः, नान्यथा ।

२६७. (१) संसद् विधिना अग्रदायस्वरूपेण "भारतीयाकस्मिकता निधिः" इति आख्यं आकस्मिकतानिधिं स्थापयितुं क्षमते, यस्मिन् तद्विधिना अवधारिताः राशयः काले काले निहिताः भवेयुः, तथोक्तः निधिश्च, ११५-तमानुच्छेदस्य, ११६-तमानुच्छेदस्य वा अधीनं संसदा विधिना अतर्कितव्ययस्य प्राधिकरणस्य लम्बनावस्थायां, तस्मात् निधेः तादृशव्ययस्य पूर्तिनिमित्तं अग्रिमधनं दातुं राष्ट्रपतये सामर्थ्यं प्रदातुं राष्ट्रपतेः वशे स्थाप्येत । **आकस्मिकतानिधिः ।**

(२) कस्यापि राज्यस्य विधानमण्डलं विधिना अग्रदाय स्वरूपेण "तद्राज्यस्य आकस्मिकतानिधिः" इत्याख्यं आकस्मिकतानिधिं स्थापयितुं क्षमते यस्मिन् तद्विधिना अवधारिताः राशयः काले काले निहिताः भवेयुः, तथोक्तः निधिश्च २०५-तमानुच्छेदस्य २०६-तमानुच्छेदस्य वा अधीनं तद्राज्यविधानमण्डलेन विधिना अतर्कितव्ययस्य प्राधिकरणस्य लम्बनावस्थायां तस्मात् निधेः तादृशव्ययस्य पूर्तिनिमित्तं अग्रिमधनं दातुं तद्राज्यस्य राज्यपालाय [2][ * * * ] सामर्थ्यं प्रदातुं राज्यपालस्य [2][ * * * ] वशे स्थाप्येत ।

### सङ्घस्य राज्यानां च मध्ये राजस्वानां विभाजनम्

२६८. तादृशाः मुद्राङ्कशुल्काः, औषधीयप्रसाधनीयसामग्र्युत्पादशुल्काश्च यादृशाः सङ्घसूच्यां वर्णिताः सन्तिः, भारतशासनेन उद्गृहीताः भवेयुः; किन्तु— **सङ्घेन उद्गृहीताः राज्यैः सङ्गृहीताः विनियोजिताश्च शुल्काः ।**

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च २६४ तमानुच्छेदात् प्रति एषः अनुच्छेदः संनिवेशितः ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखस्य वा" इत्येतौ शब्दौ लोपितौ ।

(क) यस्यां अवस्थायां तादृशाः शुल्काः [1][सङ्घराज्यक्षेत्रस्य] अभ्यन्तरे उद्ग्रहणीयाः स्युः, तस्यां भारतशासनेन;

(ख) अन्यासु अवस्थासु यस्य यस्याभ्यन्तरे तादृशाः शुल्काः उद्ग्रहणीयाः स्युः तेन तेन राज्येन च, सङ्गृहीताः भवेयुः ।

(२) कस्मिन् अपि वित्तीये वर्षे कस्यचिद् अपि राज्यस्य अभ्यन्तरे उद्ग्राह्यस्य कस्यापि तादृशस्य शुल्कस्य आगमाः भारतसञ्चितनिधेः भागाः न भवेयुः किन्तु तस्मै राज्याय अर्पिताः भवेयुः ।

**सङ्घेन उद्गृहीताः सङ्गृहीताश्च किन्तु राज्येभ्यः अर्पिताः कराः ।**

२६९. (१) निम्नलिखिताः शुल्काः कराश्च भारतशासनेन उद्गृहीताः सङ्गृहीताश्च भवेयुः; किन्तु (२) खण्डे उपबन्धितया रीत्या राज्येभ्यः अर्पिताः भवेयुः, तद् यथा—

(क) कृषिभूमेः इतरस्याः सम्पत्तेः उत्तराधिकारविषयकाः शुल्काः;

(ख) कृषिभूमेः इतरस्याः सम्पत्तेः विषयकाः सम्पत्शुल्काः;

(ग) लोहमार्गेण, समुद्रेण, वायुना वा वाहितानां भाण्डानां यात्रीणां वा सीमाकराः ;

(घ) लोहमार्गयात्राभाटकेषु भाण्डभाटकेषु च कराः;

(ङ) श्रेष्ठिचत्वराणां, भविष्यापणानां च पण्यव्यवहारेषु मुद्राङ्कशुल्कात् इतरे कराः;

(च) समाचारपत्राणां क्रये, विक्रये वा तेषु प्रकाशितेषु विज्ञापनेषु च कराः;

[2][(छ) समाचारपत्रेभ्यः इतरेषां भाण्डानां क्रये, विक्रये वा कराः यत्र क्रयः, विक्रयः वा आन्taराज्यिक-व्यापारवाणिज्यव्यवहाराभ्यन्तरे भवति];

[3][(ज) भण्डानां परेषणे कराः (परेषणं परेषकाय एव स्यात् अन्यस्मै कस्मै अपि वा स्यात्) यत्र परेषणं आन्ताराज्यिकव्यापारवाणिज्यव्यवहाराभ्यन्तरे भवति ।]

(२) कस्मिन् अपि वित्तीयवर्षे कस्यापि तादृशस्य शुल्कस्य, करस्य वा शुद्धागमाः, यावत् ते [4][सङ्घराज्य-क्षेत्रेभ्यः] प्राप्ताः आगमाः मन्येरन् तावद् वर्जयित्वा, भारतसञ्चितनिधेः भागाः न भवेयुः; किन्तु तेभ्यः राज्येभ्यः समर्पिताः भवेयुः येषु राज्येषु सः शुल्कः करः वा तस्मिन् वर्षे उद्गृहीतः भवेत्; तथा च तेभ्यः राज्येभ्यः एते शुद्धागमाः विभाजिता भवेयुः तादृशानां विभाजनसिद्धान्तानां अनुसारेण यादृशानां सिद्धान्तानां विरचना संसदा विधिना कृता भवेत् ।

[4][(३) आन्ताराज्यिकव्यापारवाणिज्यव्यवहाराभ्यन्तरे [5][भाण्डानां क्रयः, विक्रयः, परेषणं वा] कदा भवति एतद् अवधारणाय संसद् विधिना सिद्धान्तविरचनां कर्तुं क्षमते ।]

**सङ्घेन उद्गृहीताः सङ्गृहीताश्च कराः, तथाच सङ्घस्य राज्यानां च मध्ये विभाजिताः कराः ।**

२७०. (१) कृष्यायात् इतरेषु आयेषु कराः भारतशासनेन उद्गृहीताः सङ्गृहीताश्च भवेयुः, तथा च (२) खण्डे उपबन्धितरीत्या सङ्घस्य, राज्यानां च मध्ये विभाजिताः भवेयुः ।

(२) कस्मिन् अपि वित्तीयवर्षे कस्यापि तादृशस्य करस्य शुद्धागमानां, यावत् ते [4][सङ्घराज्यक्षेत्रैः] सङ्घो-

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः 'ग' भागे उल्लिखितराज्यस्य" इत्येत स्मात् प्रति एतत् संनिवेशितम् ।

२. संविधनास्य [षष्ठं संशोधनं] अधिनियमः, १९५६ इत्यस्य ३-अनुभागेन अन्तर्वेशितः ।

३. संविधानस्य (षट्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९८२ इत्यस्य २ -अनुभागेन अन्तर्वेशितः ।

४. संविधानस्य (सप्तमं संशोधनं) अधिनिममः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः 'ग' भाग उल्लिखितराज्यस्य" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

५. संविधानस्य (षट्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९८२ इत्यस्य २-अनुभागेन "भाण्डानां क्रयः विक्रयः वा" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

पलब्धिसम्बन्धेन वा, सन्देयैः करैः वा प्राप्ताः आगमाः मन्येरन् तावद् वर्जयित्वा, तादृशः प्रतिशतं भागः यादृशः विधीयेत[1], भारतसञ्चितनिधेः भागः न भवेत्; किन्तु तेभ्यः राज्येभ्य अर्पितः भवेत् येषां अभ्यन्तरे सः करः तस्मिन् वर्षे उद्गृहीतः भवति; तथा च यथाविहितया रीत्या यथाविहितात् च कालात्, तेभ्यः राज्येभ्यः विभाजितः भवेत।

(३) (२) खण्डस्य प्रयोजनानां कृते प्रत्येकवित्तीयवर्षे आयेषु कराणां यावन्तः सङ्घोपलब्धिसम्बन्धेन सन्देयकराणां शुद्धागमाः न भवन्ति, तावतां शुद्धागमानां तादृशः प्रतिशतं भागः यादृशः विहितः भवेत् [2][सङ्घराज्यक्षेत्रेभ्यः] प्राप्तः आगमः मन्येत।

(४) अस्मिन् अनुच्छेदे—

(क) "आयकरेषु" निगमकरः नान्तर्भवति;

(ख) "विहित" स्य अर्थः अस्ति यत्—

(प्रथमः) यावद् वित्तायोगस्य घटनं न जायते तावत् राष्ट्रपतिना आदेशेन विहितम्; तथा

(द्वितीयः) वित्तायोगस्य घटनानन्तरम्, वित्तायोगस्य पुरः प्रशंसनेषु विचारस्य पश्चात् राष्ट्रपतिना आदेशेन विहितम्।

(ग) "सङ्घोपलब्धिषु" भारतसञ्चितनिधेः सन्देयानि तानि सर्वाणि उपलब्धयः, निवृत्तिवेतनानि च अन्तर्भवन्ति येषां सम्बन्धेन आयकरः प्रभार्यः भवितुं अर्हति।

**सङ्घस्य प्रयोजनार्थं केषुचित् शुल्केषु करेषु च अधिभारः।**

२७१. २६९-तमानुच्छेदे २७०-तमानुच्छेदे च किमपि सत्यपि, संसत् तयोः अनुच्छेदयोः निर्दिष्टेषु शुल्केषु, करेषु वा अन्यतमं, कस्मिन् अपि काले सङ्घस्य प्रयोजनानां अर्थे अधिभारेण वर्धयितुं क्षमते; तादृशस्य कस्यापि अधिभारस्य च समस्ताः आगमाः भारतसञ्चितनिधेः भागाः भवेयुः।

**सङ्घेन उद्गृहीताः सङ्गृहीताश्च कराः ये सङ्घस्य राज्यानां च मध्ये विभाजनीयाः सन्ति।**

२७२. यादृशाः औषधीयप्रसाधनीयसामग्रीषु उत्पादनशुल्काः सङ्घसूच्यां वर्णिताः सन्ति तादृशेभ्यः इतरे सङ्घीयोत्पादनशुल्काः भारतशासनेन उद्गृहीताः सङ्गृहीताश्च भवेयुः, किन्तु संसद् एवं विधिना उपबन्धयति चेत्, शुल्कं अधिरोपयतः विधेः विषयतां ये गच्छन्ति तेभ्यः राज्येभ्यः तस्य शुल्कस्य सम्पूर्णशुद्धागमानां, तेषां कस्यापि भागस्य वा समानरूपाः राशयः भारतसञ्चितनिधितः सन्दीयेरन्, ते राशयश्च तेभ्यः राज्येभ्यः विधिना विरचितानां विभाजनसिद्धान्तानां अनुसारेण विभाजिताः भवेयुः।

**पट्टशणे, पट्टशणनिर्मितेषु वस्तुषु वा निर्यातशुल्कस्य स्थाने अनुदानानि।**

२७३. (१) पट्टशणे पट्टशणनिर्मितेषु वस्तुषु वा निर्यातशुल्कस्य प्रतिवार्षिकशुद्धागमानां कस्यचिद् भागस्य असम-ओडिश्शा-पश्चिमबङ्गाल-बिहारराज्येभ्यः अर्पणस्य स्थाने, तेषां राज्यानां राजस्वे सहायकानुदानरूपेण प्रतिवर्षं भारतसञ्चितनिधौ तादृशाः राशयः भारिताः भवेयुः यादृशाः विहिताः स्युः।

(२) पट्टशणे पट्टशणनिर्मितेषु वस्तुषु वा यावत् भारतशासनं कस्यापि निर्यातशुल्कस्य उद्ग्रहणं अनुवर्तयति तावत्, एतत् संविधानस्य प्रारम्भात् दशवर्षसमाप्तिः भवति तावत् वा, एतयोः यदपि प्राक्तरं भवति, एवं विहिताः राशयः भारतसञ्चितनिधौ भारितत्वेन अनुवर्तेरन्।

(३) अस्मिन् अनुच्छेदे "विहित" शब्दस्य स एव अर्थः यः अस्य संविधानस्य २७०-तमानुच्छेदे विद्यते।

**राज्यानां हितैः सम्बन्द्धं कराधिरोपणं प्रभावयतां विधेयकानां कृते राष्ट्रपतेः**

२७४. (१) किमपि विधेयकं, संशोधनं वा यद् राज्यानां हितेन सम्बद्धं कमपि करं, शुल्कं वा अधिरोपयति, परिवर्तयति अथवा यत् भारतीयेन आयकरेण सम्बद्धानां प्रयोजनार्थं परिभाषितस्य 'कृष्यायः' इति शब्दस्य अर्थं परिवर्तयति, अथवा यत् तान् सिद्धान्तान् प्रभावयति यदनुसारेण एतस्य अध्यायस्य पूर्ववर्तिषु उपबन्धेषु अन्य-

---

१. सांविधानिकः (राजस्वानां विभाजनं) आदेशः, १९७९ (सां० आ० ११२) द्रष्टव्यः।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः 'ग' भागे उल्लिखितराज्यानाम्" इत्येतस्मात् प्रति एतत् संनिवेशितम्।

ट: प्रशंसनस्य आवश्यकता ।

तमस्य अधीनत्वेन राज्येभ्यः धनानि विभाजनीयानि भवन्ति, भवितुं क्षमन्ते वा, अथवा यत् सङ्घस्य प्रयोजनानां अर्थे कमपि तादृशं अधिभारं अधिरोपयति यादृशः एतस्य अध्यायस्य पूर्ववर्तिषु उपबन्धेषु वर्णितः विद्यते, राष्ट्रपतेः पुरःप्रशंसनेन एव संसदः कतरस्मिन् अपि सदने पुरः स्थापितं, प्रस्तावितं वा भवेत्, नान्यथा ।

(२) अस्मिन् अनुच्छेदे "राज्यानां हितेन सम्बद्धः करः शुल्कः वा" इति शब्दसमूहेन अभिप्रेतं अस्ति—

(क) कश्चिद् अपि करः, शुल्कः वा यस्य शुद्धागमाः पूर्णतः अंशतः वा कस्मैचिद् अपि राज्याय अर्प्यन्ते, अथवा

(ख) कोपि करः शुल्कः वा यस्य शुद्धागमानां निर्देशेन भारतसञ्चितनिधेः तदानीं कस्मचिद् अपि-राज्याय राशयः सन्देयाः भवन्ति ।

केभ्यश्चिद् राज्येभ्यः सङ्घाद् अनुदानम् ।

२७५. (१) यादृशान् संसद् विधिना उपबन्धयेत् तादृशाः राशयः तादृशानां राज्यानां राजस्वानां सहायकानुदानरूपेण प्रतिवर्षं भारतसञ्चित निधौ भारिताः भवेयुः यादृशानां विषये संसद् अवधारयेत् यत् तेषां कृते सहाय्यस्य आवश्यकता विद्यते तथा च विभिन्नराज्येभ्यः विभिन्नाः राशयः नियताः क्रियेरन्—

परन्तु कस्यापि राज्यस्य राजस्वानां सहायकानुदानरूपेण भारतसञ्चितनिधेः तादृशाः मूलराशयः आवर्तकराशयश्च सन्दीयेरन् यादृशाः तद् राज्यं तादृशीनां विकासयोजनानां परिव्ययस्य उद्वहनाय समर्थं विधातुं आवश्यकाः भवेयुः यादृश्यः (विकासयोजनाः) तद्राज्यान्तर्गतानां अनुसूचितानां [जनजातीनां कल्याणस्य संवर्धनार्थं, तद्राज्यान्तर्गतानां] अनुसूचित क्षेत्राणां, प्रशासनस्तरस्य, तद्राज्यस्य शेषक्षेत्राणां प्रशासनस्तरं यावत्, समुन्नयनार्थं वा तेन राज्येन भारतशासनस्य अनुमोदनेन अङ्गीकृताः भवेयुः ।

अपरं च, असमराज्यस्य राजस्वानां सहायकानुदानरूपेण भारतसञ्चितनिधेः ते मूलराशयः, आवर्तकराशयश्च सन्दीयेरन्—

(क) ये षष्ठानुसूच्याः २०-प्रच्छेदेन संलग्नसारिण्याः [1][प्रथम भागे] विनिर्दिष्टानां जनजाति क्षेत्राणां प्रशासने एतस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं वर्षद्वयस्य राजस्वेभ्यः मध्यममानात् अधिकव्ययेन समाः भवेयुः; तथा च

(ख) ये तादृशीनां विकासयोजनानां परिव्ययैः समाः भवेयुः यादृश्यः तेन राज्येन भारतशासनस्य अनुमोदनेन उक्तक्षेत्राणां प्रशासनस्तरस्य, तद्राज्यस्य शेषक्षेत्राणां प्रशासन स्तरं यावत्, समुन्नयनार्थं अङ्गीकृताः भवेयुः ।

[2][(१अ) २४४अ-तमअनुच्छेदाधीनं स्वशासिराज्यस्य निर्माणकालादेव —

(प्रथमः) (१) खण्डस्य द्वितीयपारन्तुकस्य (क) खण्डस्य अधीनं सन्देयाः केचिद् अपि राशयः तदैव स्वशासिराज्याय सन्दत्ता भवेयुः यदि स्वशासिराज्यं तस्मिन् खण्डे निर्दिष्टानि सर्वाणि जनजातिक्षेत्राणि अन्तर्भावयति; तथा च यदि स्वशासिराज्यं तेषां जनजातिक्षेत्राणां केवलं कानिचिद् एव अन्तर्भावयति तर्हि, एते राशयः असमराज्यस्य स्वशासिराज्यस्य च मध्ये एवं प्रभाजिताः भवेयुः यथा राष्ट्रपतिः आदेशेन विनिर्दिशेत ;

(द्वितीयः) स्वशासिराज्यस्य राजस्वसहायतानुदानरूपेण तादृशाः मूलराशयः, आवतराशयश्च सन्दत्ताः भवेयुः यादृशाः तादृशीनां योजनानां परिव्ययैः समाः स्युः यादृश्यः स्वशासिराज्यस्य प्रशासनस्तरस्य, असमराज्यस्य शेषक्षेत्राणां प्रशासनस्तरं यावत्, समुन्नयनार्थं स्वशासिराज्येन भारतशासनस्य अनुमोदनेन अङ्गीकृताः स्युः ।]

---

१. पूर्वोत्तरक्षेत्र (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१ तमः) इत्यस्य ७१ अनुभागेन "क भागे" इत्येत स्मात् प्रति एतत् संनिवेशितं (२१-१-१९७१ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (द्वाविंशतितमं संशोधनं) अधिनियमः, १९६९ इत्यस्य ३-अनुभागेन अन्तर्वेशितः ।

(२) यावत् (१) खण्डस्य अनुरोधेन संसदा उपबन्धः न क्रियते तावत् तत्खण्डानुरोधेन संसदे प्रदत्ताः शक्तयः राष्ट्रपतिना आदेशेन प्रयोक्तव्याः भवेयुः; तथा च एतत् खण्डाधीनं राष्ट्रपतिना दत्तः कोपि आदेशः संसदा एवं कृतस्य कस्यापि उपबन्धस्य अधीनत्वेन प्रभावी भवेत्—

परन्तु वित्तायोगस्य घटनात् परं वित्तायोगस्य पुरःप्रशंसनेषु विचारं कृत्वा एव एतत् खण्डाधीनं कोपि आदेशः राष्ट्रपतिना दीयेत, नान्यथा।

**वृत्तिषु, व्यापारेषु, आजीविकासु, नियोजनासु च कराः।**

२७६. (१) २४६-तमानुच्छेदे किमपि सत्यपि राज्यस्य, तत्रत्यायाः नगरपालिकायाः, मण्डलमण्डल्याः स्थानीय मण्डल्याः तत्रत्यस्य अन्यस्य स्थानीयप्राधिकरणस्य वा हितसाधनार्थं वृत्तीनां, व्यापाराणां, आजीविकानां, नियोजनानां वा सम्बन्धिभिः करैः सम्बद्धः कस्यापि राज्यस्य विधानमण्डलस्य कोपि विधिः एतद् आधारेण अमान्यः न भवेत् यत् सः आयकरेण सम्बद्धः अस्ति इति।

(२) राज्याय अथवा तत्रत्यायै कस्यैचित् नगरपालिकायै, मण्डलमण्डल्यै, स्थानीयमण्डल्यै अन्यस्मै स्थानीय-प्राधिकरणाय वा कस्यापि एकस्य जनस्य विषये वृत्तिषु, व्यापारेषु, आजीविकासु, नियोजनासु च कररूपेण सन्देयः समस्तः राशिः प्रतिवर्षं २५० रूप्यकेभ्यः अधिकः न भवेत्—

परन्तु यदि एतस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्ववर्तिनि वित्तीयवर्षे कस्मिंश्चिद् अपि राज्ये अथवा कस्यामपि एतादृश्यां नगरपालिकायां, मण्डल्यां, कस्मिन् अपि तादृशे प्राधिकारिणि वा वृत्तिषु, व्यापारेषु, आजीविकासु, नियोजनासु वा सः करः प्रवृत्तः आसीत् यस्य मानं, अधिकतमं मानं वा प्रतिवर्षं २५० रूप्यकेभ्यः अधिकं आसीत्, तर्हि तादृशस्य करस्य उद्ग्रहणं तावत् कालं अनुवर्तेत यावत् संसद् विधिना एतत्प्रतिकूलं न उपबन्धयति, संसदा च एवं निर्मितः कोपि विधिः सामान्यरूपेण, अथवा केषांचित् विनिर्दिष्टानां राज्यानां नगर-पालिकानां, मण्डलीनां, प्राधिकरणानां वा सम्बन्धे निर्मितः भवितुं क्षमते।

(३) वृत्तिषु, व्यापारेषु, आजीविकासु, नियोजनासु च कराणां विषये यथोक्तप्रकारेण विधीनां निर्माणार्थं राज्यविधानमण्डलस्य शक्तेः न एवं अर्थः ग्राह्यः यद् वृत्तिभ्यः, व्यापारेभ्यः, आजीविकाभ्यः, नियोजनाभ्यश्च प्रोद्भूते उत्पन्ने वा आये कराणां विषये विधीनां प्रणयने संसदः शक्तिः केनापि प्रकारेण सीमिता इति।

**व्यावृत्तयः।**

२७७. ये कराः, शुल्काः, उपकराः, प्रशुल्काः वा संविधानस्य प्रारम्भात् अव्यवहितपूर्वं कस्यचिद् अपि राज्यस्य शासनेन कयाचित् नगरपालिकया वा केनापि प्राधिकारिणा, निकायेन वा तस्य राज्यस्य नगरपालिकायाः, मण्डलस्य अन्यस्य स्थानीयक्षेत्रस्य वा प्रयोजनार्थं यथाविधि उद्ग्राह्यमाणाः आसन् ते कराः शुल्काः, उपकराः, प्रशुल्काः वा, तेषां सङ्घसूच्यां निर्देशे सत्यपि तावत् उद्ग्राह्यत्वेन तेभ्यः एव प्रयोजनेभ्यः उपयोज्यत्वेन च अनुवर्तितुं अर्हन्ति, यावत् संसत् तत् प्रतिकूलं विधिना न उपबन्धयति।

२७८. [एकेषां वित्तीयविषयाणां सम्बन्धे प्रथमसूच्या (ख) भागस्य राज्यैः सहः समयः] संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च निरसितः।

**शुद्धागमानां गणनादि।**

२७९. (१) अस्य अध्यायस्य पूर्वगामिषु उपबन्धेषु "शुद्धागमाः" इति शब्दस्य, कस्यापि करस्य, शुल्कस्य वा सम्बन्धे तत्सङ्ग्रहपरिव्ययानां व्यवकलनानन्तरं अवशिष्टाः तदीयाः आगमाः इत्यर्थः भवति; तथा च तेषां उपबन्धानां प्रयोजनार्थं कस्मिन् अपि क्षेत्रे प्राप्तस्य, तस्मात् प्राप्यस्य वा कस्यापि करस्य शुल्कस्य वा तदीयस्य कस्यापि भागस्य वा शुद्धाः आगमाः भारतस्य नियन्त्रकमहालेखापरीक्षकेण अभिनिश्चिताः प्रमाणिताश्च भवेयुः; तस्य प्रमाणपत्रं च अन्तिमं भवेत्।

(२) कस्यामपि अवस्थायां, यस्यां एतद्भागाधीनं कस्यापि शुल्कस्य, करस्य वा आगमाः कस्मैचित् अपि राज्याय अर्पिताः भवन्ति, भवेयुः वा उपर्युक्तस्य उपबन्धस्य तथा अस्य अध्यायस्य कस्यापि अन्यस्य स्पष्टोपबन्धस्य अधीनत्वे, संसदा निर्मितः कोपि विधिः, राष्ट्रपतेः कोपि आदेशः वा तस्याः रीतेः यया आगमानां गणना करणीया भवति, तस्य कालस्य, यतः यस्मिन् वा, तस्याः रीतेश्च यया कानि अपि सन्दानानि करणीयानि भवन्ति, एकस्य वित्तीय वर्षस्य, अपरवित्तीयवर्षस्य च परस्परं समायोजनस्य, तथा अन्येषां केषांचित् प्रासङ्गिकानां, सहायकानां च विषयाणां उपबन्धं कर्तुं क्षमते।

**भागः १२—वित्तम्, सम्पत्तिः, संविदः, वादाश्च—अनु० २८०-२८४**

**वित्तायोगः।**

२८०. (१) अस्य संविधानस्य प्रारम्भात् वर्षद्वयाभ्यन्तरे ततः परं च प्रति पञ्चमवर्षसमाप्तौ, अथवा ततः पूर्वस्मिन् तादृशे काले यादृशं राष्ट्रपतिः आवश्यकं मन्यते एकं वित्तायोगं राष्ट्रपतिः आदेशेन घटयेत्, यश्च राष्ट्रपतिना नियुक्तेनः एकेन अध्यक्षेण चतुर्भिः अन्यैः सदस्यैश्च सम्भूय भवेत्।

(२) संसद् विधिना तासां अर्हतानां याः आयोगस्य सदस्यत्वेन नियुक्तये अपेक्षिताः भवेयुः, तस्याः रीतेश्च यया ते (सदस्याः) संवृताः भवेयुः, अवधारणं कर्तुं क्षमते।

(३) आयोगस्य एतत् कर्तव्यं भवेत् यत् सः—

(क) सङ्घस्य राज्यानां च मध्ये करसम्बन्धिशुद्धागमानां, ये एतदध्यायाधीनं तेभ्यः विभाजनीयाः भवन्ति, भवेयुः वा, विभाजन विषये, तथा राज्यानां मध्ये एतादृशागमसम्बन्धिनो अंशानां आवण्टनविषये;

(ख) भारतस्य सञ्चितनिधितः राज्यसम्बन्धिनां राजस्वानां सहायकानुदाने पालनीयानां सिद्धान्तानां विषये; तथा च

[1][ * * * * ]

[2][(ग)] सुस्थितवित्तस्य हितार्थं राष्ट्रपतिना आयोगाय समर्पितस्य कस्यापि अन्यस्य विषयस्य सम्बन्धे, राष्ट्रपतिं प्रति पुरः प्रशंसनं कुर्यात्।

(४) आयोगः स्वकीयप्रक्रियां अवधारयेत्, स्वकीयकृत्यानां च पालने तादृशीभिः शक्तिभिः युक्तः भवेत् यादृशीः संसद् विधिना तस्मै प्रदद्यात्।

**वित्तायोगस्य पुरः प्रशंसनानि।**

२८१. एतत् संविधानस्य उपबन्धानां अधीनं राष्ट्रपतिः, वित्तायोगेन कृतं प्रत्येकं पुरःप्रशंसनं, तद्विषये कृतायाः कार्यप्रवृत्तेः व्याख्यात्मकज्ञापनेन सहितं, संसदः प्रत्येकं सदनयोः पुरतः स्थापयेत्।

## प्रकीर्णाः वित्तीयोपबन्धाः

**सङ्घेन केनापि राज्येन वा स्वकीयराजस्वेभ्यः क्रियमाणः व्ययः।**

२८२. सङ्घः, किमपि राज्यं वा, कस्यापि लोकप्रयोजनस्य हेतोः किमपि अनुदानं दातुं क्षमते, यद्यपि तत् प्रयोजनं तादृशं न भवेत् यद्विषये, यथायथं, संसद्, तद्राज्यविधानमण्डलं वा विधिं प्रणेतुं क्षमते।

**सञ्चितनिधीनां, आकस्मिकतानिधीनां लोकलेखासु आकलितधनानां च अभिरक्षादि।**

२८३. (१) भारतसञ्चितनिधेः, भारताकस्मिकतानिधेश्च अभिरक्षा, तादृशनिधिषु धनानां निधानं, ततः धनानां प्रत्याहरणं, तादृशनिधिषु आकलितधनात् अतिरिक्तानां भारतशासनेन तस्य कृते वा प्राप्तानां लोकधनानां अभिरक्षा, तेषां भारतस्य लोकलेखासु सन्दानं तथा तादृशलेखाभ्यः धनानां प्रत्याहरणं तथा उपर्युक्तविषयैः संसक्तानां तेषां आनुषङ्गिकानां वा अन्येषां सर्वेषां विषयाणां विनियमनं संसदा प्रणीतेन विधिना भवेत्; तथा च यावद् एवं उपबन्धः न क्रियते तावत् राष्ट्रपतिना निर्मितैः नियमैः भवेत्।

(२) राज्यसञ्चितनिधेः, राज्याकस्मिकतानिधेश्च अभिरक्षा, तादृशनिधिषु धनानां निधानं, ततः धनानां प्रत्याहरणं, तादृशनिधिषु आकलितधनात् अतिरिक्तानां, राज्यशासनेन तस्य कृते वा प्राप्तानां लोकधनानां अभिरक्षा, तेषां राज्यस्य लोकलेखासु सन्दानं तथा तादृशलेखाभ्यः धनानां प्रत्याहरणं तथा उपर्युक्तविषयैः संसक्तानां, तेषां आनुषङ्गिकानां वा अन्येषां सर्वेषां विषयाणां विनियमनं राज्यविधानमण्डलेन प्रणीतेन विधिना भवेत्, तथा च यावद् एवं उपबन्धः न क्रियते तावत् तद्राज्यस्य राज्यपालेन [3][ * * * ] निर्मितैः नियमैः भवेत्।

**लोकसेवकैः न्यायालयैश्च प्राप्तानां वादिनिक्षेपाणां अन्यधनानां च अभिरक्षा।**

२८४. सर्वाणि धनानि—

(क) यथायथं भारतशासनेन राज्यशासनेन वा सङ्गृहीतानि, प्राप्तानि वा राजस्वानि लोकधनानि वा

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च (ग) उपखण्डः लोपितः।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च (घ) उपखण्डः (ग) उपखण्डरूपेण पुनः अक्षराङ्कितः।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखेन वा" इत्येतौ शब्दौ लोपितौ।

वर्जयित्वा, सङ्घस्य, कस्यापि राज्यस्य वा कार्याणां सम्बन्धे नियोजितेन केनापि अधिकारिणा आधिकारित्व-रूपेण प्राप्तानि तस्मिन् निक्षिप्तानि वा; अथवा

(ख) कस्यापि वादस्य, विषयस्य, लेखायाः, जनानां वा नाम्नि भारतराज्यक्षेत्रस्यान्तः केनापि न्यायलयेन, प्राप्तानि, तस्मिन् निक्षिप्तानि वा,

यथायथं भारतस्य लोकलेखायां तद्राज्यस्य लोकलेखायां वा सन्दत्तानि भवेयुः ।

**सङ्घसम्पत्तेः राज्य-करेभ्यः विमुक्तिः ।**

२८५. (१) यावत् संसद् विधिना अन्यथा न उपबन्धयति तावत् केनापि राज्येन, राज्यान्तर्गतेन केनापि प्राधिकारिणा वा अधिरोपितेभ्यः सर्वेभ्यः करेभ्यः सङ्घस्य सम्पत्तिः विमुक्ता भवेत् ।

(२) यावत् संसद् विधिना अन्यथा न उपबन्धयति तावत् प्रथमखण्डगतं किमपि कस्यापि राज्यस्यान्तः कमपि प्राधिकारिणं कस्यामपि सङ्घसम्पत्तौ कस्यापि तस्य करस्य उद्ग्रहणात् न निवारयेत्, यस्य विषये एतस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं एतादृशी सम्पत्तिः दायिनी आसीत्, दायिनी इति मता वा आसीत्, यावत् सः करः तस्मिन् राज्ये उद्ग्राह्यत्वेन अनुवर्तते ।

**भाण्डानां क्रये विक्रये वा कराधिरोपणविषये निर्बन्धनानि ।**

२८६. (१) कस्यापि राज्यस्य कश्चिदपि विधिः, भाण्डानां क्रये विक्रये च, यत्र एतादृशः क्रयः विक्रयः वा—

(क) तस्माद् राज्याद् बहिः, अथवा

(ख) भारतराज्यक्षेत्रे भाण्डानां आयातस्य ततः बहिः निर्यातस्य वा विषये,

प्रवर्तते, तत्र कराधिरोपणं न कुर्यात्, न वा कराधिरोपणं प्राधिकृतं कुर्यात् ।

[1][ * * * * ]

[2][(२) (१) खण्डे निर्दिष्टरीतीनां कया रीत्या भाण्डानां क्रयः विक्रयः वा कदा भवति इति अवधारयितुं सिद्धान्तान् विधिना प्रणेतुं संसद् क्षमते ।

[3][(३) राज्यस्य कोपि विधिः यावत् सः—

(क) आन्ताराज्यिकव्यापारे वाणिज्ये वा एतानि विशिष्टं महत्वं धारयन्ति इत्येवं संसदा घोषितानां भाण्डानां क्रये वा विक्रये वा करं; अथवा

(ख) ३६६-तमानुच्छेदस्य २९अ खण्डस्य (ख) उपखण्डे, (ग) उपखण्डे, (घ) उपखण्डे वा निर्दिष्ट-प्रकारं करं भाण्डानां क्रये वा विक्रये वा,

अधिरोपयति, करस्य अधिरोपणं प्राधिकृतं वा करोति तावत् स विधिः करस्य उद्ग्राहणपद्धत्याः, मानस्य, अन्येषां आपतनानां च सम्बन्धे तादृशानां निर्बन्धनानां, प्रतिबन्धनानां च अधीनः भवेत् यादृशानि संसद् विधिना विनिर्दिशति ।]

**विद्युति करेभ्यः विमुक्तिः ।**

२८७. यावत् संसद् विधिना अन्यथा न उपबन्धयति तावत् (शासनेन अन्यजनैः वा उत्पादितायाः) विद्युतः उपभोगे, विक्रये वा, या

(क) भारतशासनेन उपभुज्यते, भारत शासनस्य उपभोगार्थं तस्मै शासनाय विक्रीयते वा; अथवा

(ख) कस्यापि लोहमार्गस्य निर्माणे, सन्धारणे, चालने वा भारतशासनेन, लोहमार्गचालकेन लोहमार्ग-

---

१. संविधानस्य (षष्ठं संशोधनं) अधिनियमः, १९५६ इत्यस्य ४-अनुभागेन (१) खण्डस्य स्पष्टीकरणं लोपितम् ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन (२), (३) खण्डयोः प्रति एतौ खण्डौ संनिवेशितौ ।

३. संविधानस्य (षट्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९८२ इत्यस्य ३-अनुभागेन (३) खण्डात् प्रति एषः खण्डः संनिवेशितः ।

समवायेन वा उपभुज्यते, अथवा कस्यापि लोहमार्गस्य निर्माणे, सन्धारणे, चालने वा उपभोगार्थं तस्मै शासनाय, कस्मै अपि तादृशाय लोहमार्गसमवायाय वा विक्रीयते,

कस्यापि राज्यस्य कोपि विधिः कराधिरोपणं न कुर्यात् न वा कराधिरोपणं प्राधिकृतं कुर्यात् तथा च वद्युतः विक्रये करं अधिरोपयन्, कराधिरोपणं प्राधिकृतं कुर्वन् वा कोपि तादृशः विधिः सुनिश्चितं कुर्यात् यत् भारतशासनाय तस्य शासनस्य उपभोगार्थं अथवा कस्मैचित् तादृशाय लोहमार्गसमवायाय, यादृशः पूर्वं उक्तः, कस्यापि लोहमार्गस्य निर्माणे, सन्धारणे, चालने वा उपभोगार्थं विक्रीतायाः विद्युतः मूल्यं विद्युतः प्रचुरमात्रायाः अन्येभ्यः उपभोक्तृभ्यः गृहीतात् मूल्यात् करस्य राशितः न्यूनीभवेत् ।

**जलस्य विद्युतः वा विषये राज्येन ग्राह्येभ्यः करेभ्यः कासुचिद् अवस्थासु विमुक्तिः ।**

२८८. (१) यावद् राष्ट्रपतिः आदेशेन अन्यथा न उपबन्धयति तावत्, एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं कस्यापि राज्यस्य कोपि प्रवृत्तः विधिः, कस्यापि आन्ताराज्यिक्याः नद्याः नदीद्रोण्याः वा विनियमनार्थं, विकासार्थं वा केनापि विद्यमानेन विधिना, संसदा निर्मितेन वा केनापि विधिना स्थापितेन केनापि प्राधिकारिणा सञ्चितस्य, जनितस्य, उपभुक्तस्य, विभाजितस्य, विक्रीतस्य वा जलस्य विद्युतः वा विषये कमपि करं न अधिरोपयेत् न वा करस्य अधिरोपणं प्राधिकृतं कुर्यात् ।

**स्पष्टीकरणम्**—अस्मिन् अनुच्छेदे "कस्यापि राज्यस्य कोपि प्रवृत्तः विधिः" इति शब्दसमूहे एतत् संविधानस्य प्रारम्भात् पूर्वं पारितः, प्रणीतः वा, न च पूर्वं निरस्तः, कस्यापि राज्यस्य कोपि विधिः अन्तर्भवति, यद्यपि स विधिः तस्य भागाः वा तदा सर्वत्र केषुचित् विशिष्टक्षेत्रेषु वा प्रवृत्ताः न स्युः ।

(२) कस्यापि राज्यस्य विधानमण्डलं विधिना प्रथमखण्डे वर्णितस्य करस्य अधिरोपणं कर्तुं, अधिरोपणं प्राधिकृतं वा कर्तुं क्षमते, किन्तु एतादृशः विधिः तावत् कार्यक्षमः न भवेत् यावत् सः राष्ट्रपतेः विचारार्थं रक्षितः सन् तस्य अनुमतिं न लभते; तथा च यदि तादृशः कोपि विधिः तादृशस्य करस्य मानानां, अन्यापतनानां च केनापि प्राधिकारिणा तस्य विधेः अधीनं निर्मातव्यैः नियमैः आदेशैः वा नियतीकरणार्थं उपबन्धं करोति, तर्हि सः विधिः तादृशस्य कस्यापि नियमस्य आदेशस्य वा निर्माणार्थं राष्ट्रपतेः पूर्वसम्मतिग्रहणाय उपबन्धं कुर्यात् ।

**सङ्घस्य कराधानात् कस्यापि राज्यस्य सम्पतेः आयस्य च विमुक्तिः ।**

२८९. (१) कस्यापि राज्यस्य सम्पत्तिः आयश्च सङ्घस्य कराधानात् विमुक्तौ भवेताम् ।

(२) प्रथमखण्डगतं किमपि, सङ्घं कस्यापि राज्यस्य शासनेन तत् कृते वा क्रियमाणस्य कीदृशस्यापि व्यापारस्य कार्यस्य वा विषये, अथवा तादृशेन व्यापारेण कार्येण वा सम्बद्धानां कासामपि क्रियाणां विषये, अथवा एतादृशस्य व्यापारस्य कार्यस्य वा प्रयोजनैः प्रयुक्तायाः अधिकृतायाः वा कस्याः अपि सम्पत्तेः विषये, अथवा ततः प्रोद्भूतस्य उत्पन्नस्य वा कस्यापि आयस्य विषये, कस्यापि करस्य तादृशं विस्तारं यावत्, स चेत् भवति, यादृशं संसद् विधिना उपबन्धयेत् अधिरोपणात् अधिरोपणस्य प्राधिकृतीकरणात् वा, न वारयेत् ।

(३) द्वितीयखण्डगतं किमपि, कमपि तं व्यापारं कार्यं वा, अथवा व्यापारस्य कार्यस्य वा कमपि तं प्रकारं न विषयीकुर्यात् यं संसद् विधिना सः (प्रकारः) शासनस्य सामान्यकृत्यानां प्रासङ्गिकः इति घोषयेत् ।

**केषांचित् व्ययानां निवृत्तिवेतनानां च विषये समायोजनम् ।**

२९०. यत्र एतत् संविधानस्य उपबन्धानां अधीनं कस्यापि न्यायालयस्य आयोगस्य वा व्ययाः, अथवा येन जनेन एतत् संविधानस्य प्रारम्भात् पूर्वं भारतस्य सम्राजः अधीनं, एतादृशात् प्रारम्भात् परं वा सङ्घस्य कस्यापि राज्यस्य वा कार्याणां सम्बन्धेन सेवा कृता भवेत्, तस्मै तत्सम्बन्धेन वा सन्देयं निवृत्तिवेतनं भारतस्य सञ्चितनिधौ, राज्यानां सञ्चितनिधौ वा भारितं भवति तत्र, यदि—

(क) भारतसञ्चितनिधौ भारितत्वावस्थायां स न्यायालयः आयोगः वा कस्यापि राज्यस्य पृथगावश्यकतासु कस्याः अपि पूर्तिं करोति स जनः वा, पूर्णतः अंशतः वा कस्यापि राज्यस्य कार्याणां सम्बन्धेन सेवां कृतवान् अस्ति; अथवा

(ख) कस्यापि राज्यस्य सञ्चितनिधौ भारितत्वावस्थायां, स न्यायालयः आयोगः वा सङ्घस्य अन्यस्य वा राज्यस्य पृथगावश्यकतासु कस्याः अपि पूर्तिं करोति, स जनः वा सङ्घस्य अन्यस्य राज्यस्य वा कार्याणां सम्बन्धेन पूर्णतः अंशतः वा सेवां कृतवान् अस्ति,

तर्हि, तस्य राज्यस्य सञ्चितनिधौ अथवा यथायथं भारतस्य सञ्चितनिधौ तस्य अन्यस्य वा राज्यस्य सञ्चितनिधौ व्ययविषयकं निवृत्तिवेतनविषयकं वा तादृशं अंशदानं भारितं भवेत्, तस्मात् निधेश्च दीयेत यादृशस्य समयः भवेत्, समयस्य अभावे वा यादृशं अंशदानं भारतस्य मुख्यन्यायमूर्त्तिना नियोज्येन मध्यस्थेन अवधारितं भवेत् ।

**केभ्यश्चिद् देवस्वं निधिभ्यः वार्षिकः सन्दायः ।**

[1][२९०अ. प्रतिवर्षं पञ्चाशत्सहस्राधिकषट्चत्वारिंशत् लक्षमितरूप्यकाणां राशिः केवलं राज्यस्य सञ्चितनिधौ भारितः, तस्मात् तिरुवाङ्कुरदेवस्वकोषाय सन्दत्तश्च भवेत्; तथा प्रतिवर्षं पञ्चाशत्सहस्राधिकत्रयोदशलक्षमितरूप्यकाणां राशिः [2][तमिलनाडु] राज्यस्य सञ्चितनिधौ भारितः, तस्मात् १९५६-वर्षस्य नवम्बर मासस्य प्रथमदिने तिरुवाङ्कुर-कोच्चिराज्यात् तस्मिन् राज्ये अन्तरितक्षेत्रेषु अन्तर्गतानां हिन्दूमन्दिराणां हिन्दूपूजास्थलानां च अनुरक्षार्थं स्थापिताय देवस्वं कोषाय सन्दत्तश्च भवेत् ।]

२९१. [शासकानां निजकोषस्य राशयः]—संविधानस्य (षड्विंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य २-अनुभागेन निरसितः ।

## अध्याय २—ऋणग्रहणम्

**भारतशासनस्य ऋणग्रहणम् ।**

२९२. सङ्घस्य कार्यपालिका शक्तिः भारतस्य सञ्चितनिधेः प्रतिभूत्या ऋणग्रहणं यावत् विस्तृता विद्यते तादृशीनां सीमानां अभ्यन्तरे, यदि ताः स्युः चेत्, यादृशीः संसद् काले काले विधिना नियतीकुर्यात्; तथा प्रत्याभूतिप्रदानं यावत् च विस्तृता विद्यते तादृशीनां सीमानां अभ्यन्तरे, यदि ताः स्युः चेत्, यादृश्यः एवं नियतीकृताः भवेयुः ।

**राज्यानां ऋणग्रहणम् ।**

२९३. (१) एतदनुच्छेदस्य उपबन्धानां अधीनं, कस्यापि राज्यस्य कार्यपालिका शक्तिः तद्राज्यस्य सञ्चितनिधेः प्रतिभूत्या भारतस्य राज्यक्षेत्रस्य अभ्यन्तरे ऋणग्रहणं यावत् विस्तृता विद्यते तादृशीनां सीमानां अभ्यन्तरे, यदि ताः स्युः चेत्, यादृशीः तादृशराज्यस्य विधानमण्डलं काले काले विधिना नियतीकुर्यात्; तथा च प्रत्याभूतिप्रदानं यावत् तादृशीनां सीमानां अभ्यन्तरे, यदि ताः स्युः चेत्, यादृश्यः एवं नियतीकृताः भवेयुः ।

(२) भारतशासनं, तादृशानां प्रतिबन्धानां अधीनं यादृशाः संसदा प्रणीतेन केनापि विधिना तदनुरोधेन वा अधिकथिताः स्युः, कस्मैचिदपि राज्याय ऋणं दातुं क्षमते, अथवा यावद् एतस्य संविधानस्य २९२-तमानुच्छेदस्य अधीनं नियतानां कासामपि सीमानां अतिक्रमः न भवति, तावत् एतादृशेन केनचिदपि राज्येन गृहीतस्य ऋणस्य विषये प्रत्याभूतिं प्रदातुं क्षमते, तथा एतादृशस्य ऋणस्य दानाय आवश्यकाः केपि राशयः भारतस्य सञ्चितनिधौ भारिताः भवेयुः ।

(३) यद् ऋणं भारतशासनेन, तस्य पूर्वाधिकारिशासनेन वा कस्मै अपि राज्याय दत्तं विद्यते अथवा यस्मिन् विषये भारतशासनेन तस्य पूर्वाधिकारिशासनेन वा प्रत्याभूतिः प्रदत्ताः विद्यते, तस्य ऋणस्य यदि कोपि भागः अवशिष्यते तर्हि तद् राज्यं भारतशासनस्य सहमतिं विना किमपि ऋणं ग्रहीतुं न क्षमते ।

(४) (३)खण्डस्य अधीनं सहमतिः तेषां प्रतिबन्धानां अधीनं, यदि ते भवन्ति चेत्, दीयेत येषां अधिरोपणं भारतशासनं उचितं मन्येत ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य १९-अनुभागेन अन्तर्वेशितः ।

२. मद्रासराज्य (नामपरिवर्तनं) अधिनियमः १९६८ (१९६८ वर्षस्य ५३ तमः) इत्यस्य ४-अनुभागेन "मद्रास राज्यस्य" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१४-१-१९६९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

## अध्याय ३—सम्पत्तिः, संविदः, अधिकाराः, दायित्वानि, आभाराः, वादाश्च

**कासुचिद् अवस्थासु सम्पत्तेः, सर्वस्वस्य, अधिकाराणां, दायित्वानां, आभाराणां च उत्तराधिकारः।**

२९४. अस्य संविधानस्य प्रारम्भात् पूर्वं पाकिस्तानाधिनिवेशस्य, अथवा पश्चिमबङ्गाल-पूर्वबङ्गाल-पश्चिमपञ्जाब-पूर्वपञ्जाबप्रान्तानां निर्माणकारणात् कृतस्य कर्तव्यस्य वा समायोजनाधीनं—

अस्य संविधानस्य प्रारम्भात् एव—

(क) सा सर्वा सम्पत्तिः, तानि च सर्वाणि सर्वस्वानि, यानि तादृशात् आरम्भात् अव्यवहितपूर्वं भारताधिनिवेशशासनस्य प्रयोजनार्थं सम्राजि निहितानि आसन्, सा च सर्वा सम्पत्तिः, तानि च सर्वाणि सर्वस्वानि यानि तादृशात् आरम्भात् अव्यवहितपूर्वं प्रत्येकराज्यपालप्रान्तशासनस्य प्रयोजनार्थं सम्राजि निहितानि आसन्, क्रमशः सङ्घे तत्स्थानीयराज्ये च निहितानि भवेयुः; तथा च

(ख) भारताधिनिवेशशासनस्य, प्रत्येकराज्यपालप्रान्तशासनस्य च अधिकाराः दायित्वानि, आभाराश्च तेषां कस्याश्चित् संविदः अन्यथा वा उद्भूतत्वे अपि क्रमशः भारतशासनस्य प्रत्येकस्य तत्स्थानीयराज्यस्य च अधिकाराः दायित्वानि, आभाराश्च भवेयुः।

**अन्यासु अवस्थासु सम्पत्तेः सर्वस्वस्य अधिकाराणां दायित्वानां आभाराणां च उत्तराधिकारः।**

२९५. (१) अस्य संविधानस्य प्रारम्भात् एव—

(क) सा सर्वा सम्पत्तिः, तानि च सर्वाणि सर्वस्वानि यानि तादृशात् प्रारम्भात् अव्यवहितपूर्वं प्रथमानुसूच्याः (ख) भागे उल्लिखितस्य कस्यापि राज्यस्य स्थानिनि कस्मिश्चिद् अपि देशीयराज्ये निहितानि आसन्, भारतशासनेन तद्राज्यशासनेन सह तद्विषये कृतस्य समयस्य अधीनं, सङ्घे निहितानि भवेयुः, यदि तानि प्रयोजनानि, यदर्थं तादृशानि सर्वस्वानि, सम्पत्तयश्च तादृशात् प्रारम्भात् अव्यवहितपूर्वं सन्धृतानि आसन् ततः परं सङ्घसूच्यां प्रगणितविषयेषु अन्यतमेन सम्बद्धानि सङ्घस्य प्रयोजनानि स्युः, तथा च

(ख) प्रथमानुसूच्याः (ख) भागे उल्लिखितस्य राज्यस्य स्थानिनः कस्यचिद् अपि देशीयराज्यस्य शासनस्य अधिकाराः, दायित्वानि, आभाराश्च तेषां कस्याश्चित् संविदः अन्यथा वा उद्भूतत्वे अपि भारतशासनेन तद्राज्यशासनेन सह तद्विषये कृतस्य समयस्य अधीनं, भारतशासनस्य अधिकाराः दायित्वानि, आभाराश्च भवेयुः, यदि तानि प्रयोजनानि, यदर्थं तादृशात् प्रारम्भात् अव्यवहितपूर्वं तादृशाः अधिकाराः अर्जिताः आसन्, अथवा दायित्वानि आभाराः वा प्राप्तानि आसन्, ततः परं सङ्घसूच्यां प्रगणितविषयेषु अन्यतमेन सम्बद्धानि सङ्घस्य प्रयोजनानि स्युः।

(२) अस्य संविधानस्य प्रारम्भात् एव, उपरि यद् उक्तं अस्ति तदधीनं, प्रथमानुसूच्याः (ख) भागे उल्लिखितस्य प्रत्येकराज्यस्य शासनं, प्रथमखण्डे निर्दिष्टेभ्यः इतरेषां सर्वेषां सम्पत्तीनां सर्वस्वानां च तथा संविदः अन्यथा वा उद्भूतानां सर्वेषां अधिकाराणां, दायित्वानां आभाराणां च विषये, स्वस्थानिनः देशीयराज्यस्य उत्तराधिकारी भवेत्।

**राजगामित्वेन, व्यपगतत्वेन, स्वामिहीनत्वेन वा प्रोद्भूता सम्पत्तिः।**

२९६. एतत् पश्चात् अत्र उपबन्धितं अस्ति तदधीनं, यदि एतत् संविधानं प्रवृत्तं न अभविष्यत् तर्हि भारतस्य राज्यक्षेत्रे स्थिता कापि सम्पत्तिः राजगामित्वेन, व्यपगतत्वेन, अधिकारयुक्तस्वामिनः अभावे स्वामित्वहीनरिक्थरूपेण वा यथायथं सम्राजे, देशीयराज्यशासकाय वा प्रोद्भूता अभविष्यत्, सा सम्पत्तिः कस्मिन् अपि राज्ये अवस्थिता चेत् तादृशे राज्ये अन्यस्यां कस्यांचित् अवस्थायां च सङ्घे निहिता भवेत्—

परन्तु कापि सम्पत्तिः या—तस्मिन् दिनाङ्के यस्मिन् सा एवं सम्राजे, देशीयराज्यशासकाय वा प्रोद्भूता अभविष्यत्—भारतशासनस्य कस्यचिद् राज्यशासनस्य वा भुक्तौ, नियन्त्रणे वा आसीत् येषां प्रयोजनानां अर्थे सा तदा प्रयुक्ता धृता वा आसीत् तानि प्रयोजनानि सङ्घस्य चेत् स्युः तर्हि सङ्घे, कस्यापि राज्यस्य चेत् स्युः तर्हि तस्मिन् राज्ये, निहिता भवेत्।

**स्पष्टीकरणम्**—अस्मिन् अनुच्छेदे "शासक" "देशीयराज्य" इति शब्दयोः सः एव अर्थः ग्राह्यः यः ३६३-तमानुच्छेदे विद्यते।

## भागः १२—वित्तम्, सम्पत्तिः, संविदः, वादाश्च—अनु० २९७-३००

[1][२९७. (१) सर्वा भूमयः, सर्वाणि खनिजानि अन्यानि मूल्यवन्ति वस्तूनि च यानि भारतराज्यक्षेत्रीये सागरखण्डे, अथवा महाद्वीपीये जलमग्नतटभूमौ अथवा अनन्यार्थिकक्षेत्रे समुद्रस्य अधः स्थितानि, तानि सङ्घे निहितानि सङ्घस्य प्रयोजनानां अर्थे धृतानि च भवेयुः ।

**राज्यक्षेत्रीयसागरखण्डे अथवा महाद्वीपीयमग्नतटभूमौ स्थितानां मूल्यवतां वस्तूनां अनन्यार्थिकक्षेत्रसाधनानां च सङ्घे निधानम् ।**

(२) भारतस्य अनन्यार्थिकक्षेत्रस्य सर्वाणि अन्यानि साधनानि अपि च सङ्घे निहितानि सङ्घस्य प्रयोजनानां अर्थे धृतानि च भवेयुः ।

(३) भारतस्य राज्यक्षेत्रीयस्य सागरखण्डस्य, महाद्वपीयमग्नतटभूमेः, अनन्यार्थिकक्षेत्रस्य, अन्येषां समुद्रीयक्षेत्राणां च सीमाः तादृश्यः भवेयुः यादृश्यः काले काले संसदा प्रणीतेन विधिना तदधीनं वा विनिर्दिष्टाः भवेयुः ।]

[2][२९८. सङ्घस्य, प्रत्येकराज्यस्य च कार्यपालिकाशक्तिः कस्यापि व्यापारस्य, व्यवहारस्य च करणे, तथा च सम्पत्तेः अर्जने, धारणे, व्ययने तथा च कस्यापि प्रयोजनस्य अर्थे संविदां करणे अपि विस्तृता भवेत्—

**व्यापारदीनां करणे शक्तिः ।**

परन्तु—

(क) यावत् एतादृशः व्यापारः, व्यवहारः एतादृशं प्रयोजनं वा तादृशं न भवति यस्य सम्बन्धे संसद् विधिं प्रणेतुं क्षमते, तावत् सङ्घस्य उक्तकार्यपालिकाशक्तिः प्रत्येकराज्ये तद्राज्यस्य विधेः अधीना भवेत्, तथा च

(ख) यावत् तादृशः व्यापारः व्यवहारः तादृशं प्रयोजनं वा तादृशं न भवति यस्य सम्बन्धे राज्यस्य विधानमण्डलं विधिं प्रणेतुं क्षमते तावत् प्रत्येकराज्यस्य उक्ता कार्यपालिकाशक्तिः संसदः विधेः अधीना भवेत् ।]

२९९. (१) सङ्घस्य अथवा कस्यापि राज्यस्य कार्यपालिकायाः शक्तेः प्रयोगेण कृताः सर्वाः संविदः यथायथं राष्ट्रपतिना अथवा तस्य राज्यस्य राज्यपालेन [3][ * * * ] कृताः इति अभिहितं भवेत् तथा च तस्याः शक्तेः प्रयोगेण कृताः सर्वाः एतादृश्यः संविदः सर्वाणि च सम्पत्तिहस्तान्तरणपत्राणि राष्ट्रपतेः राज्यपालस्य वा [3][ * * * ] कृते एतादृशैः जनैः एतादृश्या च रीत्या लिखितानि भवेयुः यथा तेन निर्दिश्यते प्राधिक्रियते वा ।

**संविदः ।**

(२) न हि राष्ट्रपतिः न च कस्यापि राज्यस्य राज्यपालः [4][ * * * ] एतत् संविधानस्य प्रयोजनानां कृते, अथवा भारतशासनसम्बन्धिनः इतः पूर्वं प्रवर्तितस्य कस्यापि अधिनियमस्य प्रयोजनानां कृते, कृतायाः, लिखितायाः वा कस्याः अपि संविदः कृतस्य, लिखितस्य वा कस्यापि हस्तान्तरणपत्रस्य वा विषये, वैयक्तिकरूपेण उत्तरदायी भवेत्, न च कश्चित् जनः तेषां अन्यतरस्य कृते कामपि तादृशीं संविदं तादृशं हस्तान्तरणपत्रं वा कुर्वन् लिखन् वा तद्विषये वैयक्तिकरूपेण उत्तरदायी भवेत् ।

३००. (१) भारतसङ्घस्य नाम्ना भारतशासनं वादि भवितुं प्रतिवादि वा भवितुं क्षमते, तथा कस्यापि राज्यस्य नाम्ना तद्राज्यशासनं वादि भवितुं, प्रतिवादि भवितुं वा क्षमते; तथा एतत् संविधानेन प्रदत्तानां शक्तीनां आश्रयेण संसदा एतादृशराज्यविधानमण्डलेन वा प्रणीतेन अधिनियमेन करणीयोपबन्धानां अधीनं ते स्वस्वकार्याणां सम्बन्धे तासु एव अवस्थासु वादिनी भवितुं, प्रतिवादिनी वा भवितुं क्षमते यासु भारताधिनिवेशः तत्स्थानिप्रान्ताश्च तत्स्थानिदेशीयराज्यानि वा वादीनि भवितुं क्षमाणि भविष्यन्, प्रतिवादीनि भवितुं क्षमाणि वा अभविष्यन्, यदि एतस्मै संविधानाय अधिनियमरूपता दत्ता न अभविष्यत् ।

**वादाः, कार्यप्रवृत्तयश्च ।**

---

१. संविधानस्य (चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २-अनुभागेन, २९७-तमानुच्छेदात् प्रति एषः अनुच्छेदः संनिवेशितः (२७-५-१९७६ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २०-अनुभागेन २९८-तमानुच्छेदात् प्रति एषः अनुच्छेदः संनिवेशितः ।

३. उपर्युक्ताधिनियमस्य २९-अनुभागेन अनुसुच्या च "राजप्रमुखेन वा" इत्येतौ शब्दौ लोपितौ ।

४. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखस्य वा" इत्येतौ शब्दौ लोपितौ ।

(२) यदि एतस्य संविधानस्य प्रारम्भे—

(क) काश्चित् विधिकार्यप्रवृत्तयः लम्बिताः स्युः यत्र भारताधिनिवेशः एकः पक्षः विद्यते तर्हि तासु कार्यप्रवृत्तिषु भारताधिनिवेशस्य स्थाने भारतसङ्घः अवगम्येत; तथा च

(ख) काश्चित् विधिकार्यप्रवृत्तयः लम्बिताः स्युः यत्र कोपि प्रान्तः, किमपि देशीयराज्यं वा एकः पक्षः विद्यते तर्हि, तासु कार्यप्रवृत्तिषु तस्य प्रान्तस्य तस्य देशीयराज्यस्य वा स्थाने तत् स्थानीयं राज्य अवगम्येत ।

## [1][अध्यायः ४—सम्पत्तेः अधिकारः

**विधेः प्राधिकारं विना न जनानां सम्पत्त्या वियोजनम् ।**

३००अ. कोपि जनः विधेः प्राधिकारेण एव स्वसम्पत्त्या वियोजनीयः, नान्यथा ।]

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य, ३४-अनुभागेन एषः अध्यायः अन्तर्वेशितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

भाग: १३

# भारतराज्यक्षेत्रस्य अभ्यन्तरे व्यापारः, वाणिज्यं, समागमश्च

**व्यापारस्य, वाणिज्यस्य, समागमस्य च स्वतन्त्रता।**

३०१. अस्य भागस्य अन्येषां उपबन्धानां अधीनं, भारतराज्यक्षेत्रे व्यापारः, वाणिज्यं, समागमश्च निर्बाधं प्रवर्तेरन्।

**व्यापार-वाणिज्य-समागमेषु निर्बन्धनाधिरोपणार्थं संसदः शक्तिः।**

३०२. संसद् विधिना कस्यापि राज्यस्य अन्यराज्यस्य च मध्ये भारतराज्यक्षेत्रस्य कस्यापि भागस्य अभ्यन्तरे वा व्यापारस्य, वाणिज्यस्य समागस्य वा स्वतन्त्रतायां तादृशानि निर्बन्धनानि अधिरोपयितुं क्षमते यादृशानि लोकहिताय अपेक्षितानि भवेयुः।

**व्यापार-वाणिज्य-विषये सङ्घस्य, राज्यानां च विधायिनीषु शक्तिषु निर्बन्धनानि।**

३०३. (१) ३०२-तमानुच्छेदे किमपि सत्यपि, सप्तमानुसूच्याः कस्यामपिसूच्यां व्यापारवाणिज्यसम्बन्धिन्याः कस्याः अपि प्रविष्टेः आधारेण न हि संसदः न च कस्यापि राज्यस्य विधानमण्डलस्य, कस्यापि तादृशस्य विधेः निर्माणस्य शक्तिः भवेत्, यः एकस्मै राज्याय इतरराज्यापेक्षया अधिमानं ददाति, तद् दानं वा प्राधिकृतं करोति, अथवा द्वयोः राज्ययोः मध्ये विभेदं करोति, तत्करणं वा प्राधिकृतं करोति।

(२) (१) खण्डगतं किमपि संसदं कमपि अधिमानं ददतः, तद् दानं वा प्राधिकृतीकुर्वतः, अथवा कमपि विभेदं कुर्वतः, तत्करणं वा प्राधिकृतीकुर्वतः कस्यापि विधेः निर्माणात् न वारयेत् यदि चेत् तादृशेन विधिना एतद् घोष्यते यद् भारतराज्यक्षेत्रस्य कस्मिन् अपि भागे भाण्डानां दुर्लभतावशात् उत्पन्नायाः स्थितेः प्रतीकारार्थं एवं करणं आवश्यकं वर्तते।

**राज्यानां पारस्परिकेषु व्यापार-वाणिज्य - समागमेषु निर्बन्धनानि।**

३०४. ३०१-तमानुच्छेदे, ३०३-तमानुच्छेदे वा किमपि सत्यपि, कस्यापि राज्यस्य विधानमण्डलं विधिना—

(क) राज्यान्तरेभ्यः आयातेषु भाण्डेषु कमपि एतादृशं करं अधिरोपयितुं क्षमते यः तस्मिन् राज्ये [1][सङ्घराज्यक्षेत्रे वा] निर्मितेषु, उत्पादितेषु वा तादृशेषु भाण्डेषु आरोप्यते, किन्तु एवं प्रकारेण यथा एवं आयातानां भाण्डानां एवं निर्मितानां, उत्पादितानां वा भाण्डानां च मध्ये विभेदः न भवति; तथा

(ख) तेन राज्येन साकं तद् अभ्यन्तरे वा व्यापारवाणिज्यसमागमानां स्वतन्त्रतायां तादृशानि युक्तियुक्तानि निर्बन्धनानि अधिरोपयितुं क्षमते यादृशानि लोकहितार्थं अपेक्ष्येरन्—

परन्तु (ख) खण्डस्य प्रयोजनार्थं किमपि विधेयकं, संशोधनं वा राष्ट्रपतेः पूर्वस्वीकृतिं विना कस्यापि राज्यस्य विधानमण्डले पुरः स्थापितं, प्रस्तावितं वा न भवेत्।

**विद्यमानविधीनां, राज्यस्य एकाधिकारितां उपबन्धयतां विधीनां च व्यावृत्तिः।**

[2][३०५. ३०२-तमानुच्छेदगतं, ३०३-तमानुच्छेदगतं च किमपि कस्यापि विद्यमानस्य विधेः उपबन्धान् तावत् न प्रभावयेत् यावत् राष्ट्रपतिः आदेशेन अन्यथा वा निदेशं न करोति तथा च ३०२-तमानुच्छेदेगतं किमपि संविधानस्य (चतुर्थं संशोधनं) अधिनियमः, १९५५, इत्यस्य प्रारम्भात् पूर्वं अधिनियमितस्य कस्यापि विधेः प्रवर्तनं तावत् न प्रभावयेत्, न वा संसदं कस्यापि राज्यस्य विधानमण्डलं वा तादृशस्य विधेः प्रणयनात् वारयेत् यावत् सः विधिः १९-तमानुच्छेदस्य (६) खण्डस्य (द्वितीये) उपखण्डे निर्दिष्टं कमपि विषयं विषयीकरोति।]

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च एतौ शब्दौ अन्तर्वेशितौ।

२. संविधानस्य (चतुर्थं संशोधनं) अधिनियमः, १९५५ इत्यस्य ४-अनुभागेन ३०५-तमानुच्छेदात् प्रति एषः अनुच्छेदः संनिवेशितः।

३०६. [वाणिज्ये, व्यापारे च निर्बन्धनानि अधिरोपयितुं प्रथमानुसूच्याः ख-भागे निर्दिष्टानां केषांचित् राज्यानां शक्तिः] संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च निरसितः ।

**३०१-तमात् आरम्य ३०४-तमपर्यन्तानां अनुच्छेदानां प्रयोजनानि कार्यान्वितानि विधातुं प्राधिकारिणः नियुक्तिः ।**

३०७. संसद् विधिना तादृशस्य प्राधिकारिणः नियुक्तिं कर्तुं क्षमते यादृशं सा ३०१, ३०२, ३०३, ३०४-तमानुच्छेदानां प्रयोजनानि कार्यान्वितानि विधातुं समुचितं मन्यते तथा एवं नियुक्ताय प्राधिकारिणे तादृशीः शक्तीः तादृशानि कर्तव्यानि च समर्पयितुं क्षमते यादृशानि सा आवश्यकानि मन्यते ।

भागः १४

# सङ्घस्य राज्यानां च अधीनाः सेवाः

## अध्यायः १—सेवाः

**निर्वचनम् ।**

३०८. अस्मिन् भागे प्रसङ्गेन अन्यथा अपेक्षितं न भवति चेत् "राज्यं" इति शब्दः [1][जम्मू-कश्मीर राज्यं न अन्तर्भावयति] ।

**सङ्घस्य, राजस्य वा सेवां कुर्वतां जनानां नियोजनं, सेवायाः प्रतिबन्धाश्च ।**

३०९. एतत् संविधानस्य उपबन्धानां अधीनं, समुचितविधानमण्डलस्य अधिनियमाः सङ्घस्य वा कस्यचित् अपि राज्यस्य वा कार्यैः सम्बद्धानां लोकसेवानां पदानां च कृते नियोजनस्य, नियुक्तजनानां सेवायाः प्रतिबन्धानां च विनियमनं कर्तुं क्षमन्ते —

परन्तु यावद् एतदनुच्छेदस्य अधीनं, समुचितविधानमण्डलस्य अधिनियमेन, तदधीनं वा तदर्थं उपबन्धः न क्रियते, तावत् यथायथं सङ्घस्य कार्ये सम्बद्धानां सेवानां पदानां च विषये राष्ट्रपतिः, सः जनः वा यं सः निदिशेत्, तथा कस्यापि राज्यस्य कार्यैः सम्बद्धानां सेवानां पदानां च विषये तद्राज्यस्य राज्यपालः, [2][ * * * ] सजनः वा यं सः निदिशेत्, तादृशीनां सेवानां, तादृशानां पदानां च कृते नियोजनस्य, नियुक्तजनानां सेवायाः प्रतिबन्धानां च विनियामकनियमानां निर्माणे क्षमः भवेत्; तथा च एवं निर्मिताः केपि नियमाः कस्यापि तादृशस्य अधिनियमस्य उपबन्धानां अधीनं प्रभाविनः भवेयुः ।

**सङ्घं, किमपि राज्यं वा सेवयतां जनानां पदावधिः ।**

३१०. (१) एतेन संविधानेन स्पष्टतया उपबन्धितं अस्ति तद् विहाय, प्रत्येकं जनः यः सङ्घस्य रक्षा-सेवायाः वा, असैनिकसेवायाः वा, अखिलभारतीय सेवायाः वा सदस्यः वर्तते अथवा सङ्घस्य अधीनं, रक्षया सम्बद्धं किमपि पदं, किमपि असैनिकपदं वा धारयते, सः राष्ट्रपतेः प्रसादपर्यन्तं पदं धारयते; तथा च प्रत्येकं जनः यः कस्यापि राज्यस्य असैनिकसेवायाः सदस्यः वर्तते, कस्यापि राज्यस्य अधीनं किमपि असैनिकपदं वा धारयते सः तद्राज्यस्य राज्यपालस्य [3][ * * * ] प्रसादपर्यन्तं पदं धारयते ।

(२) सङ्घस्य, कस्यापि राज्यस्य वा अधीनं असैनिकपदं धारयमाणः कोपि जनः यथायथं राष्ट्रपतेः अथवा तद्राज्यस्य राज्यपालस्य [3][ * * * ] वा प्रसादपर्यन्तं पदं धारयते इति एवं सत्यपि, कापि संविद् यस्याः अधीनं कोपि जनः यः रक्षा सेवायाः वा अखिलभारतीयसेवायाः अथवा, सङ्घस्य कस्यापि राज्यस्य वा असैनिकसेवायाः वा सदस्यः न वर्तते, कस्यापि तादृशस्य पदस्य धारणार्थं एतत् संविधानस्य अधीनं नियुक्तः भवति, इमं उपबन्धं कर्तुं क्षमते यद् यथायथं राष्ट्रपतिः राज्यपालः वा [2][ * * * ] विशेषार्हतावतः जनस्य सेवानां प्राप्त्यै एतद् आवश्यकं मन्यते, तर्हि समयगतस्य कालावधेः समाप्तेः प्राक् तस्य पदस्य समाप्तिः क्रियते चेत्, अथवा तेन कृतेन केनापि दुराचारेण असम्बद्धैः कारणैः तत्पदं तेन रिक्तीकरणीयं इति अपेक्ष्यते चेत्, तस्मै प्रतिकरः प्रदातव्यः भवेत् ।

**सङ्घस्य, कस्यापि राज्यस्य वा अधीनं असैनिकरूपेण नियुक्तानां**

३११. (१) कोपि जनः, यः सङ्घस्य असैनिक सेवायाः अखिलभारतीयसेवायाः वा, कस्यापि राजस्य असैनिकसेवायाः वा सदस्यः वर्तते, अथवा सङ्घस्य कस्यापि राज्यस्य वा अधीनं असैनिकं पदं धारयते, सः स्वनियोजकस्य प्राधिकारिणः अधीनेन प्राधिकारिणा पदात् च्युतः, पदात् अपसारितः वा न क्रियेत ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः (क) भागे, (ख) भागे वा उल्लिखितं किमपि राज्यं अभिप्रेयते" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखोः वा" इत्येतौ शब्दौ लोपितौ ।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखस्य वा" इत्येतौ शब्दौ लोपितौ ।

**जनानां पदात् च्युतिः, पदात् अपसारणं, पदपङ्क्तौ अवनमनं वा ।**

[1][(२) उपर्युक्तप्रकारकः कोपि जनः तादृशाद् अन्वेषणात् परं एव यस्मिन् तस्य विरुद्धं कृताः आरोपाः तस्मै सूचिताः भवेयुः, तथा एतेषां आरोपाणां सम्बन्धे श्रवणाय तस्मै यथायोग्यः अवसरः प्रदत्तः भवेत् पदात् च्युतः, पदात् अपसारितः पदपङ्क्तौ अवनतः वा भवेत्, नान्यथा [2][ * * * ]—

[3][परन्तु यत्र एतादृशात् अन्वेषणात् परं तस्मै एतादृशीं शास्तिं अधिरोपयितुं प्रस्थापना भवति तत्र एतादृशी शास्तिः अन्वेषणाभ्यन्तरे दत्तसाक्ष्यस्य आधारेण एव अधिरोपिता भवेत् तथा च तस्मै एतादृश्याः शास्तेः अधिरोपणस्य विषये अभ्यावेदनं कर्तुं अवसरदानस्य आवश्यकता न भवेत् ।

अपरं च एषः खण्डः तत्र प्रवृत्तः न भवेत्—]

(क) यत्र कोपि जनः तादृशस्य आचरणस्य आधारेण, यद् आचरणं आपराधिके आरोपे सिद्धदोषत्वेन परिणतं अस्ति, पदच्युतः, पदात् अपसारितः, पदपङ्क्तौ अवनतः वा भवति; अथवा

(ख) यत्र कस्यापि जनस्य पदच्युतिकरणस्य, पदात् अपसारणकरणस्य, पदपङ्क्तौ अवनतिकरणस्य विषये शक्तिमान् प्राधिकारी समाहितः भवति यत् कस्माद् अपि कारणात्, यत् तेन लेखबद्धरूपेण अभिलेख्यः भवेत्, युक्तियुक्तरूपेण एतादृशं अन्वेषणं साध्यं नास्ति;

(ग) यत्र यथायथं राष्ट्रपतिः राज्यपालः वा समाहितः भवति यत् राज्यसुरक्षाहितार्थं तादृशस्य अन्वेषणस्य करणं समीचीनं नास्ति ।

(३) यदि उपर्युक्तप्रकारस्य कस्यचित् पदस्य विषये, (२) खण्डे निर्दिष्टस्य अन्वेषणस्य करणं युक्तियुक्तरूपेण साध्यं अस्ति न वा इति प्रश्नः उत्पद्यते, तर्हि तं जनं यथायथं पदच्युतं कर्तुं, पदात् अपसारितं कर्तुं, पदपङ्क्तौ अवनतं वा कर्तुं शक्तिमतः प्राधिकारिणः विनिश्चयः तत्र अन्तिमः भवेत् ।]

**अखिलभारतीयाः सेवाः ।**

३१२. (१) [4][षष्ठभागस्य षष्ठाध्याये, एकादशभागे वा] किमपि सत्यपि, यदि राज्यसभा उपस्थितानां मतदातॄणां च सदस्यानां तृतीयांशद्वयात् अन्यूनसङ्ख्यया समर्थितेन सङ्कल्पेन राष्ट्रहिताय एवं करणं आवश्यकं प्रसङ्गोचितं वा विद्यते इति घोषितं करोति तर्हि संसद् विधिना सङ्घस्य च राज्यानां च कृते साधारण्याः एकस्याः अखिलभारतीयसेवायाः वा [5][अखिलभारतीयन्यायिकसेवां अन्तर्भावयतीनां] अधिकानां सेवानां सर्जनार्थं उपबन्धं कर्तुं क्षमते; तथा च एतदध्यायस्य अन्योपबन्धानां अधीनं कस्यैचिद् अपि एतादृश सेवायै नियोजनस्य, नियुक्तजनानां सेवायाः प्रतिबन्धानां च विनियमनं कर्तुं क्षमते ।

(२) एतस्य संविधानस्य प्रारम्भे "भारतीय प्रशासनिक सेवा" "भारतीयारक्षिसेवा" च इत्येवं ज्ञाते सेवे एतदनुच्छेदस्य अधीनं संसदा सृष्टे सेवे मन्येयाताम् ।

---

१. संविधानस्य (पञ्चदशं संशोधनं) अधिनियमः, १९६३ इत्यस्य १०-अनुभागेन (२) खण्डात् प्रति (३) खण्डात् प्रति च एतौ खण्डौ संनिवेशितौ ।

२. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४४-अनुभागेन केचित् शब्दाः लोपिताः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन केभ्यश्चित् शब्देभ्यः प्रति एतत् संनिवेशितम् (३-१-१९७७ दिनाङ्कात् प्रवर्तनप्रभावेण) ।

४. उपर्युक्ताधिनियमस्य ४५-अनुभागेन "एकादशभागगतं" इत्येतस्मात् प्रति एते शब्दाः संनिवेशिताः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेणः) ।

५. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन एते शब्दाः अन्तर्वेशिताः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

[1][(३) (१) खण्डे निर्दिष्टा अखिलभारतीयन्यायिकसेवा, २३६-तमानुच्छेदे परिभाषितस्य मण्डलन्यायाधीशस्य पदात् अवरं कमपि पदं न अन्तर्भावयेत्।

(४) उपर्युक्ताखिलभारतीयन्यायिकसेवायाः सर्जनार्थं उपबन्धं कुर्वन् कोपि विधिः षष्ठभागस्य षष्ठाध्यायस्य संशोधनाय एतादृशान् उपबन्धान् अन्तर्भावयितुं क्षमते ये एतादृशस्य विधेः उपबन्धान् कार्यान्वितान् कर्तुं आवश्यकाः भवेयुः; तथा च एतादृशः कोपि विधिः ३६८-तमानुच्छेदस्य प्रयोजनानां अर्थे एतत् संविधानस्य संशोधनं अस्ति इति न मन्येत।]

[2][३१२अ. (१) संसद् विधिना—

**कासुचित् सेवासु पदधारिणां सेवाप्रतिबन्धानां परिवर्तनाय प्रतिसंहरणाय वा संसदः शक्तिः।**

(क) ये जनाः "सेक्रेटरी ऑफ स्टेट" इत्याख्येन, "सेक्रेटरी ऑफ स्टेट इन् कौंसिल" इत्याख्येन वा, प्राधिकारिणा एतत्संविधानस्य प्रारम्भात् पूर्वं भारते सम्राजः कस्यामपि असैनिकसेवायां नियुक्ताः, तथा च संविधानस्य (अष्टाविंशतितमं संशोधनं) अधिनियमः, १९७२ इत्यस्य प्रारम्भे ततः परं च भारत प्रशासनस्य वा कस्यचिदपि राज्यस्य प्रशासनस्य वा अधीनं कस्यामपि सेवायां, कस्मिंश्चिदपि पदे वा सेवां कर्तुं अनुवर्तन्ते तेषां पारिश्रमिकस्य अनुमतानुपस्थितेः, निवृत्तिवेतनस्य वा विषयकानां सेवा प्रतिबन्धानां तथा अनुशासनिकैः विषयैः सम्बद्धानां अधिकाराणां भविष्यलक्षिरूपेण, भूतलक्षिरूपेण वा परिवर्तनं कर्तुं क्षमते तथा च तान् प्रतिसंहर्तुमपि क्षमते।

(ख) "सेक्रेटरी ऑफ स्टेट्" इत्याख्येन "सेक्रेटरी ऑफ स्टे्ट इन् कौंसिल" इत्याख्येन वा प्राधिकारिणा भारते सम्राजः सेवायां अस्य संविधानस्य प्रारम्भात् पूर्वं नियुक्तानां, संविधानस्य (अष्टाविंशतितमं संशोधनं) अधिनियमः, १९७२ इत्यस्य प्रारम्भात् पूर्वं कस्मिन् अपि काले सेवातः निवृत्तानां अथवा अन्यथा विरतानां जनानां निवृत्तिविषयकप्रतिबन्धानां भविष्यलक्षिरूपेण, भूतलक्षिरूपेण वा परिवर्तनं कर्तुं तान् प्रतिसंहर्तुं वा क्षमते—

परन्तु यः उच्चतमन्यायालस्य वा कस्यापि उच्चन्यायालयस्य वा मुख्यन्यायमूर्तेः अन्यन्यायाधीशस्य वा, भारतस्य नियन्त्रकमहालेखापरीक्षकस्य, सङ्घस्य वा कस्यापि राज्यस्य वा सेवायोगस्य अध्यक्षस्य, अन्यसदस्यस्य वा, मुख्यनिर्वाचनायुक्तस्य वा पदं धारयति, धारितवान् वा, तादृशस्य कस्यापि जनस्य सम्बन्धे (क) उपखण्डगतं (ख) उपखण्डगतं वा किमपि तस्य नियुक्तेः प्रतिबन्धानां तस्मै अलाभकरं स्यात् तथा परिवर्तनं कर्तुं अथवा तान् प्रतिबन्धान् प्रतिसंहर्तुं शक्तिप्रदानं करोति इति अर्थः न क्रियेत, यावत् तादृशाः सेवाप्रतिबन्धाः सः भारत सम्राजः असैनिकसेवायां "सेक्रेटरी ऑफ स्टेट्" इत्याख्येन "सेक्रेटरी आफ स्टेट् इन् कौंसिल" इत्याख्येन वा प्राधिकारिणा नियुक्तः भवति इति कारणेन तं प्रभावयन्ति—तद्विहाय।

(२) एतदनुच्छेदस्य अधीनं संसदा विधिना यावत् उपबन्धितं स्यात् तद्विहाय एतदनुच्छेदगतं किमपि, एतत्-संविधानस्य अन्योपबन्धानां अधीनं (२) खण्डे निर्दिष्टानां जनानां नियुक्तेः, प्रतिबन्धानां विनियमनाय कस्यापि विधानमण्डलस्य अथवा अन्यस्य प्राधिकारिणः शक्तिं न प्रभावयेत्।

(३) न उच्चतमन्यायालयः न वा अन्यः कोपि न्यायालयः निम्ननिर्दिष्टविवादानां विषये अधिकारितां भजेत, तद् यथा—

(क) (१) खण्डे निर्दिष्टेन केनापि जनेन कृतायाः, निष्पादितायाः वा प्रसंविदायाः, अथवा तेन कृतस्य, निष्पादितस्य वा समयस्य वा तद्रूपस्य अन्यस्य लेखपत्रस्य कस्मात् अपि उपबन्धात्, पृष्ठाङ्कनात् वा, अथवा

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४५-अनुभागेन एतौ खण्डौ अन्तर्वेशितौ: (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. संविधानस्य (अष्टाविंशतितमं संशोधनं) अधिनियमः, १९७२ इत्यस्य २-अनुभागेन अन्तर्वेशितः (२९-८-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

तादृशस्य जनस्य भारते सम्राजः कस्यामपि असैनिकसेवायां नियुक्तिसम्बन्धे, अथवा भारताधिनिवेशस्य तस्य प्रान्तस्य वा अधीनसेवायां (तस्य जनस्य) अनुवर्तनसम्बन्धे तस्मै प्रचालितपत्रात् उद्भवन् विवादः;

(ख) मूलतः यथाधिनियमितस्य ३१४-तमानुच्छेदस्य अनुरोधानुसारं उद्भवतः अधिकारस्य, दायित्वस्य, बाध्यतायाः वा सम्बद्धो विवादः।

(४) मूलतः यथाधिनियमिते ३१४-तमानुच्छेदे अथवा एतत्-संविधानस्य अन्येषु उपबन्धेषु किमपि सत्यपि एतदनुच्छेदस्य उपबन्धाः प्रभाविनः भवेयुः।]

**सङ्क्रमणकालिकोपबन्धाः।**

**३१३.** यावत् एतत् संविधानस्य अधीनं अन्यः उपबन्धः एतदर्थं प्रणीतः न भवति तावत् एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं प्रवृत्ताः, तथा एतत्संविधानस्य प्रारम्भात् परं अखिलभारतीयसेवायाः अथवा सङ्घस्य, राज्यस्य वा अधीन सेवायाः, अधीनपदस्य रूपेण वा स्थितिं अनुवर्तमानां कामपि लोकसेवां अनुवर्तमानं किमपि पदं वा विषयीकुर्वतः सर्वे विधयः, तावत् प्रवृत्तत्वेन अनुवर्तेरन् यावत् ते अस्य संविधानस्य उपबन्धैः सङ्गताः भवेयुः।

**३१४.** [कासांचित् सेवानां वर्तमान पदाधिकारिणां संरक्षणार्थं उपबन्ध।] संविधानस्य (अष्टाविंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य ३-अनुभागेन निरसितः (२९-८-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

## अध्याय : २—लोकसेवायोगाः

**सङ्घार्थं, राज्यार्थं च लोकसेवायोगाः।**

३१५. (१) एतदनुच्छेदस्य उपबन्धानां अधीनं सङ्घार्थं एकः लोकसेवायोगः, प्रत्येकराज्यार्थं च एकः लोकसेवायोगः भवेत्।

(२) द्वे राज्ये, अधिकानि वा राज्यानि समयं कर्तुं क्षमन्ते यत् तद्राज्यवर्गार्थं एकः लोकसेवायोगः भवेत् तथा यदि तदुद्देश्येन सङ्कल्पः तयोः राज्ययोः तेषां राज्यानां वा प्रत्येकस्य विधानमण्डलसदनेन अथवा यत्र द्वे सदने वर्तेते तत्र विधानमण्डलस्य प्रत्येकसदनेन पारितः भवति तर्हि संसद् तयोः राज्ययोः तेषां राज्यानां वा आवश्यकतानां पूर्त्यै संयुक्तराज्यलोकसेवायोगस्य (अस्मिन् अध्याये यः संयुक्तायोगः इत्येवं निर्दिश्यते) नियुक्तिं कर्तुं क्षमते।

(३) उपर्युक्तविधौ तादृशाः प्रासङ्गिकाः आनुषङ्गिकाश्च उपबन्धाः अन्तर्निविष्टाः भवितुं अर्हन्ति यादृशाः तस्य विधेः प्रयोजनान् प्रभावीकर्तुं आवश्यकाः वाञ्छनीयाः वा भवेयुः।

(४) कस्यापि राज्यस्य राज्यपालेन [1][ * * * ] एवं कर्तुं प्रार्थितश्चेत् सङ्घस्य लोकसेवायोगः राष्ट्रपतेः अनुमोदनेन तस्य राज्यस्य सर्वासां, कासांचित् वा आवश्यकतानां पूर्त्यै कार्यकरणं स्वीकर्तुं क्षमते।

(५) अस्मिन् संविधाने सङ्घलोकसेवायोगं राज्यलोकसेवायोगं प्रति वा निर्देशाः, प्रसङ्गेन अन्यथा अपेक्षितं चेत् न भवति, प्रकृतस्य विशेषविषयस्य सम्बन्धेन यथायथं सङ्घस्य राज्यस्य वा आवश्यकतानां पूर्तिकरं आयोगं प्रति निर्देशाः इति अर्थः ग्राह्यः।

**सदस्यानां नियुक्तिः, पदावधिश्च।**

३१६. (१) लोकसेवायोगस्य अध्यक्षस्य अन्येषां सदस्यानां च नियुक्तिः, स चेत् सङ्घायोगः संयुक्तयोगः वा भवति राष्ट्रपतिना, तथा च स चेत् राज्यायोगः भवति, राज्यस्य राज्यपालेन [1][ * * * ] क्रियेत—

परन्तु प्रत्येकलोकसेवायोगस्य यथासम्भवं उपार्धं सदस्याः ते जनाः भवेयुः ये स्वस्वनियुक्तिदिनाङ्के भारतशासनस्य कस्यचिद् राज्यशासनस्य वा अधीनं न्यूनात् न्यूनं दशवर्षपर्यन्तं पदधारणं कृतवन्तः भवेयुः, तथा दशवर्षाणां उक्तकालावधेः सङ्गणनायां स कालावधिः अपि सम्मिलितः भवेत् यस्मिन् एतत्संविधानस्य प्रारम्भात् पूर्वं केनापि जनेन भारतस्य सम्राजः अधीनं कस्यापि देशीयराज्यस्य वा अधीनं पदधारणं कृतं अभूत्।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखेन वा" इत्येतौ शब्दौ लोपितौ।

[1][(१अ) यदि आयोगस्य अध्यक्षस्य पदं रिक्तं भवति, अथवा यदि एतादृशः अध्यक्षः स्वस्य अनुपस्थितेः कारणेन, अन्यकारणेन वा स्वपदस्य कर्तव्यानां पालने असमर्थः भवति तर्हि यथायथं यावत् रिक्तपदे प्रथमखण्डाधीनं नियुक्तः कोपि जनः स्वकर्तव्यस्य ग्रहणं न करोति, अथवा यावत् अध्यक्षः स्वपदकर्तव्यानां पुनः ग्रहणं न करोति तावत् आयोगस्य अन्यसदस्येभ्यः एकः सदस्यः यं, यदि स आयोगः सङ्घायोगः संयुक्तायोगः वा भवति तर्हि राष्ट्रपतिः, अथवा यदि सः राज्यायोगः भवति तर्हि तद्राज्यस्य राज्यपालः एतदर्थं नियुङ्क्ते, तेषां कर्तव्यानां पालनं कुर्यात् ।]

(२) लोकसेवायोगस्य सदस्यः स्वपदग्रहणदिनाङ्कात् आरभ्य षड्वर्षावधिं यावत् अथवा यदि सः सङ्घायोगः तर्हि पञ्चषष्टिवर्षवयसः प्राप्तिं यावत्, तथा यदि सः राज्यायोगः संयुक्तायोगः वा भवति तर्हि [2][द्विषष्टिवर्षवयसः] प्राप्तिं यावत्, यदपि एनयोः पूर्वतरं भवति, पदधारणं कुर्यात्—

परन्तु—

(क) लोकसेवायोगस्य कोपि सदस्यः यदि सः सङ्घायोगः, संयुक्तायोगः वा भवति तर्हि राष्ट्रपतिं, तथा च यदि सः राज्यायोगः भवति तर्हि राज्यस्य राज्यपालं [3][ * * * ] सम्बोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन पदं त्यक्तुं क्षमते;

(ख) लोकसेवायोगस्य कोपि सदस्यः स्वपदात् ३१७-तमानुच्छेदस्य (१) खण्डे, (३) खण्डे वा उपबन्धितया रीत्या अपसारणं अर्हति ।

(३) कोपि जनः यः लोकसेवायोगस्य सदस्यत्वेन पदधारणं करोति, स्वपदावधेः समाप्तौ तस्मिन् पदे पुनर्नियुक्तेः अपात्रं भवेत् ।

**लोकसेवायोगस्य कस्यापि सदस्यस्य अपसारणं, निलम्बनं वा ।**

३१७. (१) (३) खण्डस्य उपबन्धानां अधीनं, लोकसेवायोगस्य अध्यक्षः, कश्चिद् अन्यः सदस्यः वा स्वपदात् केवलं दुराचारस्य आधारेण राष्ट्रपतेः आदेशेन, उच्चन्यायालयेन तं प्रति राष्ट्रपतिना पृच्छायां कृतायां, १४५-तमानुच्छेदस्य अनुरोधेन तदर्थं विहितप्रक्रियानुसारेण परिप्रश्नस्य अनन्तरं, यथायथं सः अध्यक्षः एतादृशः अन्यः सदस्यः वा केनापि एतादृशेन आधारेण पदात् अपसारितव्यः इति एवं कृतस्य प्रतिवेदनस्य पश्चात्, अपसारितः क्रियेत ।

(२) सङ्घायोगविषये, संयुक्तायोगविषये वा राष्ट्रपतिः, राज्यायोगविषये राज्यपालः [4][ * * * ] आयोगस्य अध्यक्षं अन्यं कंचित् सदस्यं वा तस्मिन् विषये (१) खण्डस्य अनुरोधेन उच्चन्यायालयं प्रति पृच्छा कृता विद्यते, पदात् तावत् निलम्बितुं क्षमते यावद् राष्ट्रपतेः एतादृशपृच्छायां उच्चतमन्यायालयस्य प्रतिवेदनस्य प्राप्तेः अनन्तरं आदेशं न ददाति ।

(३) (१) खण्डे किमपि सत्यपि यथायथं लोकसेवायोगस्य अध्यक्षः अन्यः कश्चित् सदस्यः वा यदि—

(क) ऋणशोधनाशक्तः इति न्यायालयेन निर्णीयते; अथवा

(ख) स्वपदावधौ स्वपदकर्तव्येभ्यः बहिः कामपि वैतनिकीं नियोजनां धारयते; अथवा

(ग) राष्ट्रपतेः मतौ मानसस्य, शरीरस्य वा दौर्बल्यस्य हेतोः स्वपदे अनुवर्तनाय अयोग्यः भवति,

तर्हि, राष्ट्रपतिः तं अध्यक्षं एतादृशं अन्यं सदस्यं वा आदेशेन स्वपदात् अपसारितं कर्तुं क्षमते ।

---

१. संविधानस्य (पञ्चदशं संशोधनं) अधिनियमः १९६३ इत्यस्य ११-अनुभागेन अन्तर्वेशितः ।

२. संविधानस्य (एकचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २-अनुभागेन "षष्टिवर्षवयसः वा" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

३. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखों" इति शब्दौ लोपितौ ।

४. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या "राजप्रमुखं च वा" इति शब्दौ लोपितौ ।

(४) यदि लोकसेवायोगस्य अध्यक्षः, अन्यः वा कश्चित् सदस्यः भारतशासनेन, कस्यापि राज्यस्य शासनेन वा तत्प्रातिनिध्येन कृतायां संविदि, (कृते) समये वा, निगमितसमवायस्य, तस्य अन्य सदस्यैः सह सम्मिलितरूपं सदस्यत्वं स्यात् तदन्तरेण केनापि प्रकारेण सम्पृक्तः हितसम्बद्धः वा वर्तते, जायते वा, अथवा केनापि प्रकारेण ततः लाभे, तस्माद् उत्पन्ने हिते, उपलब्धौ वा भागग्रहणं करोति, तर्हि सः (१) खण्डस्य प्रयोजनानां अर्थे कदाचारापराधी इति मन्येत ।

आयोगस्य सदस्यानां कर्मचारिवृन्दस्य च सेवायाः प्रतिबन्धानां विषये विनियमनिर्माणस्य शक्तिः ।

३१८. सङ्घायोगस्य, संयुक्तायोगस्य वा विषये राष्ट्रपतिः, राज्यायोगस्य विषये तद्राज्यस्य राज्यपालः [1][ * * * ] वा विनियमैः —

(क) आयोगस्य सदस्यानां सङ्ख्यां तथा तत्सेवायाः प्रतिबन्धान् अवधारयितुं; तथा

(ख) आयोगस्य कर्मचारिवृन्दस्य सदस्यानां सङ्ख्यायाः तथा तत्सेवायाः प्रतिबन्धानां सम्बन्धे उपबन्धान् प्रणेतुं,

क्षमते —

परन्तु कस्यापि लोकसेवायोगसदस्यस्य सेवाप्रतिबन्धेषु तस्य नियुक्तेः परं तदर्थं लाभस्य न्यूनीकारिपरिवर्तनं न क्रियेत ।

आयोगस्य सदस्यानां एतादृशसदस्यत्वस्य अवसाने पदधारणसम्बन्धे प्रतिषेधः ।

३१९. पदधारणस्य अवसाने—

(क) सङ्घलोकसेवायोगस्य अध्यक्षः भारतशासनस्य कस्यापि राज्यस्य शासनस्य वा अधीनं कस्याः अपि अन्यस्याः नियोजनायाः अपात्रं भवेत्;

(ख) कस्यापि राज्यस्य लोकसेवायोगस्य अध्यक्षः सङ्घलोकसेवायोगस्य अध्यक्षत्वेन अन्यसदस्यत्वेन वा अन्यथा कस्यापि अन्यस्य राज्यस्य लोकसेवायोगस्य अध्यक्षत्वेन वा नियुक्तेः पात्रं भवेत्, किन्तु भारतशासनस्य कस्यचिद् राज्यस्य शासनस्य वा अधीनं कस्याः अपि अन्यस्याः नियोजनायाः पात्रं न भवेत्;

(ग) सङ्घलोकसेवायोगस्य अध्यक्षं व्यतिरिच्य कोपि अन्यः सदस्यः सङ्घलोकसेवायोगस्य अध्यक्षत्वेन अथवा राज्यलोकसेवायोगस्य अध्यक्षत्वेन नियुक्तेः पात्रं भवेत्; किन्तु भारतशासनस्य, कस्यापि राज्यस्य शासनस्य वा अधीनं कस्याः अपि अन्यस्याः नियोजनायाः पात्रं न भवेत्;

(घ) कस्यापि राज्यस्य लोकसेवायोगस्य अध्यक्षं व्यतिरिच्य कोपि अन्यः सदस्यः सङ्घलोकसेवायोगस्य अध्यक्षत्वेन, अन्यसदस्यत्वेन वा, अथवा तस्य एव, अन्यस्य वा राज्यलोकसेवायोगस्य अध्यक्षत्वेन नियुक्तेः पात्रं भवेत् किन्तु भारतशासनस्य, कस्यापि राज्यस्य शासनस्य वा अधीनं कस्याः अपि अन्यस्याः नियोजनायाः पात्रं न भवेत् ।

लोकसेवायोगानां कृत्यानि ।

३२०. (१) सङ्घस्य सेवासु राज्यस्य सेवासु च नियुक्तीनां प्रयोजनाय परीक्षाणां सञ्चालनं क्रमशः सङ्घस्य, राज्यस्य च लोकसेवायोगस्य कर्तव्यं भवेत् ।

(२) काभ्यां अपि द्वाभ्यां राज्याभ्यां अधिकैः वा राज्यैः एवं करणाय प्रार्थितश्चेत्, सङ्घलोकसेवायोगस्य एतद् अपि कर्तव्यं भवेत् यत् सः कासांचित् सेवानां कृते, यदर्थं विशेषार्हतावन्तः अभ्यर्थिनः अपेक्ष्यन्ते, संयुक्तनियोजन-योजनानां निर्माणे प्रवर्तने च तयोः राज्ययोः तेषां राज्यानां वा साहाय्यं कुर्यात् ।

(३) यथायथं सङ्घलोकसेवायोगेन राज्यलोकसेवायोगेन वा साकं—

(क) असैनिकसेवासु तथा असैनिकपदानां प्रयोजनेन नियोजनस्य रीतिभिः सम्बद्धेषु समस्तविषयेषु;

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखोः वा" इत्येतौ शब्दौ लोपितौ ।

(ख) असैनिकसेवासु, असैनिकपदेषु च नियुक्तौ, तथा एकसेवातः अन्यस्यां सेवायां पदोन्नतौ स्थानान्तरणे च अनुस्रियमाणेषु सिद्धान्तेषु, तथा एतादृशीभ्यः नियुक्तिभ्यः पदोन्नतिभ्यः स्थानान्तरणेभ्यः वा अभ्यर्थिनां उपयुक्तताविषये;

(ग) भारतशासनस्य, कस्यापि राज्यस्य शासनस्य वा असैनिकरूपेण सेवां कुर्वन्तं जनं प्रभावयत्सु समस्तेषु अनुशासनविषयेषु येषु एतादृशविषयसम्बद्धानि अभ्यावेदनानि याचिकाः वा अन्तर्भूतानि,

(घ) स्वकर्तव्यपालने कृतानां, करणाय तात्पर्यितानां वा, कार्याणां सम्बन्धे तं प्रतिवादिनं कृत्वा प्रचालितासु विधिसम्बन्धिनीषु कार्यप्रवृत्तिषु स्वप्रतिरक्षार्थं तेन कृतः परिव्ययः यथायथं भारतसञ्चितनिधेः राज्यसञ्चितनिधेः वा दातव्यः इति, भारतशासनस्य, कस्यापि राज्यस्य शासनस्य वा अधीनं, भारतस्य सम्राजः वा अधीनं कस्यापि देशीयराज्यस्य शासनस्य वा अधीनं असैनिकरूपेण सेवां कुर्वता कृतवता वा जनेन कृतायां, तत्सम्बन्धे वा कृतायां अध्यर्थनायाम्;

(ङ) भारतशासनस्य कस्यापि राज्यस्य वा शासनस्य अधीनं भारतसम्राजः वा अधीनं, कस्यापि देशीयराज्यस्य शासनस्य वा अधीनं असैनिकरूपेण सेवां कुर्वता केनापि जनेन अधिगतायाः क्षतेः विषये निवृत्तिवेतनप्रदानार्थं तेन, तस्य सम्बन्धे वा कृतायां कस्यामपि अध्यर्थनायां तथा एतादृशप्रदानस्य कियान् राशिः भवेत् इवि प्रश्ने च,

परामर्शः क्रियेत, तथा एतस्मै एवं निर्दिष्टे कस्मिन् अपि अन्यस्मिन् विषये चापि यथायथं राष्ट्रपतिना तद्राज्यपालेन [1][ * * * ] निर्दिष्टे कस्मिन् अपि विषये परामर्शदानं लोकसेवायोगस्य कर्तव्यं भवेत्—

परन्तु अखिलभारतीयसेवानां विषये तथा सङ्घकार्यैः संसक्तानां अन्यसेवानां, पदानां च विषये, राष्ट्रपतिः तथा कस्यापि राज्यस्य कार्यैः संसक्तानां सेवानां पदानां च विषये [2][ * * * ] राज्यपालः [3][ * * * ] तान् विषयान् विनिर्दिशतः विनियमान् निर्मातुं क्षमते येषु साधारणतया, केनापिविशेषवर्गेण वा सम्बन्धे अर्थे, कासुचित् विशेषपरिस्थितिषु वा लोकसेवायोगेन सह परामर्शः आवश्यकः न भवेत्।

(४) (३) खण्डगतं किमपि, यया १६-तमानुच्छेदस्य (४) खण्डे निर्दिष्टः कोपि उपबन्धः निर्मितः भवेत् तस्याः रीतेः विषये, यया ३३५-तमानुच्छेदस्य उपबन्धाः प्रभाविनः भवितुं अर्हन्ति तस्या रीतेः विषये वा, लोकसेवायोगेन सह परामर्शं न अपेक्षेत।

(५) (३) खण्डस्य पारन्तुकस्य अधीनं, राष्ट्रपतिना अथवा कस्यापि राज्यस्य राज्यपालेन [1][ * * * ] निर्मिताः सर्वे विनियमाः तेषां निर्माणस्य पश्चात् यथासम्भवं शीघ्रं यथायथं संसदः प्रत्येकसदनस्य पुरतः अथवा तद्राज्यविधानमण्डलस्य सदनस्य प्रत्येकसदनस्य वा पुरतः, चतुर्दशभ्यः दिनेभ्यः अन्यूनकालं यावत् स्थाप्येरन्, तथा निरसनद्वारा, संशोधनद्वारा वा ते तादृशानां उपान्तरणानां अधीनाः भवेयुः यादृशानि, यस्मिन् ते एवं स्थाप्यन्ते तस्मिन् सत्रे संसदः उभे सदने अथवा तद्राज्यस्य विधानमण्डलस्य सदनं उभे वा सदने कुर्युः।

**लोकसेवायोगानां कृत्यानां विस्तारस्य शक्तिः।**

३२१. यथायथं संसदा, कस्यापि राज्यस्य विधानमण्डलेन वा प्रणीतः कोपि अधिनियमः सङ्घलोकसेवायोगेन, तद्राज्यलोकसेवायोगेन वा सङ्घस्य, तद्राज्यस्य वा सेवानां विषये, तथा कस्यापि स्थानीयप्राधिकारिणः अथवा विधिना घटितस्य अन्यस्य निगमनिकायस्य अथवा कस्याः अपि सार्वजनिकसंस्थायाः सेवानां विषये अपि अतिरिक्तकृत्यानां प्रयोगार्थं उपबन्धं निर्मातुं क्षमते।

---

१. संविधानस्य (सप्तर संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखेन वा" इत्येतौ शब्दौ लोपितौ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च, "यथायथं" इति शब्दः लोपितः।

३. उपर्युक्तस्याधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखः वा" इत्येतौ शब्दौ लोपितौ।

**लोकसेवायोगानां व्ययाः ।**

३२२. सङ्घस्य, कस्यापि राज्यस्य वा लोकसेवायोगस्य व्ययाः आयोगस्य सदस्येभ्यः कर्मचारिवृन्दाय वा, तेषां सम्बन्धेन वा सन्दीयमानैः कैश्चित् वेतनैः, भक्तैः; निवृत्तिवेतनैश्च सह एव यथायथं भारतसञ्चितनिधौ तद्राज्यसञ्चितनिधौ वा भारिताः भवेयुः।

**लोकसेवायोगानां प्रतिवेदनानि ।**

३२३. (१) सङ्घायोगस्य इदं कर्तव्यं भवेत् यत् सः तेन आयोगेनकृतस्य कार्यस्य विषये प्रतिवर्षं प्रतिवेदनं राष्ट्रपतिं उपस्थापयेत्; तादृशस्य प्रतिवेदनस्य प्राप्तौ च राष्ट्रपतिः तेषां विषयाणां सम्बन्धे, ते चेद् भवन्ति, येषु आयोगस्य परामर्शः न स्वीकृतः आसीत् तादृश्याः अस्वीकृतेः कारणानि स्पष्टतया ज्ञापनेन सहितां तस्य प्रतिवेदनस्य प्रतिलिपिं संसदः प्रत्येकसदनस्य पुरतः स्थापयेत् ।

(२) राज्यायोगस्य कर्तव्यं भवेद् यत् सः तेन आयोगेन कृतस्य कार्यस्य विषये प्रतिवर्षं प्रतिवेदनं राज्यस्य राज्यपालं [1][ * * * ] उपस्थापयेत्, तथा संयुक्तायोगस्य कर्तव्यं भवेत् यत् सः तेषां राज्यानां प्रत्येकं राज्यस्य येषां आवश्यकतानां पूर्तिः संयुक्तायोगेन क्रियते, राज्यपालं [1][ * * * ] तद्राज्यसम्बन्धे आयोगेन कृतस्य कार्यस्य विषये प्रतिवर्षं प्रतिवेदनं उपस्थापयेत् तथा एनयोः प्रत्येकावस्थायां तादृशस्य प्रतिवेदनस्य प्राप्तौ [2][ * * * ] राज्यपालः [3][ * * * ] तेषां विषयाणां सम्बन्धे, ते चेत् भवन्ति, येषु आयोगस्य परामर्शः न स्वीकृतः आसीत्, तादृश्याः अस्वीकृतेः कारणानि स्पष्टतया ज्ञापनेन सहितां तस्य प्रतिवेदनस्य प्रतिलिपिं राज्यस्य विधानमण्डलस्य पुरतः स्थापयेत् ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखं वा" इत्येतौ शब्दौ लोपितौ ।

२. उपर्युक्तस्यधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "यथायथं" इति शब्दः लोपितः ।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखो वा" इत्येतौ शब्दौ लोपितौ ।

[1][भाग: १४ अ

## अधिकरणानि

३२३अ. (१) संसद् विधिना सङ्घस्य, कस्यापि राज्यस्य, अथवा भारतस्य राज्यक्षेत्राभ्यन्तरे भारतशासनस्य नियन्त्रणाधीनस्य कस्यापि स्थानीयस्य अन्यस्य वा प्रधिकरणस्य अथवा भारतशासनस्य स्वामित्वस्य नियन्त्रणस्य वा अधीनस्थस्य कस्यापि निगमस्य कार्यैः सम्बद्धासु लोकसेवासु, सम्बद्धेषु पदेषु वा नियुक्तानां जनानां नियोजनस्य, सेवाप्रतिबन्धानां च सम्बन्धे विवादानां परिवादानां च प्रशासनाधिकरणैः न्यायनिर्णयनाय विचारणायै च उपबन्धयितुं क्षमते । **प्रशासनाधिकरणानि।**

(२) (१) खण्डाधीनं निर्मितः विधिः—

(क) सङ्घार्थं एकस्य प्रशासनाधिकरणस्य स्थापनाय, तथा प्रत्येकराज्यार्थं अथवा द्वयोः राज्ययोः अर्थं, अधिकानां राज्यानां वा अर्थं पृथक् पृथक् प्रशासनाधिकरणस्य स्थापनाय उपबन्धयितुम्;

(ख) उक्ताधिकरणानां: प्रत्येकं अधिकरणंयां अधिकारितां याः शक्तीश्च (यासु अवमाने दण्डप्रदानस्य शक्तिः अन्तर्भूता) यं प्रधिकारं च प्रयोक्तुं क्षमते तं विनिर्देष्टुम्;

(ग) उक्ताधिकरणैः अनुसरणीयप्रक्रियायाः कृते उपबन्धान् (येषु परिसीमाविषयकाः उपबन्धाः साक्ष्यनियमाश्च अन्तर्भूताः) विधातुं ;

(घ) (१) खण्डे निर्दिष्टानां विवादानां परिवादानां च सम्बन्धे, १३६-तमानुच्छेदाधीनं उच्चतमन्यायालयस्य अधिकारितां विहाय, अन्येषां समस्तानां न्यायालयानां अधिकारितां अपवर्जयितुम्;

(ङ) तादृशाय प्रत्येकं प्रशासनाधिकरणाय, तादृशस्य अधिकरणस्य स्थापनायाः अव्यवहितपूर्वं कस्यापि न्यायालयस्य अन्यस्य प्रधिकारणस्य वा पुरतः लम्बितानां केषामपि विवादविषयाणां अन्तरणाय उपबन्धयितुं यदि येषु हेतुकेषु तादृशाः विवादविषयाः आधारिताः सन्ति ते हेतुकाः तदधिकरणस्य स्थापनायाः पश्चात् समुद्भूताः अभविष्यन् तर्हि ते तादृशस्य अधिकरणस्य अधिकारितान्तर्गताः अभविष्यन्;

(च) राष्ट्रपतिना ३७१-ई अनुच्छेदस्य (३) खण्डाधीनं प्रदत्तानां आदेशानां निरसनं, संशोधनं च कुर्तुं;

(छ) तादृशान् अनुपूरकान्, आनुषङ्गिकान्, पारिणामिकान् वा उपबन्धान् (येषु प्रशुल्कविषयकोपबन्धाः अन्तर्भूताः सन्ति) अन्तर्वेष्टुम् यादृशान् संसद् तादृशानां अधिकरणानां प्रभाविरूपेण कार्यकरणाय अथवा तेभिः विवादेषु शीघ्रं व्यवस्थादानाय अथवा तेषां आदेशानां प्रवर्तनाय आवश्यकान् मन्यते,

क्षमते ।

(३) एतदनुच्छेदस्य उपबन्धाः अस्य संविधानस्य केषुचित् अन्येषु उपबन्धेषु तथा तदानीं प्रवर्तमानेषु अन्येषु विधिषु किमपि सत्यपि प्रभाविनः भवेयुः ।

३२३आ. (१) समुचितविधानमण्डलं विधिना तादृशानां विवादानां, परिवादानां, अपराधानां वा अधिकरणैः न्यायनिर्णयनाय, विचारणाय वा उपबन्धयितुं क्षमते ये (२) खण्डे विनिर्दिष्टैः विषयैः तेषां अन्यतमैः वा सम्बद्धाः सन्ति, येषां च सम्बन्धे तादृशं विधानमण्डलं विधिं प्रणेतुं शक्तिं भजते । **अन्यविषयाणां कृते अधिकरणानि ।**

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४५-अनुभागेन अन्तर्वेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(२) (१) खण्डे निर्दिष्टाः विषयाः निम्नलिखिताः सन्ति; तद् यथा—

(क) कस्यापि करस्य उद्ग्रहणं, निर्धारणं, संङ्ग्रहणं, प्रवर्तनं च;

(ख) विदेशीयमुद्राः, सीमाशुल्काः, सीमान्तपारं आयाताः निर्याताश्च;

(ग) औद्योगिकविवादाः, श्रमविवादाश्च;

(घ) ३१-अ अनुच्छेदे परिभाषितायाः कस्याः अपि सम्पदः अथवा तत्सम्बन्धिनां अधिकाराणां राज्य-द्वारा अर्जनेन, तादृशानां अधिकाराणां समाप्त्या, उपान्तरेण वा, कृषिभूमौ अधिकतमसीमानिर्धारणेन अथवा अन्येन केनापि प्रकारेण भूमि-सुधारणा;

(ङ) नगरसम्पत्तौ अधिकतमासीमानिर्धारणम् :

(च) संसदः प्रत्येक सदनस्य, कस्यापि राज्यस्य विधानमण्डलस्य सदनस्य सदनयोः वा निर्वाचनम्, किन्तु ३२९-तमानुच्छेदे ३२९अ-तमानुच्छेदे वा निर्दिष्टविषयान् विहाय;

(छ) खाद्यपदार्थानां (येषु खाद्यतैलवीजानि, खाद्यतैलानि च अन्तर्भूतानि) तथा तादृशानां अन्य-भाण्डानां उत्पादनं, उपाप्तिः, प्रदायः वितरणं च यानि राष्ट्रपतिः लोकाधिसूचनया एतदनुच्छेदस्य प्रयोजनानां कृते आवश्यकभाण्डानि इति घोषयेत्; तादृशानां, भाण्डानां मूल्यनियन्त्रणं च;

(ज) (क) उपखण्डात् (छ) उपखण्डपर्यन्तं कस्मिन् अपि उपखण्डे विनिर्दिष्टविषयैः सम्बद्धानां विधीनां विरुद्धं अपराधाः तेषां विषयाणां कस्यापि विषयस्य सम्बन्धे प्रशुल्काश्च;

(झ) (क) उपखण्डात् (ज) उपखण्डपर्यन्तं कस्मिन् अपि उपखण्डे विनिर्दिष्टविषयेभ्यः केषामपि विषयाणां आनुषङ्गिकः कोपि विषयः।

(३) (१)-खण्डाधीनं प्रणीतः विधिः—

(क) अधिकरणानां पदानुक्रमस्थापनं उपबन्धयितुम्;

(ख) उक्ताधिकरणानां प्रत्येकं अधिकरणं यां अधिकारितां, याः शक्तीः (यासु अवमाने दण्डप्रदानस्य शक्तिः अन्तभूर्ता), यं प्राधिकारं च प्रयोक्तुं क्षमते तान् विनिर्देष्टुम्;

(ग) उक्ताधिकरणैः अनुसरणीयप्रक्रियायाः कृते उपबन्धान् (येषु परिसीमाविषयकोपबन्धाः, साक्ष्य-नियमाश्च अन्तर्भूताः) विधातुम्;

(घ) उक्ताधिकरणानां अधिकारितान्तर्भूतानं विषयाणां सम्बन्धे, १३६-तमानुच्छेदाधीनं उच्चतम-न्यायालयस्य अधिकारितां विहाय, अन्येषां समस्तानां न्यायालयानां अधिकारितां अपवर्जयितुम्;

(ङ) तादृशाय प्रत्येकं अधिकरणाय, तादृशाधिकरणस्य स्थापनायाः अव्यवहितपूर्वं कस्यापि, न्यायालयस्य, अन्यस्य प्राधिकरणस्य वा पुरतः लम्बितानां केषामपि विवादविषयाणां अन्तरणाय उपबन्धयितुं, यदि येषु हेतुकेषु तादृशाः विवादविषयाः आधारिताःसन्ति ते हेतुकाः तदधिकरणस्य स्थापानायाः पश्चात् समुद्भूताः अभविष्यन् तर्हि ते तादृशस्य अधिकरणस्य अधिकारितान्तर्गताः अभविष्यन्;

(च) तादृशान् अनुपूरकान्, आनुषङ्गिकान्, पारिणामिकान् वा उपबन्धान् (येषु प्रशुल्कविषयकोपबन्धाः अन्तर्भूताः) अन्तर्वेष्टुम्, यादृशान् संसद् तादृशानां अधिकरणानां प्रभाविरूपेण कार्यकरणाय, अथवा तेभिः विवादेषु शीघ्रं व्यवस्थादानाय अथवा तेषां आदेशानां प्रवर्तनाय आवश्यकान् मन्यते,

क्षमते ।

(४) एतदनुच्छेदस्य उपबन्धाः अस्य संविधानस्य केषुचित् अन्येषु उपबन्धेषु, तथा तदानीं प्रवर्तमानेषु अन्येषु विधिषु किमपि सत्यपि प्रभाविनः भवेयुः ।

**स्पष्टीकरणम्**—अस्मिन् अनुच्छेदे "समुचितविधानमण्डलं" इत्येतेन संसद्, यथायथं वा एतादृशानां विषयाणां सम्बन्धे एकादशभागस्य उपबन्धानां अनुसारं विधिप्रणयनक्षमं राज्यविधानमण्डलं च अभिप्रेयते ।]

भागः १५

# निर्वाचनानि

**निर्वाचनानां अधीक्षणं, निदेशनं, नियन्त्रणं च निर्वाचनायोगे निधेयत्वम् ।**

३२४. (१) संसदे प्रत्येकराज्यस्य विधानमण्डलाय च समस्तानां निर्वाचनानां कृते निर्वाचकनामावलीनां परिकल्पनस्य, तथा तेषां निर्वाचनानां सञ्चालनस्य तथा राष्ट्रपतेः, उपराष्ट्रपतेश्च पदयोः कृते एतत्संविधानस्य अनुरोधेन जातयोः निर्वाचनयोः अधीक्षणं, निदेशनं, नियन्त्रणं च, [1][ * * * ] एकस्मिन् आयोगे निहितानि भवेयुः (यश्च अस्मिन् संविधाने "निर्वाचनायोगः" इत्येवं निर्दिश्यते) ।

(२) निर्वाचनायोगः मुख्यनिर्वाचनायुक्तेन, तथा यदि ते भवन्ति, अन्य निर्वाचनायुक्तानां तादृश्या सङ्ख्यया यादृशीं राष्ट्रपतिः काले काले नियतीकुर्यात्, भवेत्; तथा च मुख्यनिर्वाचनायुक्तस्य, अन्येषां निर्वाचनायुक्तानां च नियुक्तिः संसदा तदर्थं प्रणीतस्य कस्यापि विधेः उपबन्धानां अधीनं राष्ट्रपतिना क्रियेत ।

(३) कोपि अन्यः निर्वाचनायुक्तः यदि एवं नियुज्यते तर्हि मुख्यनिर्वाचनायुक्तः तस्य निर्वाचनायोगस्य अध्यक्षत्वेन कार्यं कुर्यात् ।

(४) लोकसभायाः तथा प्रत्येकराज्यस्य विधानसभायाः कृते प्रत्येकसाधारणनिर्वाचनात् पूर्वं, तथा विधान-परिषद्वतः प्रत्येकराज्यस्य विधानपरिषदः कृते प्रथमसाधारणनिर्वाचनात् पूर्वं तदुत्तरं च प्रत्येकद्वैवार्षिक निर्वाचनात् पूर्वं, राष्ट्रपतिः निर्वाचनायोगेन सह परामर्शं कृत्वा (१) खण्डेन निर्वाचनायोगाय प्रदत्तानां कृत्यानां पालने आयोगस्य साहाय्यार्थं, तादृशान् प्रादेशिकान् आयुक्तान् नियोक्तुं क्षमते, यादृशान् सः आवश्यकान् मन्येत ।

(५) संसदा प्रणीतस्य कस्यापि विधेः उपबन्धानां अधीनं, निर्वाचनायुक्तानां, प्रादेशिकायुक्तानां च सेवायाः प्रतिबन्धाः पदावधिश्च तादृशाः भवेयुः यादृशान् राष्ट्रपतिः नियमद्वारा अवधारयेत्—

परन्तु मुख्यनिर्वाचनायुक्तः स्वपदात् तादृशैः कारणैः तादृश्या रीत्या च विना न अपसारितः भवेत् यादृशैः कारणैः यादृश्या रीत्या च उच्चतमन्यायालयस्य न्यायाधीशः अपसारयितुं शक्यते, तथा मुख्यनिर्वाचनायुक्तस्य नियुक्तेः परं तस्य सेवायाः प्रतिबन्धेषु तस्य लाभस्य न्यूनीकारकं किमपि परिवर्तनं न क्रियेत;

अपरं च अन्यः कोपि निर्वाचनायुक्तः प्रादेशिकायुक्तः वा मुख्यनिर्वाचनायुक्तस्य पुरःप्रशंसनेन एव पदात् अपसारितः भवेत्, नान्यथा ।

(६) निर्वाचनायोगेन यदा एवं प्रार्थितः भवति तदा राष्ट्रपतिः, कस्यापिराज्यस्य राज्यपालः वा [2][ * * * ] निर्वाचनायोगाय, प्रादेशिकायुक्ताय वा तादृशं कर्मचारिवृन्दं प्राप्यं कारयेत् यादृशं (१) खण्डेन निर्वाचनायोगाय प्रदत्तानां कृत्यानां निर्वहणार्थं आवश्यकं भवेत् ।

---

१. संविधानस्य (नवमं संशोधनं) अधिनियमः, १९६६ इत्यस्य २-अनुभागेन "संसदोराज्यानां विधानमण्डलानां च कृते निर्वाचनेभ्यः उद्भूतानां तैः सम्बद्धानां वा सन्देहानां विवादानां च निर्णयार्थं निर्वाचनन्यायाधिकरणस्य नियुक्त्या सहैव" इत्येते शब्दाः लोपिताः ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्यां च "राजप्रमुखो वा" इत्येतौ शब्दौ लोपितौ ।

३२५. संसदः अन्यतरसदनार्थं, अथवा कस्यापि राज्यस्य विधानमण्डलस्य सदनार्थं, अन्यतरसदनार्थं वा, निर्वाचनस्य हेतोः कृते प्रत्येकप्रादेशिकनिर्वाचनक्षेत्राय एका साधारणनिर्वाचकनामावलिः भवेत्, तथा केवलं धर्मस्य, मूलवंशस्य, जातेः, लिङ्गस्य आधारेण वा एतेषां अन्यतमस्य वा आधारेण, कोपि जनः एतादृश्यां कस्यामपि नामावल्यां अन्तर्भाविस्य अपात्रं न भवेत्, अथवा एतादृशाय कस्मै अपि निर्वाचनक्षेत्राय, कस्यामपि विशेषनिर्वाचकनामावल्यां अन्तर्भावार्थं अध्यर्थनां न कुर्यात् ।

**धर्मस्य, मूलवंशस्य, जातेः, लिङ्गस्य वा आधारेण कस्यापि जनस्य निर्वाचननामावल्यां अन्तर्भावार्थं अपात्रत्वस्य अभावः, अथवा विशेषनिर्वाचकनामावल्यां अन्तर्भावार्थं अध्यर्थनायाः निषेधः ।**

३२६. लोकसभायै, प्रत्येकराज्यस्य विधानसभायै च निर्वाचनानि प्राप्तवयस्कमताधिकारस्य आधारेण भवेयुः, अर्थात् प्रत्येकजनः यः भारतस्य नागरिकः वर्तते, यश्च तादृशे दिनाङ्के, यादृशः समुचितविधानमण्डलेन प्रणीतेन केनापि विधिना तदधीनं वा एतदर्थं नियतः क्रियेत, एकविंशतिवर्षवयसः अन्यूनः वर्तते, तथा अन्यथा एतत् संविधानस्य, समुचितविधानमण्डलेन प्रणीतस्य कस्यापि विधेः वा अधीनं, अनिवासस्य, चित्तविकृतेः, अपराधस्य, भ्रष्टस्य वा अवैधस्य वा आचरणस्य आधारेण निरर्हीकृतः न विद्यते, एतादृशे कस्मिन् अपि निर्वाचने मतदातृरूपेण पञ्जीबद्धः भवितुं स्वत्ववान् भवेत् ।

**लोकसभायै, राज्यानां विधानसभाभ्यश्च निर्वाचनानां प्राप्तवयस्कमताधिकाराधारत्वम्**

३२७. एतत्संविधानस्य उपबन्धानां अधीनं संसत्, काले काले, विधिना संसदः अन्यतरसदनाय, अथवा कस्यापि राज्यस्य विधानमण्डलस्य सदनाय, अन्यतरसदनाय वा निर्वाचनैः संसक्तानां सम्बद्धानां वा सर्वेषां विषयाणां सम्बन्धे, येषु निर्वाचननामावलीनां परिकल्पनं, निर्वाचनक्षेत्राणां परिसीमनं, तथा तादृशस्य सदनस्य, तादृशानां सदनानां वा सम्यग् घटनस्य सम्पादनार्थं आवश्यकाः अन्ये च सर्वे विषयाः अन्तर्भवन्ति, उपबन्धं निर्मातुं क्षमते ।

**विधानमण्डलेभ्यः निर्वाचनानां विषये उपबन्धनिर्माणार्थं संसदः शक्तिः ।**

३२८. एतत् संविधानस्यउपबन्धानां अधीनं तथा यावत् संसदा तदर्थं उपबन्धः न निर्मितः भवति तावत्, कस्यापिराज्यस्य विधानमण्डलं काले काले, विधिना तद्राज्यविधानमण्डलस्य सदनार्थं, अन्यतरसदनार्थं वा निर्वाचनैः संसक्तानां सम्बद्धानां वा सर्वेषां विषयाणां सम्बन्धे, यस्मिन् निर्वाचननामावलीनां परिकल्पनं, तथा तादृशसदनस्य तादृशानां सदनानां वा सम्यग् घटनस्य सम्पादनार्थं आवश्यकाः अन्ये च सर्वे विषयाः अन्तर्भवन्ति, उपबन्धं निर्मातुं क्षमते ।

**कस्यचिद् राज्यविधानमण्डलस्य तद्विधानमण्डलाय निर्वाचनानां सम्बन्धे उपबन्धनिर्माणस्य शक्तिः ।**

३२९. [1][एतस्मिन् संविधाने किमपि सत्यपि [2][* * *]—

**निर्वाचनविषयेषु न्यायालयानां हस्तक्षेपस्य निषेधः ।**

(क) ३२७-तमानुच्छेदस्य, ३२८-तमानुच्छेदस्य वा अधीनं निर्मितस्य, निर्मातुं अभिप्रेतस्य वा, निर्वाचनक्षेत्राणां परिसीमनेन, अथवा एतादृशेषु निर्वाचनक्षेत्रेषु स्थानानां भागकल्पनया सम्बद्धस्य कस्यापि विधेः मान्यता कस्मिन् अपि न्यायालये प्रश्नगता न क्रियेत;

(ख) एतादृशं प्राधिकारिणं प्रति एतादृश्या रीत्या च, यथा समुचितविधानमण्डलेन निर्मितेन विधिना तदधीनं वा उपबन्धितं भवेत्, उपस्थापितया निर्वाचनयाचिकया एव संसदः अन्यतरसदनस्य कृते अथवा कस्यापि राज्यस्य विधानमण्डलस्य सदनस्य, अन्यतरसदनस्य वा कृते किमपि निर्वाचनं प्रश्नगतं क्रियेत, नान्यथा ।

१. संविधानस्य (नवत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ३-अनुभागेन केभ्यश्चित् शब्देभ्यः प्रति एते शब्दाः संनिवेशिताः ।

२. सविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३५-अनुभागेन "किन्तु ३२९अ अनुच्छेदस्य उपबन्धानां अधीनम्" इत्येते शब्दाः लोपिताः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

[1][३२९अ. [प्रधानमन्त्रिणः अध्यक्षस्य च सम्बन्धे संसदे निर्वाचनानां विषये विशेषोपबन्धः] संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३६-अनुभागेन निरसितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

---

१. संविधानस्य (नवत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ४-अनुभागेन अन्तर्वेशितः।

# भागः १६

## कतिपयैः वर्गैः सम्बद्धाः विशेषोपबन्धाः

**अनुसूचितजातीनां, अनुसूचितजनजातीनां च कृते लोकसभायां स्थानानां आरक्षणम् ।**

३३०. (१) लोकसभायां—

(क) अनुसूचित जातीनां कृते;

(ख) [1][ (प्रथमः) असमस्य जनजाति क्षेत्रस्य
(द्वितीयः) नागालैंडराज्यस्य,
(तृतीयः) मेघालयस्य,
(चतुर्थः) अरुणाचलप्रदेशस्य,
(पञ्चमः) मिजोरम राज्यक्षेत्रस्य च
अनुसूचितजनजातीः विहाय,] अन्यासां जनजातीनां कृते;

(ग) असमस्य स्वशासिमण्डलानां अनुसूचित जनजातीनां कृते च,

स्थानानि आरक्षितानि भवेयुः ।

(२) (१) खण्डस्य अधीनं अनुसूचितजातीनां कृते, अनुसूचितजनजातीनां वा कृते कस्मिंश्चिद् अपि राज्ये, [2][सङ्घराज्यक्षेत्रे वा] आरक्षितानां स्थानानां सङ्ख्या लोकसभायां तस्मै राज्याय, [2][सङ्घराज्यक्षेत्राय वा] भागकल्पनायां दत्तानां स्थानानां समस्तसङ्ख्यापेक्षया यथाशक्यं सः एव अनुपातः भवेत्, यः यथायथं तस्य राज्यस्य [2][सङ्घराज्यक्षेत्रस्य वा] अनुसूचितजातीनां अथवा तस्य राज्यस्य [2][सङ्घराज्यक्षेत्रस्य वा] तद्राज्यभागस्य, [2][तत्सङ्घराज्यक्षेत्रभागस्य वा] अनुसूचितजनजातीनां, यासां सम्बन्धे स्थानानि एवं आरक्षितानि भवन्ति, जनसङ्ख्यायाः अनुपातः तद्राज्यस्य [2][तत्सङ्घराज्यक्षेत्रस्य वा] समस्तजनसङ्ख्यापेक्षया वर्तते ।

[3][(३) (२) खण्डे किमपि सत्यपि लोकसभायां असमस्य स्वशासिमण्डलानां अनुसूचितजनजातीनां कृते आरक्षितानां स्थानानां सङ्ख्यायाः अनुपातः तस्मै राज्याय भागकल्पनया प्रदत्तानां स्थानानां समस्तसङ्ख्यायाः अनुपातात् न्यूनः न भवेत्, यः अनुपातः उक्तानां स्वशासिमण्डलानां अनुसूचितजनजातीनां जनसङ्ख्यायाः तद्राज्यस्य समस्तजनसङ्ख्यापेक्षया वर्तते ।]

[4][**स्पष्टीकरणम्**—अस्मिन् अनुच्छेदे, ३३२-तमानुच्छेदे, च "जनसङ्ख्या" शब्दस्य अर्थे सा जनसङ्ख्या ग्राह्या या अभिनिश्चिता तस्यां अन्तिममायां पूर्ववृत्तायां जनगणनायां यस्याः सुसम्बद्धाः अङ्काः प्रकाशिताः—

---

१. संविधानस्य (एकत्रिंशत्तमं संशोधनं) अधिनियमः, १९७३ इत्यस्य ३-अनुभागेन कतिपयेभ्यः शब्देभ्यः प्रति संनिवेशितः ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च अन्तर्वेशितः ।

३. संविधानस्य (एकत्रिंशत्तमं संशोधनं) अधिनियमः, १९७३ इत्यस्य ३-अनुभागेन अन्तर्वेशितः ।

४. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४७-अनुभागेन अन्तर्वेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**भाग : १६—कतिपयैः वर्गैः सम्बद्धाः विशेषोपबन्धाः—अनु० ३३०-३३३**

परन्तु एतस्मिन् स्पष्टीकरणे अन्तिमायां पूर्ववृत्तायां जनगणनायां यस्याः सुसम्बद्धाः अङ्काः प्रकाशिताः इति कथनं प्रति निर्देशस्य तावत् १९७१-तमवर्षस्य जनगणनां प्रति निर्देशः अस्ति इति अर्थः ग्राह्यः यावत् २०००-तमवर्षानन्तरं कृतायाः प्रथमायाः जनगणनायाः सुसम्बद्धाः अङ्काः प्रकाशिताः न भवेयुः ।]

**लोकसभायां आङ्ग्लभारतीय-समुदायस्य प्रतिनिधित्वम् ।**

३३१. ८१-तमानुच्छेदे किमपि सत्यपि, लोकसभायां आङ्ग्लभारतीयसमुदायस्य प्रतिनिधित्वं पर्याप्तं न अस्ति इति राष्ट्रपतिः मन्यते चेत् तर्हि सः लोकसभायां तस्य समुदायस्य जनद्वयात् अनधिकं नामनिर्देशितं कर्तुं क्षमते ।

**राज्यानां विधानसभासु अनुसूचितजातीनां, अनुसूचितजनजातीनां च कृते स्थानानां आरक्षणम् ।**

३३२. (१) [1][ * * * ] प्रत्येकराज्यस्य विधानसभायां अनुसूचितजातीनां कृते तथा च [2][असमस्य जनजातिक्षेत्राणां, नागालैंडस्य, मेघालयस्य च अनुसूचितजनजातीः वर्जयित्वा] अन्यासां जनजातीनां कृते स्थानानि आरक्षितानि भवेयुः ।

(२) असमराज्यस्य विधानसभायां स्वशासिमण्डलानां कृते अपि स्थानानि आरक्षितानि भवेयुः ।

(३) (१) खण्डस्य अधीनं कस्यचिद् अपि राज्यस्य विधानसभायां अनुसूचितजातीनां कृते वा अनुसूचितजनजातीनां कृते वा आरक्षितस्थानानां सङ्ख्यायाः तस्यां सभायां स्थानानां समस्तसङ्ख्यापेक्षया यथाशक्यं सः एव अनुपातः भवेत् यः यथायथं तस्य राज्यस्य अनुसूचितजातीनां अथवा तस्य राज्यस्य तद्राज्यभागस्य वा अनुसूचितजनजातीनां यासां सम्बन्धे स्थानानि एवं आरक्षितानि विद्यन्ते, जनसङ्ख्यायाः अनुपातः तस्य राज्यस्य समस्तजनसङ्ख्यापेक्षया वर्तते ।

(४) असमराज्यस्य विधानसभायां कस्यापि स्वशासिमण्डलस्य कृते आरक्षितानां स्थापनानां सङ्ख्यायाः तस्यां सभायां स्थानानां समस्त सङ्ख्यापेक्षया अनुपातः तस्मात् अनुपातात् न्यूनः न भवेत् यः अनुपातः मण्डलस्य जनसङ्ख्यायाः तस्य राज्यस्य समस्तजनसङ्ख्यापेक्षया वर्तते ।

(५) [3][ * * * ] असमराज्यस्य कस्यापि स्वाशासिमण्डलस्य कृते आरक्षितस्थानानां निर्वाचनक्षेत्रेषु तन्मण्डलबहिर्वर्ति किमपि क्षेत्रं समाविष्टं न भवेत् ।

(६) कोपि जनः यः असमराज्यस्य कस्यचित् स्वशासिमण्डलस्य अनुसूचित जनजातेः जनः न वर्तते सः तद्राज्यस्य विधानसभायै [4][* * *] तस्य मण्डलस्य कस्माद् अपि निर्वाचनक्षेत्रात् निर्वाचनस्य पात्रं न भवेत् ।

**राज्यानां विधानसभासु आङ्गल-भारतीय-समुदायस्य प्रतिनिधित्वम् ।**

३३३. १७०.-तमानुच्छेदे किमपि सत्यपि, यदि कस्यापि राज्यस्य राज्यपालः [5][* * *] मन्यते यत् तद्राज्यस्य विधानसभायां आङ्ग्लभारतीयसमुदायस्य प्रतिनिधित्वं आवश्यकं वर्तते, तत् च पर्याप्तं नास्ति, तर्हि सः [6][तस्यां विधानसभायां तस्य समुदायस्य एकं जनं नामनिर्देशितं कर्तुं] क्षमते ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च प्रथमानुसूच्या (क) भागे, (ख) भागे वा उल्लिखितस्य इत्येते" शब्दाः लोपिताः ।

२. संविधानस्य (एकत्रिंशत्तमं संशोधनं) अधिनियमः, १९७३ इत्यस्य ४-अनुभागेन कतिपयेभ्यः शब्देभ्यः प्रति संनिवेशितः ।

३. उत्तरपूर्वक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१) इत्यस्य ७२-अनुभागेन कतिपयशब्दाः लोपिताः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखो वा" इत्येतौ शब्दौ लोपितौ ।

६. संविधानस्य (त्रयोविंशतितमं संशोधनं) अधिनियमः, १९६९ इत्यस्य ४-अनुभागेन "तस्यां विधानसभायां तस्य समाजस्य तावतः जनान् यावतः स समुचितान् मन्यते, नामनिर्देशितान् कर्तुम्" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

**भाग : १६—कतिपयैः वर्गैः सम्बद्धाः विशेषोपबन्धाः—अनु० ३३४-३३८**

**स्थानानां आरक्षणस्य विशेष प्रतिनिधित्वस्य च संविधानस्य प्रारम्भात् (चत्वारिंशद् वर्षानन्तरं) समाप्तिः ।**

३३४. अस्य भागस्य पूर्ववर्तिषु उपबन्धेषु किमपि सत्यपि—

(क) लोकसभायां, राज्यानां विधानसभासु च अनुसूचितजातीनां कृते, अनुसूचितजनजातीनां च कृते स्थानानां आरक्षणेन सम्बद्धाः; तथा

(ख) लोकसभायां राज्यानां विधानसभासु च नामनिर्देशेन आङ्ग्ल-भारतीयसमुदायस्य प्रतिनिधित्वेन सम्बद्धाः,

एतत् संविधानस्य उपबन्धाः एतत् संविधानस्य प्रारम्भात् [1][चत्वारिंशद् वर्षाणां]कालावधेः समाप्तौ प्रभाववन्तः न भवेयुः—

परन्तु एतदनुच्छेदगतं किमपि, लोकसभायां कस्यापि राज्यस्य विधानसभायां वा किमपि प्रतिनिधित्वं तावत् न प्रभावयेत् यावत् तदानीं विद्यमानायाः यथायथं लोकसभायाः विधानसभायाः वा विघटनं न जायते ।

**सेवानां पदानां च कृते अनुसूचितजातीनां अनुसूचितजनजातीनां च अध्यर्थनाः ।**

३३५. संघस्य, कस्यापि राज्यस्य वा कार्यैः संसक्तानां सेवानां पदानां च कृते नियुक्तीनां करणे, प्रशासन-कार्यदक्षताधारणस्य अविरोधेन, अनुसूचितजातीनां, अनुसूचितजनजातीनां च जनानां अध्यर्थनानां विचारः क्रियेत ।

**कासुचित् सेवासु आङ्ग्ल-भारतीयसमुदायस्य कृते विशेषोपबन्धाः ।**

३३६. (१) एतत् संविधानस्य प्रारम्भाद् अनन्तरं प्रथमवर्षद्वये सङ्घस्य लोहमार्ग-सीमाशुल्क-डाक (प्रेषणी)-तार (तन्त्रिसन्देशि)-सम्बन्धि सेवानां पदेषु आङ्ग्लभारतीयसमुदायस्य जनानां नियुक्तयः १९४७ वर्षस्य अगस्तमासस्य पञ्चदशदिवसात् अव्यहितं पूर्ववर्तिना आधारेण क्रियेरन् ।

प्रत्येकस्मिन् अनुवर्तिनि वर्षद्वयस्य कालावधौ उक्तसमुदायस्य जनानां कृते उक्तसेवासु आरक्षितपदानां सङ्ख्या अव्यवहितपूर्ववर्तिनि वर्षद्वयस्य कालवधौ, एवं आरक्षितायाः सङ्ख्यायाः प्रतिशतं दशभिः न्यूना भवितुं अर्हति—

परन्तु एतत् संविधानस्य प्रारम्भात् दशानां वर्षाणां अन्ते तादृशानां सर्वेषां आरक्षणानां समाप्तिः जायेत ।

(२) यदि अन्यसमुदायस्य जनैः तुलनायां आङ्ग्लभारतीयसमुदायस्य जनाः कुशलतया नियुक्तेः अर्हाः अधिगम्येरन्, तर्हि (१) खण्डस्य अधीनं तत्समुदायार्थं आरक्षितपदेभ्यः अन्येषु अधिकेषु वा पदेषु आङ्ग्लभारतीय-समुदायस्य जनानां नियुक्तौ तत्खण्डगतं किमपि बाधकं न भवेत् ।

**आङ्ग्ल-भारतीयसमुदायस्य हिताय शिक्षणानुदानार्थं विशेषोपबन्धाः ।**

३३७. एतत्संविधानस्य प्रारम्भाद् अनन्तरं प्रथमे वित्तीयवर्षत्रये आङ्ग्लभारतीयसमुदायस्य हिताय शिक्षायाः सम्बन्धे, कानिचिद् विद्यन्ते चेत्, तानि एव अनुदानानि सङ्घेन तथा [2][ * * * ] प्रत्येकराज्येन दीयेरन् यानि १९४८-वर्षस्य मार्चमासस्य ३१-तमे दिने समाप्तिं गते वित्तीयवर्षे अदीयन्त ।

प्रत्येकस्मिन् अनुवर्तिनि वर्षत्रयस्य कालावधौ अनुदानानि अव्यवहितपूर्ववर्तिनः वर्षत्रयस्य कालावधेः अपेक्षया प्रतिशतं दशभिः न्यूनानि भवितुंअर्हन्ति—

परन्तु एतत् संविधानस्य प्रारम्भात् दशानां वर्षाणां अन्ते एतादृशानि अनुदानानि, यावत् आङ्ग्लभारतीय-समुदायार्थं विशेषानुग्रहरूपेण वर्तन्ते तावत्, समाप्तिं गच्छेयुः—

अपरं च एतदनुच्छेदाधीनं कस्याः अपि शिक्षासंस्थायाः किमपि अनुदानं प्राप्तुं तावत् स्वत्वं न भवेत् यावत् तस्याः वार्षिकप्रवेशानां न्यूनात् न्यूनं प्रतिशतं चत्वारिंशत् प्रवेशाः आङ्ग्लभारतीयसमुदायाद् भिन्नसमाजानां जनैः लभ्याः न क्रियन्ते ।

**अनुसूचितजात्यनुसूचित जनजातिप्रभृतिनां कृते विशेषाधिकारी ।**

३३८. (१) अनुसूचितजातीनां, अनुसूचितजनजातीनां च कृते राष्ट्रपतिना नियोक्तव्यः एकः विशेषाधिकारी भवेत् ।

---

१. संविधानयस्य (पञ्चचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९८० इत्यस्य २-अनुभागेन "त्रिंशद्वर्षाणां" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः क-भागे ख-भागे वा उल्लिखितेन" इत्येते शब्दाः लोपिताः ।

(२) अनुसूचितजातीनां, अनुसूचितजनजातीनां च कृते एतत्संविधानस्य अधीनं उपबन्धितरक्षोपायैः सम्बद्धानां सर्वेषां विषयाणां अन्वेषणं तथा तेषां रक्षोपायानां प्रवर्तनसम्बन्धे तादृशेषु अन्तरालेषु यादृशानि राष्ट्रपतिः निर्दिशेत्, राष्ट्रपतये प्रतिवेदनार्पणं विशेषाधिकारिणः कर्तव्यं भवेत्; राष्ट्रपतिश्च सर्वाणि एतादृशानि प्रतिवेदनानि संसदः प्रत्येकसदनस्य पुरतः स्थापयेत् ।

(३) अस्मिन् अनुच्छेदे अनुसूचितजातीनां अनुसूचितजनजातीनां च निर्देशेषु तादृशानां सर्वेषां अप्रगतानां वर्गाणां निर्देशाः यान् राष्ट्रपतिः एतत्संविधानस्य ३४०-तमानुच्छेदस्य (१) खण्डस्य अधीनं नियुक्तस्य आयोगस्य प्रतिवेदनस्य प्राप्तौ आदेशेन विनिर्दिशेत् तथा च आङ्ग्लभारतीयसमुदायं प्रति निर्देशाः अपि तत्र अन्तर्भवन्ति इति अर्थः ग्राह्यः ।

**अनुसूचितक्षेत्राणां प्रशासने तथा अनुसूचित जनजातीनां कल्याणस्य विषये सङ्घस्य नियन्त्रणम् ।**

३३९. (१) [1][ * * * ] राष्ट्रपतिः राज्येषु अनुसूचितक्षेत्राणां प्रशासनविषये, तथा अनुसूचितजनजातीनां कल्याणस्य विषये प्रतिवेदनस्य अर्पणाय आयोगस्य नियुक्तिं आदेशेन कस्मिन् अपि काले कर्तुं क्षमते, तथाच एतत्संविधानस्य प्रारम्भाद् दशानां वर्षाणां समाप्तौ कुर्यात् ।

आदेशः आयोगस्य रचनायाः, शक्तीनां, प्रक्रियायाश्च परिणिश्चयं कर्तुं अर्हतिः तथा तस्मिन् ते प्रासङ्गिकाः सहायकाश्च उपबन्धाः समाविष्टाः भवितुं अर्हन्ति यान् राष्ट्रपतिः आवश्यकान् वाञ्छनीयान् वा मन्येत ।

(२) सङ्घस्य कार्यपालिकायाः शक्तेः विस्तारः, [2][ * * * ] राज्याय तद्राज्यस्य अनुसूचितजनजातीनां कल्याणार्थं, निदेशे आवश्यकत्वेन उल्लिखितयोजनानां निर्माणेन निष्पादनेन च सम्बद्धानां निदेशानां प्रदानं यावत्, भवेत् ।

**अप्रगतवर्गाणां दशानां अन्वेषणार्थं आयोगस्य नियुक्तिः ।**

३४०. (१) भारतराज्यक्षेत्रे सामाजिकदृष्ट्या शिक्षादृष्ट्या च अप्रगतानां वर्गाणां दशानां तथा तैः अनुभूयमानानां असौकर्याणां अन्वेषणार्थं, तथा सङ्घेन, केनचित् अपि राज्येन वा तेषां असौकर्याणां अपसारणाय, तेषां दशायाः सुधारणायै च अवलम्बनीयानां उपायानां विषये, तत्प्रयोजनार्थं सङ्घेन केनचिद् अपि राज्येन वा दातव्यानां अनुदानानां विषये, येषां प्रतिबन्धानां अधीनं तानि अनुदानानि दातव्यानि, तेषां प्रतिबन्धानां च विषये पुरःप्रशंसनकरणार्थं, राष्ट्रपतिः आदेशेन तादृशैः जनैः, यादृशान् सः समुचितान् मन्यते, आयोगं निर्मातुं क्षमते; आयोगस्य नियोजकेन आदेशेन च आयोगेन अनुसरणीया प्रक्रिया अपि परिणिश्चिता भवेत् ।

(२) एवं नियुक्तः आयोगः स्वस्मै निर्दिष्टविषयाणां अन्वेषणं कुर्यात् तथा च राष्ट्रपतये प्रतिवेदनं अर्पयेत् यस्मिन् तेन स्वयं अधिगतानि तथ्यानि उपवर्णितानि भवेयुः तथा च तेन उचितत्वेन मतानां पुरः प्रशंसनानामपि समावेशः स्यात् ।

(३) राष्ट्रपतिः एवं अर्पितस्य प्रतिवेदनस्य प्रतिलिपिं तदाधारेण कृतां क्रियां स्पष्टतया ज्ञापनेन सहितां संसदः प्रत्येकसदनस्य पुरतः स्थापयेत् ।

**अनुसूचिताः जातयः ।**

३४१. (१) राष्ट्रपतिः [3][कस्यापि राज्यस्य [4][सङ्घराज्यक्षेत्रस्य वा] सम्बन्धे, यत्र [5][ * * * ] राज्यं

---

१. संविधानस्य (सप्तमं संशोधन) अधिनियमः, १९५६ इत्यस्य २९५-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः क-भागे ख-भागे वा उल्लिखितेषु" इत्येते शब्दाः लोपिताः ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "कस्मैचिदपि" इति लोपितः ।

३. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य १०-अनुभागेन "कस्यापि राज्यस्य राज्यपालेन राजप्रमुखेन वा परामर्शस्य अनन्तरं" इति एतेभ्यः शब्देभ्यः प्रति संनिवेशितम् ।

४. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च एतौ शब्दौ अन्तर्वेशितौ ।

५. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "प्रथम अनुसूच्याः (क) भागे, (ख) भागे वा उल्लिखितं" इति शब्दाः लोपिताः ।

भवेत् तत्र तस्य राज्यपालेन [1][ * * * ] परामर्शस्य अनन्तरं] लोकाधिसूचनया[2] ताः जातीः, मूलवंशान्, जनजातीः वा, अथवा जातीनां, मूलवंशानां, जनजातीनां वा भागान् तदन्तर्गतान् उपवर्गान् वा विनिर्देष्टुं क्षमते ये च एतत् संविधानस्य प्रयोजनानां अर्थे तद्राज्यसम्बन्धे तत्सङ्घराज्यक्षेत्रसम्बन्धे च अनुसूचितजातयः मन्येरन् ।

(२) संसद् विधिना कामपि जातिं, मूलवंशं, जनजातिं वा अथवा कस्याः अपि जातेः, मूलवंशस्य, जनजातेः वा भागं तदन्तर्गतं उपवर्गं वा (१) खण्डस्य अधीनं प्रवर्तितया अधिसूचनया विनिर्दिष्टानां अनुसूचितजातीनां सूच्यां समाविष्टं तस्याः बहिर्गतं वा कर्तुं क्षमते, किन्तु उपर्युक्तां रीतिं विहाय, अन्यथा उक्तखण्डस्य अधीनं प्रवर्तिता अधिसूचना कयापि उत्तरवर्तिन्या अधिसूचनया परिवर्तिता न भवेत् ।

३४२. (१) राष्ट्रपतिः [3][कस्यचित् अपि राज्यस्य संघराज्यक्षेत्रस्य वा सम्बन्धे, यत्र राज्यं भवेत् तत्र राज्य पालेन परामर्शस्य अनन्तरं] लोकाधिसूचनया[4] ताः जनजातीतान्, जनजाति-समुदायान्वा अथवा जनजातीनां, जनजतिसमुदायानां वा भागान् तदन्तर्गतान् उपवर्गान् च विनिर्देष्टुं क्षमते, ये च एतत्संविधानस्य प्रयोजनानां अर्थे तद्राज्यसम्बन्धे [5][अथवा यथायथं सङ्घराज्यक्षेत्रस्य सम्बन्धे] अनुसूचित-जनजातयः मन्येरन् । अनुसूचिताः जनजातयः ।

(२) संसद् विधिना कामपि जनजातिं कमपि जनजातिसमुदायं वा, अथवा कस्याः अपि जनजातेः कस्यापि जनजातिसमुदायस्य वा भागं, तदन्तर्गतं उपवर्गं वा (१) खण्डस्य अधीनं प्रवर्तितायां अधिसूचनायां विनिर्दिष्टानां अनुसूचितजनजातीनां सूच्यां समाविष्टं बहिर्गतं वा कर्तुं क्षमते; किन्तु उपर्युक्तां रीतिं विहाय अन्यथा उक्तखण्डस्य अधीनं प्रवर्तिता अधिसूचना कयापि उत्तरवर्तिन्या अधिसूचनया परिवर्तिता न भवेत् ।

---

१. संविधानस्य (सप्तम संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखेन वा" इत्येतौ शब्दौ लोपितौ ।

२. निम्ननिर्दिष्टाः आदेशाः द्रष्टव्याः—सांविधानिकः (अनुसूचितजातीनां सम्बन्धे) आदेशः, १९५० (सां० आ० १९), सांविधानिकः (सङ्घराज्यक्षेत्राणां कृते), (अनुसूचितजातीनांसम्बन्धे) आदेशः, १९५१ (सां०आ० ३२), सांविधानिकः (जम्मू-कश्मीरकृते) अनुसूचित जनजातीनां सम्बन्धे आदेशः, १९५६ (सां० आ० ५२), सांविधानिकः (दादरा नगरहवेलीकृते) अनुसूचितजातीनां सम्बन्धे आदेशः, १९६२, (सां० आ० ६४), सांविधानिकः (पाण्डिचेरिकृते) अनुसूचितजातीनां सम्बन्धे आदेशः, १९६४ (सां० आ० ६८), सांविधानिकः (गोआ-दमण-दीवकृते) अनुसूचितजातीनां सम्बन्धे आदेशः, १९६८ (सां० आ० ८१), सांविधानिकः (सिक्किमकृते) अनुसूचितजातीनां सम्बन्धे आदेशः, १९७८ (सां० आ० ११०) ।

३. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य ११-अनुभागेन "कस्यापि राज्यस्य राज्यपालेन राजप्रमुखेन वा परामर्शस्य अनन्तरं" इत्येतेभ्यः शब्देभ्यः प्रति एतत् संनिवेशितम् ।

४. निम्ननिर्दिष्टाः आदेशाः द्रष्टव्याः—सांविधानिकः (अनुसूचितजनजातीनां सम्बन्धे) आदेशः, १९५० (सां० आ० २२), सांविधानिकः (अनुसूचितजनजातीनां सम्बन्धे) (सङ्घराज्यक्षेत्राणां कृते) आदेशः, १९७१ (सां आ० ३३), सांविधानिकः (अन्दमान-निकोबार द्वीपानां कृते) अनुसूचितजनजातीनां सम्बन्धे आदेशः, १९५९ (सां० आ० ५८), सांविधानिकः (दादरा-नगरहवेलीकृते) जनजातीनां सम्बन्धे आदेशः १९६२ (सां० आ० ६५), सांविधानिकः (अनुसूचितजनजातीनां सम्बन्धे) (उत्तरप्रदेशस्य कृते) आदेशः, १९६७ (सां० आ० ७८); सांविधानिकः (गोवा-दमण-दीवकृते) अनुसूचितजनजातीनां सम्बन्धे आदेशः, १९६८ (सां० आ० ८२), सांविधानिकः (नागालैंडकृते) अनुसूचितजनजातीनां सम्बन्धे आदेशः, १९७० (सां० आ० ८८); तथाच सांविधानिकः (सिक्किम कृते) अनुसूचितजनजातीनां सम्बन्धेः आदेशः, १९७८ (सां० आ० १११) ।

५. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य ६९-अनुभागेन अनुसूच्या च एतौ शब्दौ अन्तर्वेशितौ ।

## भागः १७

# राजभाषा

## अध्याय : १—सङ्घस्य भाषा

सङ्घस्य राजभाषा ।

३४३. (१) सङ्घस्य राजभाषा देवनागर्यां लिप्यां (लिखिता) हिन्दी भवेत् ।

सङ्घस्य राजकीयप्रयोजनानां कृते प्रयोक्तव्यानां अङ्कानां रूपं भारतीयानां अङ्कानां आन्ताराष्ट्रियं रूपं भवेत् ।

(२) (१) खण्डे किमपि सत्यपि, एतत्संविधानस्य प्रारम्भात् पञ्चदशवर्षाणां कालावधिं यावत्, सङ्घस्य, तेषां सर्वेषां राजकीयप्रयोजनानां कृते आङ्ग्लभाषा प्रयोक्तव्यत्वेन अनुवर्तेत येषां कृते एतादृशप्रारम्भात् प्राक् अव्यवहितपूर्वं सा प्रयुज्यमाना आसीत्—

परन्तु राष्ट्रपतिः उक्तकालावधौ आदेशेन[1] सङ्घस्य राजकीयप्रयोजनेषु कस्यचित्कृते आङ्ग्लभाषया सह एव हिन्दीभाषायाः तथा भारतीयाङ्कानां आन्ताराष्ट्रियरूपेण सह एव देवनागरीरूपस्य प्रयोगं प्राधिकृतं कर्तुं क्षमते ।

(३) एतदनुच्छेदे किमपि सत्यपि, संसद् उक्तस्य पञ्चदशानां वर्षाणां कालावधेः पश्चात्, विधिना—

(क) आङ्ग्लभाषायाः, अथवा

(ख) अङ्कानां देवनागरीरूपस्य,

तादृशेभ्यः प्रयोजनेभ्यः प्रयोगं उपबन्धितं कर्तुं क्षमते यादृशानि एतादृशे विधौ विनिर्दिष्टानि भवेयुः ।

राजभाषार्थं आयोगः, संसदः समितिश्च ।

३४४. (१) राष्ट्रपतिः एतत्संविधानस्य प्रारम्भात् पञ्चानां वर्षाणां समाप्तौ, तत्पश्चात् च, तादृशात् प्रारम्भात् दशवर्षाणां समाप्तौ आदेशेन एकं आयोगं घटयेत् यश्च एकेन अध्यक्षेण अष्टमानुसूच्यां विनिर्दिष्टानां विभिन्नानां भाषाणां प्रतिनिधिभूतैः तादृशैः अन्यैश्च सदस्यैः सम्भूय भवेत् यादृशान् राष्ट्रपतिः नियुञ्जीत; आदेशे च आयोगेन अनुसरणीया प्रक्रिया परिणिश्चिता भवेत् ।

(२) राष्ट्रपतिं प्रति—

(क) सङ्घस्य शासकीयप्रयोजनानां कृते हिन्दीभाषायाः उत्तरोत्तरं अधिकप्रयोगस्य,

(ख) सङ्घस्य शासकीयप्रयोजनेषु कस्यापि वा कृते आङ्ग्लभाषायाः प्रयोगे निर्बन्धनानाम्,

(ग) ३४८-तमानुच्छेदे उल्लिखितानां सर्वेषां अथवा केषांचित् प्रयोजनानां कृते प्रयोक्तव्यायाः भाषायाः,

(घ) सङ्घस्य कस्यचित् केषांचित् वा विनिर्दिष्टानां प्रयोजनानां कृते प्रयोक्तव्यानां अङ्कानां रूपस्य,

(ङ) सङ्घस्य राजभाषायाः, तथा सङ्घस्य कस्यापि राज्यस्य च मध्ये अथवा एकस्य राज्यस्य अन्य-द्राज्यस्य च मध्ये संव्यवहारस्य भाषायाः, तथा तयोः प्रयोगस्य विषये राष्ट्रपतिना आयोगं प्रति निर्दिष्टस्य कस्यापि अन्यस्य विषयस्य,

सम्बन्धे पुरः प्रशंसनं आयोगस्य कर्तव्यं भवेत् ।

(३) द्वितीयखण्डस्य अधीनं स्वकीयपुरःप्रशंसनानां प्रतिपादने, आयोगः भारतस्य औद्योगिक-सांस्कृतिक-

---

१. सां० आ० ४१ द्रष्टव्यः ।

वैज्ञानिकोन्नतौ तथा च लोकसेवानां विषये हिन्दीतरभाषिक्षेत्रीयजनानां न्याय्यासु अध्यर्थनासु, हितेषु च सम्यक् अवधानं दद्यात् ।

(४) त्रिंशतः सदस्यानां एका समितिः घटिता भवेत्, येषु विंशतिः लोकसभायाः सदस्याः भवेयुः, दश च राज्य सभायाः सदस्याः भवेयुः, ये च क्रमशः लोकसभायाः सदस्यैः तथा राज्यसभायाः सदस्यैः अनुपातिप्रतिनिधित्वपद्धतिं अनुसृत्य एकलसङ्क्रमणीयमतेन निर्वाचिताः भवेयुः ।

(५) (१) खण्डस्य अधीनं घटितस्य आयोगस्य पुरः प्रशंसनानां परीक्षणं तथा तद्विषये स्वमतेः राष्ट्रपतये प्रतिवेदनं समितेः कर्तव्यं भवेत् ।

(६) ३४३-तमानुच्छेदे किमपि सत्यपि, राष्ट्रपतिः पञ्चमखण्डे निर्दिष्टस्य प्रतिवेदनस्य विचारानन्तरं तस्य सम्पूर्णस्य प्रतिवेदनस्य कस्यापि तद्भागस्य वा अनुसारेण निदेशान् प्रदातुं क्षमते ।

## ध्यायः २ —प्रादेशिकभाषाः

**कस्यापि राज्यस्य राजभाषा अथवा राजभाषाः ।**

३४५. ३४६-तमानुच्छेदस्य ३४७-तमानुच्छेदस्य च अधीनं कस्यापि राज्यस्य विधानमण्डलं विधिना तस्मिन् राज्ये प्रयुज्यमानासु भाषासु एकां, अनेकां वा हिन्दीं वा तद्राज्यस्य शासकीयप्रयोजनेषु सर्वेषां कस्यापि वा कृते प्रयोक्तव्यभाषारूपेण, अङ्गीकर्तुं क्षमते—

परन्तु यावत् तद्राज्यस्य विधानमण्डलं विधिना, अन्यथा उपबन्धं न करोति तावत् तद्राज्यस्य अभ्यन्तरे तेषां शासकीयप्रयोजनानां कृते, येषां कृते एतत्संविधानस्य प्रारम्भात् अव्यवहितपूर्वं सा प्रयुज्यमाना आसीत्, आङ्ग्ल-भाषा प्रयोक्तव्यभाषारूपेण अनुवर्तेत ।

**एकराज्यस्य राज्यान्तरस्य च मध्ये अथवा कस्यापि राज्यस्य सङ्घस्य च मध्ये संव्यवहारार्थं राजभाषा ।**

३४६. सङ्घे शासकीयप्रयोजनानां कृते प्रयोगार्थं तदानीं प्राधिकृता भाषा एकराज्यस्य राज्यान्तरस्य च मध्ये तथा कस्यापि राज्यस्य सङ्घस्य च मध्ये संव्यवहारार्थं राजभाषा भवेत्—

परन्तु द्वे राज्ये, अधिकानि वा, समयं चेत् कुरुतः कुर्वन्ति वा, यद् एतादृशराज्ययोः एतादृशराज्यानां वा मध्ये परस्परं संव्यवहारार्थं हिन्दीभाषा राजभाषा भवेत् तर्हि एतादृशसंव्यवहारार्थं सा भाषा प्रयोज्या भवितुं अर्हति ।

**कस्यापि राज्यस्य जनसङ्ख्यायाः केनापि विभागेन भाष्यमाणायाः भाषायाः सम्बन्धे विशेषाः उपबन्धाः ।**

३४७. तद्विषये अभियाचनायां कृतायां राष्ट्रपतेः समाधानं जायते चेत् यत् कस्यापि राज्यस्य जनसङ्ख्यायाः पर्याप्तः अनुपातः इच्छति यत् तेन भाष्यमाणा कापि भाषा तद्राज्यस्य अवाप्तमान्यता भाषा भवेत्, तर्हि सः निदेशं कर्तुं क्षमते यत् तादृशीं भाषामपि तस्मिन् राज्ये सर्वत्र, तस्य कस्मिंश्चिद् भागे वा तादृशस्य प्रयोजनस्य कृते यादृशं सः विनिर्दिशेत्, शासकीयमान्यता दत्ता भवेत् ।

## अध्यायः ३—उच्चतमन्यायालयस्य उच्चन्यायालयादीनां च भाषा

**उच्चतमन्यायालये उच्च न्यायालयेषु तथा च अधिनियमविधेयकादिषु प्रयोक्तव्या भाषा ।**

३४८. (१) एतद्भागस्य पूर्ववर्तिषु उपबन्धेषु किमपि सत्यपि, यावत् संसद् विधिना अन्यथा न उपबन्धयति तावत्—

(क) उच्चतमन्यायालये, तथा प्रत्येकस्मिन् उच्चन्यायालये सर्वाः कार्यप्रवृत्तयः;

(ख) (प्रथमः) संसदः अन्यतरस्मिन् सदने अथवा कस्यापि राज्यस्य विधानमण्डलस्य सदने, अन्यतरस्मिन् सदने वा, पुरःस्थापनीयानां विधेयकानां, अथवा तेषां सम्बन्धे प्रस्तावनीयानां संशोधनानां प्राधिकृताः पाठाः;

(द्वितीयः) संसदा अथवा कस्यापि राज्यस्य विधानमण्डलेन पारितानां अधिनियमानां तथा राष्ट्रपतिना, कस्यापि राज्यस्य राज्यपालेन [1][ * * * ] प्रख्यापितानां अध्यादेशानां प्राधिकृताः पाठाः; तथा च

(तृतीयः) एतत् संविधानस्य अधीनं, अथवा संसदा, कस्यापि राज्यस्य विधानमण्डलेन वा निर्मितस्य कस्यापि विधेः अधीनं वा, प्रदत्तानां सर्वेषां आदेशानां, नियमानां, विनियमानां, उपविधीनां च प्राधिकृताः पाठाश्च,

आङ्ग्लभाषायां भवेयुः ।

(२) (१) खण्डस्य (क) उपखण्डे किमपि सत्यपि, कस्यापि राज्यस्य राज्यपालः [2][ * * * ] राष्ट्रपतेः पूर्वसहमत्या हिन्दीभाषायाः तस्मिन् राज्ये केषामपि शासकीयप्रयोजनानां अर्थं प्रयुज्यमानायाः कस्यापि अन्यस्याः भाषायाः वा प्रयोगं, तस्मिन् राज्ये यस्य मुख्यं स्थानं विद्यते तस्य उच्चन्यायालयस्य कार्यप्रवृत्तिषु प्राधिकृतं कर्तुं क्षमते—

परन्तु एतत्खण्डगतं किमपि एतादृशेन उच्चन्यायालयेन पारिते, कृते वा निर्णये, आज्ञप्तौ, आदेशे वा न प्रवर्तेत ।

(३) (१) खण्डस्य (ख) उपखण्डे किमपि सत्यपि, यत्र कस्यापि राज्यस्य विधानमण्डलेन, तस्मिन् विधानमण्डले पुरःस्थापितेषु विधेयकेषु, अथवा तेन पारितेषु अधिनियमेषु अथवा तद्राज्यस्य राज्यपालेन [3][ * * * ] प्रख्यापितेषु अध्यादेशेषु, अथवा तस्य उपखण्डस्य तृतीयप्रच्छेदे निर्दिष्टे कस्मिन् अपि आदेशे, नियमे, विनियमे, उपविधौ वा प्रयोगार्थं आङ्ग्लभाषातः भिन्ना कापि भाषा विहिता भवेत् तत्र तद्राज्यस्य राजपत्रे तद्राज्यस्य राज्यपालस्य [3][ * * * ] प्राधिकारेण प्रकाशितः तस्य आङ्ग्लभाषायां अनुवादः एतदनुच्छेदानुसारं आङ्ग्लभाषायां प्राधिकृतः पाठः मन्येत ।

**भाषासम्बन्धिनः कतिचिद् विधीन् अधिनियमितुं विशेष-प्रक्रिया ।**

३४९. अस्य संविधानस्य प्रारम्भात् पञ्चदशानां वर्षाणां कालावधिं यावत् ३४८-तमानुच्छेदस्य (१) खण्डे उल्लिखितानां प्रयोजनानां कस्यापि कृते प्रयोक्तव्यभाषार्थं उपबन्धं कुर्वत् किमपि विधेयकं, संशोधनं वा, संसदः अन्यतरस्मिन् सदने राष्ट्रपतेः पूर्वस्वीकृतिं विना न हि पुरःस्थाप्येत, नापि प्रस्तूयेत; तथा एतादृशस्य कस्यापि विधेयकस्य पुरःस्थापनाय अथवा एतादृशस्य कस्यापि संशोधनस्य प्रस्तावनाय स्वीकृतिः ३४४-तमानुच्छेदस्य (१) खण्डस्य अधीनं घटितस्य आयोगस्य पुरःप्रशंसनानां, तथा तदनुच्छेदस्य (४) खण्डस्य अधीनं घटितायाः समितेः प्रतिवेदनस्य विचारानन्तरं एव, राष्ट्रपतिना दीयेत ।

## अध्यायः ५—विशेषनिदेशाः

**व्यथानां निवारणार्थं अभिवेदनेषु प्रयोक्तव्या भाषा ।**

३५०. कस्याः अपि व्यथायाः निवारणार्थं सङ्घस्य कस्यापि राज्यस्य वा कस्मै अपि अधिकारिणे प्राधिकारिणे वा यथायथं सङ्घे वा तद्राज्ये वा प्रयुज्यमनायां कस्यामपि भाषायां अभ्यावेदनं दातुं प्रत्येकजनस्य स्वत्वं भवेत् ।

**प्राथमिकस्तरे मातृभाषायां शिक्षार्थं सुविधाः ।**

[4][३५०अ. प्रत्येकराज्यस्य, तद्राज्याभ्यन्तर्गतस्य प्रत्येकस्थानीयप्राधिकारिणश्च प्रयासः भवेत् यद् भाषा-कीयाल्पसङ्ख्यकवर्गाणां बालकानां शिक्षायाः प्राथमिकस्तरे मातृभाषायां शिक्षाप्रदानाय पर्याप्ता व्यवस्था क्रियते; तथा च राष्ट्रपतिः कस्मै अपि राज्याय एतादृशान् निदेशान् प्रदातुं क्षमते यान् सः तादृशीनां व्यवस्थानां कृते उपबन्धान् सुनिश्चेतुं आवश्यकान् उचितान् वा मन्यते ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखेन वा" इत्येतौ शब्दौ लोपितौ ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखोः वा" इत्येतौ शब्दौ लोपितौ ।

३. उपर्युक्ताधिनियम उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखस्य वा" इत्येतौ शब्दौ लोपितौ ।

४. उपर्युक्ताधिनियमस्य २१-अनुभागेन एतौ अनुच्छेदौ अन्तर्वेशितौ ।

**भाग : १७—राजभाषा—अनु० ३५०आ-३५१**

**३५०आ.** (१) भाषाकीयाल्पसङ्ख्यकवर्गाणां कृते एकः विशेषाधिकारी भवेत्, सः च राष्ट्रपतिना नियुक्तः भवेत्। **भाषाकीयाल्पसङ्ख्यक-वर्गाणां कृते विशेषाधिकारी ।**

(२) विशेषाधिकारिणः कर्तव्यं भवेत् यत् सः भाषाकीयाल्पसङ्ख्यकवर्गाणां कृते उपबन्धितैः रक्षोपायैः सम्बन्धेषु सर्वेषु विषयेषु अन्वेषणं कुर्यात्, तथा च एतेषां विषयाणां सम्बन्धे राष्ट्रपतये तेन निर्दिष्टेषु अन्तरालेषु प्रतिवेदनानि अर्पयेत्; राष्ट्रपतिश्च एतादृशानि सर्वाणि प्रतिवेदनानि संसदः प्रत्येकसदने पुरःस्थापयेत् तथा तैः सम्बद्धेभ्यः राज्येभ्यः तानि प्रेषयेत् ।]

**३५१.** हिन्दीभाषायाः प्रसारस्य वृद्धिः तस्याः विकासः तथा सा भारतस्य सामासिकसंस्कृतेः, सर्वेषां तत्त्वानां अभिव्यक्तेः साधनं सम्पद्यते, तथा तस्याः प्रकृत्यां हस्तक्षेपमन्तरेण हिन्दुस्थान्याः, अष्टमानुसूच्यां विनिर्दिष्टानां अन्यासां भारतीयभाषाणां च रूपाणां शैल्याः पदानां च आत्मसात्कारेण तथा यत्र आवश्यकं वाञ्छनीयं च भवेत् तत्र तस्याः शब्दभाण्डाराय मुख्यतया संस्कृतात्, गौणतया च अन्यभाषाभ्यः शब्दग्रहणेन तस्याः समृद्धेः सम्पादनं सङ्घस्य कर्तव्यं भवेत् । **हिन्दीभाषायाः विकासार्थं निदेशः ।**

भागः १८

## आपातीयाः उपबन्धाः

आपातस्य उद्घोषणा ।

३५२. (१) यदि राष्ट्रपतिः समाहितः भवति यद् घोरः आपातः विद्यते यतः हि युद्धेन बाह्याक्रमणेन वा [1][सशस्त्रविद्रोहेण वा] भारतस्य, तस्य राज्यक्षेत्रस्य कस्यापि भागस्य वा सुरक्षा सङ्कटापन्ना अस्ति, तर्हि सः उद्घोषणा द्वारा [2][सम्पूर्णस्य भारतस्य सम्बन्धे अथवा तस्य तादृशस्य भागस्य सम्बन्धे, यः भागः उद्घोषणायां विनिर्दिष्टः भवितुं अर्हति] तदाशयस्य घोषणां कर्तुं क्षमते ।

[3][**स्पष्टीकरणम्**—यदि राष्ट्रपतिः समाहितः भवति यद् युद्धस्य, बाह्याक्रमणस्य सशस्त्रविद्रोहस्य वा सङ्कटं सन्निहितं वर्तते, तर्हि युद्धस्य, बाह्याक्रमणस्य, सशस्त्रविद्रोहस्य वास्तविक्याः घटनायाः पूर्वमपि भारतस्य अथवा भारतराज्यक्षेत्रस्य कस्यापि भागस्य सुरक्षा एवं सङ्कटापन्ना वर्तते इति घोषयन्तीं आपातस्य उद्घोषणां कर्तुं क्षमते ।]

[4][(२) (१) खण्डस्य अधीनं कृता उद्घोषणा उत्तरवर्तिन्या उद्घोषणया परिवर्तिता, प्रतिसंहृता वा भवितुं क्षमते ।

(३) राष्ट्रपतिः (१) खण्डस्य अधीनं उद्घोषणां अथवा तादृश्यां उद्घोषणायां परिवर्तनकर्त्रीं उद्घोषणां तावत् न कुर्यात् यावत् सङ्घस्य मन्त्रिमण्डलस्य (अर्थात् ७५-तमानुच्छेदस्य अधीनं या परिषत् प्रधानमन्त्रिणा तथा मन्त्रिमण्डलस्तरीयैः अन्यैः मन्त्रिभिः सम्भूय भवति तस्याः) एतादृशः विनिश्चयः, यत् एतादृशी, उद्घोषणा कृता भवितुं अर्हति इति तस्मै संसूचितः न भवति;

(४) एतद् अनुच्छेदस्य अधीनं कृता प्रत्येक उद्घोषणा संसदः उभयोः सदनयोः समक्षं स्थापिता भवेत्, यत्र च सा पूर्ववर्तिनीं उद्घोषणां प्रतिसहरन्ती उद्घोषणा नास्ति तत्र सा एकमासावधेः समाप्तौ, यदि उक्तावधेः सामाप्त्याः पूर्वं एवं संसदः उभाभ्यां सदनाभ्यां पारिताभ्यां सङ्कल्पाभ्यां अनुमोदिता न भवति, तर्हि प्रवर्तनात् प्रविरमेत्—

परन्तु एतादृशी कापि उद्घोषणा(या पूर्ववर्तिनीं उद्घोषणां प्रतिसंहरन्ती उद्घोषणा नास्ति), यदि तस्मिन् काले क्रियते, यदा लोकसभा विघटिता वर्तते, अथवा लोकसभायाः विघटनं अस्मिन् खण्डे निर्दिष्टे एकमासावधौ भवति तथा यदि उद्घोषणायाः अनुमोदकः सङ्कल्पः राज्यसभया पारितः अस्ति किन्तु एतादृश्याः उद्घोषणायाः सम्बन्धे कोपि सङ्कल्पः लोकसभया एतादृशस्य कालावधेः समाप्तेः प्राक् पारितः न भवति, तर्हि सा उद्घोषणा एतादृशात् दिनाङ्कात्, यस्मिन् दिनाङ्के लोकसभा तस्याः पुनर्घटनानन्तरं प्रथमवारं उपविशति, त्रिंशद् दिनानां समाप्तौ प्रवर्तनात् प्रविरमेत् । यदि तादृशस्य त्रिंशद्दिनावधेः समाप्तेः प्राक् तदुद्घोषणायाः अनुमोदकः सङ्कल्पः पारितः न भवति ।

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३७-अनुभागेन "आभ्यन्तर्या अशान्त्याः" इत्येताभ्यां शब्दाभ्यां प्रति संनिवेशितौ (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४८-अनुभागेन एतत् अन्तर्वेशितम् (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३७-अनुभागेन अन्तर्वेशितम् (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन (२), (२अ), (३)खण्डेभ्यः प्रति एते खण्डाः संनिवेशिताः ।

(५) एवं अनुमोदिता उद्घोषणा, यदि प्रतिसंहृता न भवति, तर्हि (४) खण्डस्य अधीनं उद्घोषणायाः अनुमोदकयोः सङ्कल्पयोः द्वितीयस्य सङ्कल्पस्य पारणस्य दिनाङ्कात् षण्णां मासानां अवधेः समाप्तौ प्रवर्तनाद् प्रविरमेत्—

परन्तु यदि, यावद्वारं च, एतादृश्याः उद्घोषणायाः प्रवृत्तेः अनुवर्तनार्थं अनुमोदकः सङ्कल्पः संसदः उभाभ्यां सदनाभ्यां पारितः भवति तर्हि तावद्वारं प्रतिसंहरणादृते, सा यस्मिन् दिनाङ्के अस्य खण्डस्य अधीनं अन्यथा विरता अभविष्यत्, तस्मात् दिनाङ्कात् षण्मासानां कालावधौ अविरतं प्रवर्तमाना अनुवर्तेत—

अपरं च यदि लोकसभायाः विघटनं एतादृशस्य षण्णां मासानां अवधेः अभ्यन्तरे भवति, तथा एतादृश्याः उद्घोषणायाः प्रवर्तनस्य अनुवर्तनाय अनुमोदनं कुर्वन् सङ्कल्पः राज्यसभया पारितः भवति किन्तु एतस्याः उद्घोषणायाः प्रवर्तनस्य अनुवर्तनस्य सम्बन्धे कोपि सङ्कल्पः तदवधेः अभ्यन्तरे लोकसभया पारितः न भवति, तर्हि सा उद्घोषणा यस्मिन् दिनाङ्के लोकसभा तस्याः पुनर्घटनान्तरं प्रथमवारे उपविशति तस्मात् दिनाङ्कात् त्रिंशद् दिनावधेः समाप्तौ प्रवर्तनात् प्रविरमेत्, यदि एतादृशस्य त्रिंशद्दिनावधेः समाप्तेः प्राक्, उद्घोषणायाः प्रवृत्तेः अनुवर्तनाय अनुमोदनं कुर्वन् सङ्कल्पः लोकसभयापि पारितः न भवति ।

(६) (४) खण्डस्य, (५) खण्डस्य च प्रयोजनानां अर्थे सङ्कल्पः संसदः अन्यतरेण सदनेन तत्सदनस्य समस्त-सदस्यसङ्ख्यायाः मध्ये बहुमतेन, तथा च तस्य सदनस्य उपस्थितानां मतं च ददतां सदस्यानां तृतीयांशद्वयाद् अन्यूनेन बहुमतेन एव पारितः भवितुं अर्हति ।

(७) पूर्वगामिषु खण्डेषु किमपि सत्यपि, यदि लोकसभा (१) खण्डस्य अधीनं कृतायाः उद्घोषणायाः, अथवा एतादृश्यां उद्घोषणायां परिवर्तनं कुर्वन्त्याः उद्घोषणायाः अननुमोदनं कुर्वन्तं, अथवा यथायथं एतस्याः प्रवर्तनस्य अननुमोदनं कुर्वन्तं सङ्कल्पं पारयति, तर्हि राष्ट्रपतिः एतादृशीं उद्घोषणां प्रतिसंहरेत् ।

(८) यत्र (१) खण्डस्य अधीनं कृतायाः उद्घोषणायाः अथवा एतादृश्यां उद्घोषणायां परिवर्तनं कुर्वन्त्याः उद्घोषणायाः यथायथं अननुमोदनं कुर्वन्तं, अथवा एतस्याः प्रवृत्तेः अनुवर्तनस्य अननुमोदनं कुर्वन्तं सङ्कल्पं प्रस्तावितं कर्तुं स्वीयाशयस्य सूचना लोकसभायाः समस्तसदस्यसङ्ख्यायाः दशमभागसङ्ख्याकैः सदस्यैः स्वहस्ताङ्किता लिखित-रूपेण—

(क) यदि लोकसभा सत्रस्थिता अस्ति तर्हि अध्यक्षं प्रति; अथवा

(ख) यदि लोकसभा सत्रस्थिता न अस्ति तर्हि राष्ट्रपतिं प्रति,

दत्ता भवति, तत्र एतादृशस्य सङ्कल्पस्य विचारणायाः प्रयोजनार्थं यथायथं अध्यक्षेण राष्ट्रपतिना वा, एतादृशी सूचना प्राप्ता भवति तद्दिनाङ्कात् चतुर्दशदिनानां अभ्यन्तरे, लोकसभायाः विशेषोपवेशनं कृतं भवेत् ।]

[1][[2][(९)] एतदनुच्छेदेन राष्ट्रपतये प्रदत्ता शक्तिः युद्धस्य, बाह्याक्रमणस्य, [3][सशस्त्रविद्रोहस्य वा] अथवा युद्धस्य, बाह्याक्रमणस्य, [3][सशस्त्रविद्रोहस्य वा] सन्निहित सङ्कटस्य वा इत्येतैः विभिन्नैः आधारैः विभिन्नाः

---

१. संविधानस्य (अष्टत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ५-अनुभागेन अन्तर्वेशितम् (भूतलक्षि-प्रभावेण) ।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३७-अनुभागेन "(४)" तमः खण्डः "(९)" तमः इति अङ्कितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन "आभ्यन्तर्या अशान्त्याः" इत्येताभ्यां शब्दाभ्यां प्रति एतौ शब्दौ संनिवेशितौ (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

उद्घोषणाः कर्तुं शक्तिं अन्तर्भावयति, यद्यपि राष्ट्रपतिना (१) खण्डस्य अधीनं कापि उद्घोषणा पूर्वं कृता स्यात् न वा, अथवा एतादृशी उद्घोषणा प्रवर्तमाना विद्यते न वा।

[1][ * * * * ]

**आपातस्य-उद्घोषणायाः प्रभावः।**

३५३. यदा आपातस्य उद्घोषणा प्रवर्तते तदा—

(क) एतत्संविधाने किमपि सत्यपि, सङ्घस्य कार्यपालिका शक्तिः कस्मैचिदपि राज्याय तेन स्वकार्यपालिका शक्तिः कया रीत्या प्रयोक्तव्या इति विषये निदेशदानपर्यन्तं विस्तृता भवेत्;

(ख) कस्यापि विषयस्य सम्बन्धे, तद्विषयस्य सङ्घसूच्यां प्रगणिते न सत्यपि, विधिनिर्माणस्य संसदः शक्तौ एतादृशानां विधीनां निर्माणस्य शक्तिः अपि अन्तर्भवेत् ये (विधयः) तद्विषयस्य सम्बन्धे सङ्घाय अथवा सङ्घस्य अधिकारिभ्यः प्राधिकारिभ्यश्च शक्तीः ददति तेषु कर्तव्यानां च अधिरोपणं प्राधिकृतं कुर्वन्ति।

[2][परन्तु यत्र आपातस्य उद्घोषणा भारतस्य राज्यक्षेत्रस्य कस्मिंश्चिद् भागे एव प्रवृत्ता अस्ति तत्र
(प्रथमः) (क) खण्डाधीनं निदेशान् दातुं सङ्घस्य कार्यपालिका शक्तिः,

(द्वितीयः) (ख) खण्डाधीनं विधि निर्माणे संसदः शक्तिश्च,

यस्मिन् राज्ये अथवा तस्य कस्मिन् अपि भागे आपातस्य उद्घोषणा प्रवृत्ता अस्ति तस्मात् अन्यतमस्मिन् कस्मिन् अपि राज्ये अपि विस्तृता भवेत् यदि यावत् पर्यन्तं च भारतस्य राज्यक्षेत्रस्य तस्य कस्यापि भागस्य वा सुरक्षा, भारतस्य राज्यक्षेत्रस्य एतादृशे भागे यत्र आपातस्य उद्घोषणा प्रवृत्ता अस्ति तस्मिन् तत्सम्बन्धे वा प्रवृत्तैः कार्यकलापैः सङ्कटापन्ना भवति।]

**यदा आपातस्य उद्घोषणा प्रवर्तते तदा राजस्वविभाजन-सम्बन्धिनां उपबन्धानां अनुप्रयोगः।**

३५४. (१) यदा आपातस्य उद्घोषणा प्रवर्तते तदा राष्ट्रपतिः आदेशेन निदेष्टुं क्षमते यद् एतस्य संविधानस्य २६८-तमानुच्छेदात् २७९-तमानुच्छेदपर्यन्तानां सर्वेषां अनुच्छेदानां सर्वे अथवा केऽपि उपबन्धाः, एतादृशे कस्मिन् अपि कालावधौ, यादृशः कालावधिः तस्मिन् आदेशे विनिर्दिष्टः भवितुं अर्हति, यः (कालावधिः) च कस्यामपि दशायां तस्य वित्तीयवर्षस्य समाप्तेः अनन्तरं विस्तृतः न भवेत् यस्मिन् एतादृशी उद्घोषणा प्रवर्तनात् प्रविरमति, तादृशानां अपवादानां उपान्तरणानां च अधीनं प्रभाविनः भवेयुः यादृशान् सः उचितान् मन्यते।

(२) (१) खण्डस्य अधीनं कृतः प्रत्येकः आदेशः तस्य करणात् अनन्तरं यथासम्भवं शीघ्रं संसदः प्रत्येकसदनस्य पुरतः स्थाप्येत।

**बाह्याक्रमणात्, आभ्यान्तर्याः अशान्तेश्च, राज्यानां संरक्षणस्य सम्बन्धे सङ्घस्य कर्तव्यता।**

३५५. बाह्याक्रमणात्, आभ्यन्तर्याः अशान्तेश्च प्रत्येकराज्यस्य संरक्षणं, तथा प्रत्येकराज्यस्य शासनं एतस्य संविधानस्य उपबन्धानां अनुसारं प्रवर्त्यते इति सुनिश्चितीकरणं सङ्घस्य कर्तव्यं भवेत्।

**राज्येषु [illegible]निक तन्त्रस्य विफ[illegible] दशायां उपबन्धाः।**

३५६. (१) यदि कस्यापि राज्यस्य राज्यपालात् [3][ * * * ] प्रतिवेदनस्य प्राप्तौ अन्यथा वा राष्ट्रपतिः समाहितः भवति यद् एतादृशी स्थितिः समुत्पन्ना विद्यते यस्यां तस्य राज्यस्य शासनं एतत् संविधानस्य उपबन्धानां अनुसारेण प्रवर्तयितुं न शक्यते, तर्हि राष्ट्रपतिः उद्घोषणा द्वारा—

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७२ इत्यस्य ३७-अनुभागेन (५) खण्डः लोपितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ४९-अनुभागेन अन्तर्वेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

३. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखाद् वा" इत्येतौ शब्दौ लोपितौ।

(क) तद्राज्यशासनस्य सर्वाणि कृत्यानि किमपि कृत्यं वा, तथा च राज्यपाले[1] [ * * * ], अथवा राज्यस्य विधानमण्डलं वर्जयित्वा राज्यस्य कस्मिन् अपि निकाये, प्राधिकारिणि वा निहिताः, तेन तेन वा प्रयोक्तव्याः सर्वाः शक्तीः कांचित् वा शक्तिं, स्वायत्तीकर्तुं क्षमते;

(ख) एवं घोषयितुं क्षमते यद् राज्यविधानमण्डलस्य शक्तयः संसदः प्राधिकारेण, तदधीनं वा प्रयोक्तव्याः भवेयुः ;

(ग) राज्ये केनापि निकायेन, प्राधिकारिणा वा सम्बद्धानां एतत् संविधानस्य केषामपि उपबन्धानां प्रवर्तनं पूर्णतः अंशतः वा निलम्बितं कर्तुं उपबन्धैः सहितान् तादृशान् प्रासङ्गिकान्, आनुषङ्गिकान् च उपबन्धान् निर्मातुं क्षमते, यादृशान् राष्ट्रपतिः उद्घोषणायाः उद्देश्यानि प्रभाववन्ति सम्पादयितुं आवश्यकान् वाञ्छनीयान् च प्रत्येति—

परन्तु एतत् खण्डगतं किमपि राष्ट्रपतिं, उच्चन्यायालये निहितानां, तेन वा प्रयोक्तव्यानां शक्तीनां कामपि स्वायत्तीकर्तुं, अथवा एतत् संविधानस्य उच्चन्यायालयैः सम्बद्धानां केषामपि उपबन्धानां प्रवर्तनं पूर्णतः अंशतः वा निलम्बितं विधातुं प्राधिकृतं न कुर्यात् ।

(२) एतादृशी कापि उद्घोषणा कयापि उत्तरवर्तिन्या उद्घोषणया प्रतिसंहृता परिवर्तिता वा भवितुं शक्यते ।

(३) एतदनुच्छेदस्य अधीनं कृता प्रत्येकउद्घोषणा संसदः प्रत्येकसदनस्य समक्षं स्थाप्येत, तथा यत्र सा पूर्ववर्तिन्याः उद्घोषणायाः प्रतिसंहर्त्री उद्घोषणा न भवति, तत्र सा मासद्वयस्य समाप्तौ, यदि सा तत्कालावधेः समाप्तेः प्राक् संसदः उभाभ्यां सदनाभ्यां सङ्कल्पेन अनुमोदिता न जायते प्रवर्तनात् विरमेत्—

परन्तु यदि एतादृशी कापि उद्घोषणा (या पूर्ववर्तिन्याः उद्घोषणायाः प्रतिसंहर्त्री उद्घोषणा न भवति) तस्मिन् काले कृता भवति यदा लोकसभा विघटिता वर्तते, अथवा लोकसभायाः विघटनं एतत्खण्डे निर्दिष्टस्य मासद्वयकालावधेः अभ्यन्तरे सम्पद्यते, तथा च यदि उद्घोषणायाः अनुमोदकः सङ्कल्पः राज्यसभया पारितः अस्ति, किन्तु एतादृश्याः उद्घोषणायाः सम्बन्धे लोकसभया तत्कालावधेः समाप्तेः प्राक् कोऽपि सङ्कल्पः पारितः न भवति, तर्हि सा उद्घोषणा यस्मिन् लोकसभा स्वकीयपुनर्गठनस्य अनन्तरं प्रथमवारं उपविशति तस्मात् दिनाङ्कात्, त्रिंशद् दिनानां समाप्तौ प्रवर्तनात् विरमेत्, यदि उक्तस्य त्रिंशद्दिनावधेः समाप्तेः प्राक् तदुद्घोषणायाः अनुमोदकः संङ्कल्पः लोकसभयापि पारितः न भवति ।

(४) एवं अनुमोदिता उद्घोषणा, यदि प्रतिसंहृता न भवति तर्हि [2][उद्घोषणायाः करणदिनाङ्कात् षण्णां मासानां कालावधेः समाप्तौ] प्रवर्तनात् विरमेत्—

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य २९अनुभागेन अनुसूच्या च "यथायथं राज्यपाले राजप्रमुखे वा" इत्येतेभ्यः शब्देभ्यः प्रति एतत् संनिवेशितम् ।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३८-अनुभागेन (३) खण्डस्य अधीनं उद्घोषणायाः "अनुमोदकयोः सङ्कल्पयोः द्वितीयस्य सङ्कल्पस्य पारणस्य दिनाङ्कात् एकवर्षस्य" इत्येतस्मात् प्रति एतत् संनिवेशितं (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) । संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५०-अनुभागेन "षण्णां मासानां" इत्येताभ्यां मूलपाठस्थिताभ्यां शब्दाभ्यां प्रति "एकवर्षस्य" इत्येतत् पदं संनिवेशितं आसीत् (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

परन्तु यदि, यावद्वारं च एतादृश्याः उद्घोषणायाः प्रवर्तनस्य अनुवर्तनार्थं अनुमोदकः सङ्कल्पः संसदः उभाभ्यां सदनाभ्यां पारितः भवति तर्हि, तावद्वारं च सा उद्घोषणा, यदि प्रतिसंहृता न चेत्, तस्माद् दिनाङ्कात् यस्मिन् सा एतत्खण्डस्य अधीनं अन्यथा प्रवर्तनात् प्रविरमेत्, [1][षण्णां मासानां] अपरं कालावधिं यावत् प्रवर्तेत, किन्तु कापि एतादृशी उद्घोषणा कस्यामपि दशायां वर्षत्रयादधिकं प्रवर्तमाना न भवेत् —

अपरं च, यदि लोकसभायाः विघटनं षण्णां मासानां कस्यापि एतादृशस्य कालावधेः अभ्यन्तरे भवति, तथा च एतादृश्याः उद्घोषणायाः प्रवर्तनस्य अनुवर्तनार्थं अनुमोदकः सङ्कल्पः राज्यसभया पारितः अस्ति किन्तु एतादृश्याः उद्घोषणायाः प्रवर्तनस्य अनुवर्तनविषये कोपि सङ्कल्पः लोकसभया उक्तकालावधौ पारितः न भवति, तर्हि सा उद्घोषणा यस्मिन् दिने लोकसभा तस्य पुनर्घटनस्य अनन्तरं प्रथमवारं उपविशति, तस्मात् दिनाङ्कात्, त्रिंशद्-दिनानां समाप्तौ प्रवर्तनात् प्रविरमेत्; यदि उक्तस्य त्रिंशद्दिन कालावधेः समाप्तेः प्राक् तदुद्घोषणायाः प्रवर्तनस्य अनुवर्तनार्थं अनुमोदनं कुर्वन् सङ्कल्पः लोकसभया अपि पारितः न भवति ।

[2][(५) (४) खण्डे किमपि सत्यपि, (३) खण्डस्य अधीनं अनुमोदितायाः उद्घोषणयाः प्रवृत्तेः अनुवर्तनस्य सम्बन्धे एतादृश्याः उद्घोषणायाः करणस्य दिनाङ्कात् एकवर्षस्य समाप्तेः परं कस्मिन् अपि अवधौ तस्याः प्रवृत्तेः अनुवर्तनसम्बन्धे सङ्कल्पः संसदः कतरेण अपि सदनेन पारितः केवलं तदा भवेत् यदा;

(क) एतादृशस्य सङ्कल्पस्य पारणसमये समस्तभारते, अथवा यथायथं समस्तराज्ये, राज्यस्य कस्मिंश्चिद् अपि भागे वा आपातस्य उद्घोषणा प्रवृत्ता वर्तते; तथा

(ख) निर्वाचनायोगः प्रमाणयति यद् (३) खण्डानुसारं अनुमोदितायाः उद्घोषणायाः प्रवृत्तेः एतादृशे सङ्कल्पे विनिर्दिष्टकालावधौ अनुवर्तनं, सम्बन्धितराज्यस्य विधानसभायै सामान्यनिर्वाचनकरणे प्राप्तानां बाधानां कारणेन, आवश्यकं विद्यते ।]

[3][परन्तु (१) खण्डस्य अधीनं ६-१०-१९८३ दिनाङ्के कृतायाः पञ्जाबराज्यविषयिणी उद्घोषणायाः विषये अस्मिन् खण्डे "एकवर्षस्य समाप्तेः परं कोपि कालावधिः" इत्येतत् प्रति निर्देशस्य वर्षद्वयस्य समाप्तेः परं कोपि कालावधिः इत्येनं प्रति निर्देशः, इति अर्थः ग्राह्यः ।]

**३५६-तमानुच्छेदस्य अधीनं कृतायाः उद्घोषणायाः अधीनं विधायिनीनां शक्तिनां प्रयोगः ।**

३५७. (१) यत्र ३५६-तमानुच्छेदस्य (१) खण्डस्य अधीनं कृतया उद्घोषणया घोषितं वर्तते यद् राज्यस्य विधानमण्डलस्य शक्तयः संसदा, तस्याः प्राधिकारस्य अधीनं वा प्रयोक्तव्याः भवेयुः, तत्र

(क) राज्यविधानमण्डलस्य विधिनिर्माणशक्तेः राष्ट्रपतये प्रदानार्थं तथा एवं प्रदत्तायाः शक्तेः अन्यस्मै कस्मैचिद् अपि प्राधिकारिणे, यं राष्ट्रपतिः तदर्थं विनिर्दिशेत्, एतादृशानां प्रतिबन्धानां अधीनं येषां अधिरोपणं सः उचितं मन्यते, प्रत्यायोजनार्थं राष्ट्रपतिं प्राधिकृतं कर्तुं संसदः ;

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३८-अनुभागेन "एकवर्षस्य" इत्येतस्मात् प्रति एतौ शब्दौ संनिवेशितौ (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) । संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५०-अनुभागेन "षण्णां मासानां" इत्येताभ्यां मूलपाठस्थिताभ्यां शब्दाभ्यां प्रति "एकवर्षस्य" इत्येतत् पदं संनिवेशितं आसीत् (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३८-अनुभागेन (५) खण्डात् प्रति एषः खण्डः संनिवेशितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) । (५) खण्डश्च, संविधानस्य (अष्टत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ६-अनुभागेन अन्तर्वेशितः आसीत् (भूतलक्षिप्रभावेण) ।

३. संविधानस्य (अष्टचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९८४ इत्यस्य २-अनुभागेन अन्तर्वेशितः (२६-८-१९८४ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(ख) सङ्घाय तस्य अधिकारिभ्यः, प्राधिकारिभ्यश्च शक्तीः प्रददतां, तेषु कर्तव्यानि वा अधिरोपयतां अथवा शक्तीनां प्रदानं, कर्तव्यानां च अधिरोपणं प्राधिकृतं कुर्वतां विधीनां निर्माणस्य संसदः, अथवा राष्ट्रपतेः अथवा यस्मिन् (क) उपखण्डस्य अधीनं तादृशानां विधीनां निर्माणस्य शक्तिः निहिता वर्तते तादृशस्य अन्यस्य प्राधिकारिणः;

(ग) यदा लोकसभा सत्रस्थिता न विद्यते तदा एतादृशस्य व्ययस्य संसदः स्वीकृतेः लम्बनपर्यन्तं राज्यस्य सञ्चितनिधेः व्ययं प्राधिकृतं कर्तुं च राष्ट्रपतेः,

क्षमता भवेत्।

[1][(२) राज्यविधानमण्डलस्य शक्तेः प्रयोगे संसदा, राष्ट्रपतिना वा (१) खण्डस्य (क) उपखण्डे निर्दिष्टेन प्राधिकारिणा वा निर्मितः कोपि विधिः, यं ३५६-तमानुच्छेदस्य अधीनं कृतायाः उद्घोषणायाः अभावे, संसद्, राष्ट्रपतिः वा, तादृशः अन्यः प्राधिकारी वा निर्मातुं क्षमः न भवेत्, उद्घोषणायाः प्रवर्तनात् प्रविरामस्य अनन्तरं, यावत् क्षमेण विधानमण्डलेन, अन्येन प्राधिकारिणा वा परिवर्तितः, निरसितः, संशोधितः वा न भवति, तावत् पर्यन्तं प्रवर्तने अनुवर्तेत]।

**आपातकाले १९-तमानुच्छेदस्य उपबन्धानां निलम्बनम्।**

**३५८.** [2][(१)] [3][भारतस्य अथवा तस्य राज्यक्षेत्रस्य कस्यापि भागस्य सुरक्षा, युद्धेन बाह्याक्रमणेन वा सङ्कटापन्ना अस्ति इति घोषयन्ती उद्घोषणा यावत् प्रवर्तमाना भवति तावत्] १९-तमानुच्छेदगतं किमपि तृतीये (३) भागे यथा परिभाषितस्य कस्यापि विधेः प्रणयनाय, कस्यापि कार्यपालिककृत्यस्य करणाय च शक्तिं न निर्बन्धयेत् यं निर्मातुं, कर्तुं वा तद्राज्यं तत्खण्डगतानां उपबन्धानां अभावेअक्षमं अभविष्यत्, न निर्बन्धयेत्; किन्तु एवं प्रणीतः कोपि विधिः, उद्घोषणायाः प्रवर्तनस्य विरामे तस्य अक्षमतायाः मात्रां यावत् शीघ्रं प्रभावात् विरमेत् तानि कृतानि अकृतानि च विहाय यानि विधेः ऐवं प्रभावविरामात् प्राक् कृतानि अकृतानि वा।

[4][परन्तु [5][यदि एतादृशी आपातस्य उद्घोषणा] भारतराज्यक्षेत्रस्य कस्मिंश्चिद् भागे एव प्रवर्तमाना अस्ति तदा तावत् च यस्मिन् यस्य कस्मिंश्चिद् भागे वा आपातस्य उद्घोषणा प्रवृत्ता न वर्तते तस्य कस्यापि राज्यस्य सङ्घराज्यक्षेत्रस्य वा सम्बन्धे, तस्मिन् राज्ये, सङ्घराज्यक्षेत्रे वा एतदनुच्छेदाधीनं एतादृशः कोपि विधिः प्रणीतः भवितुं, अथवा किमपि कार्यपालिककार्यं कृतं भवितुं शक्यते, यदि यावत् च यस्मिन् आपातस्य उद्घोषणा प्रवर्तमाना अस्ति तस्य भारतराज्यक्षेत्रभागस्य तेन सम्बद्धैः कार्यकलापैः भारतस्य तस्य राज्यक्षेत्रस्य कस्यचिद् भागस्य वा सुरक्षा सङ्कटापन्ना विद्यते।]

[6][(२) (१) खण्डगतं किमपि—

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५१-अनुभागेन (२) खण्डात् प्रति एषः खण्डः संनिवेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३९-अनुभागेन ३५८-तमानुच्छेदः तदनुच्छेदस्य (१) खण्डरूपेण क्रमाङ्कितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन "यावत् आपातस्य उद्घोषणा प्रवर्तमाना भवति तावत्" इत्येतस्मात् प्रति एतत् संनिवेशितम् (२०-६-१९७९ दिनाङ्कात् प्रवर्तमान् प्रभावेण)।

४. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५२-अनुभागेन अन्तर्वेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

५. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ३९-अनुभागेन "यत्र आपातोद्घोषणा" इत्येतस्मात् प्रति एतत् संनिवेशितम् (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

६. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अन्तर्वेशितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

(क) तादृशे कस्मिन् अपि विधौ यस्मिन् एषः आशयः उल्लिखितः न भवति यत् सः विधिः तदानीं प्रवर्तमानया आपातोद्घोषणया सम्बद्धः अस्ति, अथवा

(ख) तादृशं आशयं अन्तर्वेशयतः विधेः अधीनत्वात् अन्यथा कृते कस्मिन् अपि कार्यपालिका कृत्ये-नानुप्रयुज्यते ।]

**आपातकाले तृतीयभागेन प्रदत्ताधिकारणां प्रवर्तनस्य निलम्बनम् ।**

३५९. (१) यत्र आपातस्य उद्घोषणा प्रवर्तते तत्र राष्ट्रपतिः आदेशेन घोषयितुं क्षमते यत् [1][ (२०-तमं, २१-तमं च अनुच्छेदं विहाय) तृतीयभागेन प्रदत्तेषु अधिकारेषु] तादृशानां प्रवर्तनार्थं यादृशाः तस्मिन् आदेशे उल्लिखिताः भवेयुः, कस्मिन् अपि न्यायालये समावेदनस्य अधिकारः तथा एवं उल्लिखितान् अधिकारान् प्रवर्तयितुं कस्मिन् अपि न्यायालये लम्बिताः सर्वाः कार्यप्रवृत्तयः तं कालावधिं यावत् यस्मिन् उद्घोषणा प्रवर्तते अथवा ततः अल्पतरं तादृशं कालावधिं यावत् यादृशः आदेशेः विनिर्दिष्टः भवेत् निलम्बिताः तिष्ठेयुः ।

[2][ (१अ) यावत् २१ (२० तमं, २१ तमं, अनुच्छेदं विहाय) [1][तृतीयभागेन प्रदत्तान् कान् अपि अधिकारान्] उल्लेखयन् प्रथमखण्डाधीनं (१) कृतः आदेशः प्रवृत्तः अस्ति तावत् तादृशान् अधिकारान् प्रददत् एतस्मिन् भागे गतं किमपि एतस्मिन् भागे यथापरिभाषितस्य राज्यस्य कस्यापि विधेः प्रणयनाय, कस्यापि कार्यपालिककृत्यस्य करणाय च शक्तिं न निर्बन्धयेत् यत्प्रणेतुं कर्तुं वा राज्यं तस्मिन् भागे अन्तर्विष्टानां उपबन्धानां अभावे क्षमं अभविष्यत् किन्तु एवं प्रणीतः कोपि विधिः, उपर्युक्तस्य आदेशस्य विरामे तस्य अक्षमताया मात्रां यावत् शीघ्रं एव प्रभावात् विरतः भवेत् तानि कृतानि अकृतानि वा विहाय यानि तद् विधेः प्रवर्तनस्य विरमात् प्राक् कृतानि अकृतानि वा ।

[3][परन्तु यत्र एतादृशी आपातोद्घोषणा भारतराज्यक्षेत्रस्य कस्मिंश्चिद् भागे एव प्रवर्तमाना अस्ति, तदा तावत् च यस्मिन्, यस्य कस्मिंश्चिद् भागे वा आपातस्य उद्घोषणा प्रवृत्ता न वर्तते तस्य कस्यापि राज्यस्य, सङ्घराज्य-क्षेत्रस्य वा सम्बन्धे, तस्मिन् राज्ये, सङ्घराज्यक्षेत्रे वा एतादृशः कोपि विधिः प्रणीतः भवितुं, अथवा किमपि कार्य-पालिकं कृत्यं कृतं भवितुं शक्यते यदि यावत् च यस्मिन् आपातस्य उद्घोषणा प्रवर्तमाना अस्ति तस्य भारतराज्य-क्षेत्रभागस्य तेन सम्बद्धैः कार्यकलापैः भारतस्य तस्य राज्यक्षेत्रस्य कस्यचित् भागस्य वा, सुरक्षा सङ्कटापन्ना विद्यते] ।

[4][ (१आ) (१अ) खण्डगतं किमपि—

(क) तादृशे कस्मिन् अपि विधौ यस्मिन् एषः आशयः उल्लिखितः न भवति यत् सः विधिः तदानीं प्रवर्तमानया उद्घोषणया सम्बद्धः अस्ति; अथवा

(ख) तादृशं आशयं अन्तर्वेशयतः विधेः अधीनत्वात् अन्यथा कृते कस्मिन् अपि कार्यपालिकायाः कृत्ये नानुप्रयुज्यते ।]

---

१. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७२ इत्यस्य ४०-अनुभागेन "तृतीयभागेन प्रदत्तेषु अधिकारेषु" इत्येतस्मात् प्रति एतत् संनिवेशितं (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (अष्टत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ७-अनुभागेन अन्तर्वेशितः (भूतलक्षि-प्रभावेण) ।

३. संविधानस्य (द्विचत्वारिंशत्तमं संविधानं) अधिनियमः, १९७६ इत्यस्य ५३-अनुभागेन अन्तर्वेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ४०-अनुभागेन अन्तर्वेशितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(२) पूर्वोक्तप्रकारेण कृतस्य आदेशस्य विस्तारः समस्तभारतराज्यक्षेत्रे, तस्य कस्यचित् भागे वा भवेत्—

[1][परन्तु यत्र आपातोद्घोषणा भारतराज्यक्षेत्रस्य कस्मिंश्चिद् भागे एव प्रवर्तमाना अस्ति तत्र एतादृशस्य आदेशस्य विस्तारः भारतराज्यक्षेत्रस्य कतमस्मिन् अन्यस्मिन् भागे केवलं तदा भवेत्; यदा राष्ट्रपतिः समाहितः अस्ति, विस्तारं आवश्यकं मन्यते च यतः यस्मिन् आपातस्य उद्घोषणा प्रवृत्ता अस्ति तस्मिन् भारत राज्यक्षेत्रभागे प्रवृत्तैः तेन सम्बद्धैः वा कार्यकलापैः भारतस्य अथवा तस्य कस्यचिद् अपि भागस्य सुरक्षा सङ्कटापन्ना विद्यते ।]

(३) (१) खण्डस्य अधीनं कृतः प्रत्येकं आदेशः तस्य करणात् अनन्तरं शीघ्रं संसदः प्रत्येकसदनस्य समक्षं स्थाप्येत ।

**वित्तीयस्यापातस्य विषये उपबन्धाः ।**

३६०. (१) यदि राष्ट्रपतिः समाहितः भवति यद् एतादृशी स्थितिः उत्पन्ना विद्यते यतः भारतस्य तद्राज्यक्षेत्रस्य कस्यापि भागस्य वा वित्तीयं स्थायित्वं प्रत्ययः वा सङ्कटापन्ने वर्तते, तर्हि सः उद्घोषणया तदाशयस्य घोषणां कर्तुं क्षमते ।

[2][(२) (१) खण्डस्य अधीनं कृता उद्घोषणा—

(क) पश्चाद्वर्तिन्या उद्घोषणया प्रतिसंहृता परिवर्तिता वा भवितुं क्षमते;

(ख) संसदः प्रत्येकसदनस्य समक्षं स्थाप्येत;

(ग) मासद्वयस्य समाप्तौ प्रवर्तनात् प्रविरमेत् यदि एतत् कालावधेः समाप्तेः प्राक् सा संसदः उभयोः सदनयोः सङ्कल्पाभ्यां अनुमोदिता न जायते—

परन्तु यदि एतादृशी उद्घोषणा तस्मिन् काले कृता अस्ति यदा लोकसभा विघटिता वर्तते, अथवा (क) खण्डे निर्दिष्टमासद्वयकालावधौ लोकसभायाः विघटनं जायते तथा च उद्घोषणायाः अनुमोदकः सङ्कल्पः राज्यसभया पारितः अस्ति किन्तु एतादृश्याः उद्घोषणायाः सम्बन्धे तदवधेः समाप्तेः प्राक् कोपि सङ्कल्पः लोकसभया पारितः न भवति, तर्हि सा उद्घोषणा यस्मिन् दिने लोकसभा तस्य पुनर्घटनस्य अनन्तरं प्रथमवारं उपविशति तस्मात् दिनाङ्कात् त्रिंशद् दिनावधेः समाप्तौ प्रवर्तनात् प्रविरमेत्; यदि उक्तस्य त्रिंशद्दिनावधेः समाप्तेः प्राक् तदुद्घोषणायाः अनुमोदकः सङ्कल्पः लोकसभयापि पारितः न भवति ।]

(३) (१) खण्डे उल्लिखिता उद्घोषणा यस्मिन् प्रवर्तते तस्मिन् कालावधौ सङ्घस्य कार्यपालिका शक्तिः कस्मैचित् अपि राज्याय वित्तीयोचित्यसम्बन्धिनः तादृशान् सिद्धातान् पालयितुं, यादृशाः निदेशेषु विनिर्दिष्टाः भवेयुः निदेशदानपर्यन्तं तथा तादृशानां अन्येषां निदेशानां, यादृशान् राष्ट्रपतिः तत्प्रयोजनार्थं आवश्यकान् उचितान् च मन्येत, दानपर्यन्तं विस्तृता भवेत् ।

एतत्संविधाने किमपि सत्यपि—

(क) एतादृशे कस्मिन् अपि निदेशे—

(प्रथमः) कस्यापि राज्यस्य कार्याणां सम्बन्धे सेवां कुर्वतां सर्वेषां जनानां, अथवा तेषां कस्यापि वर्गस्य वा वेतनेषु, भक्तेषु च ह्रासं अपेक्षमाणाः उपबन्धाः ;

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५३-अनुभागेन अन्तर्वेशितः (३-१-१९७७ दिनाङ्कात् प्रवर्त्तमान प्रभावेण)

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ४१-अनुभागेन (२) खण्डात् प्रति संनिवेशितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(२) धनविषयकानां अन्यविधेयकानां च यानि २०७-तमानुच्छेदस्य उपबन्धाः विषयीकुर्वन्ति, राज्यविधानमण्डलेन तेषां पारणानन्तरं राष्ट्रपतेः विचारार्थं रक्षणं अपेक्षमाणाः उपबन्धाः, अन्तर्भवेयुः ।

(ख) यस्मिन् एतदनुच्छेदस्य अधीनं कृताः उद्घोषणा प्रवर्तते तस्मिन् कालावधौ उच्चतमन्यायालयस्य, उच्चन्यायालयानां च न्यायाधीशैः सहितानां सङ्घस्य कार्याणां सम्बन्धे सेवां कुर्वतां सर्वेषां जनानां, तेषां कस्यापि वर्गस्य वा वेतनेषु भक्तेषु च ह्रासाय निदेशान् दातुं राष्ट्रपतिः क्षमः भवेत् ।

[1][ * * * * ]

१. संविधानस्य (अष्टत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ८-अनुभागेन (५) खण्डः अन्तर्वेशितः आसीत् (मूतलक्षिप्रभावेण); संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ४१-अनुभागेन लोपितश्च, (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

## भागः १९

# प्रकीर्णकम्

**राष्ट्रपतेः, राज्यपालानां राजप्रमुखानां च संरक्षणम् ।**

३६१. (१) राष्ट्रपतिः, कस्यापि राज्यस्य राज्यपालः राजप्रमुखः वा स्वपदस्य शक्तीनां प्रयोगार्थं, कर्तव्यानां च पालनार्थं अथवा तासां शक्तीनां प्रयोगे, कर्तव्यानां पालने च स्वयं कृतस्य, कृतं इति अभिप्रेतस्य वा कस्यापि कार्यस्य हेतोः कमपि न्यायालयं प्रति उत्तरदायी न भवेत्—

परन्तु ६१-तमानुच्छेदस्य अधीनं दोषारोपस्य अन्वेषणार्थं संसदः अन्यतरेण सदनेन नियुक्तेन अभिहितेन वा केनापि न्यायालयेन, न्यायाधिकरणेन निकायेन वा राष्ट्रपतेः आचरणस्य पुनर्विलोकनं कर्तुं शक्येत—

अपरं च, एतत् खण्डगतस्य कस्यापि एवं अर्थः ग्राह्यः न भवेत् यत् तद् भारतशासनस्य कस्यापि राज्यस्य शासनस्य वा विरुद्धं समुचितकार्यप्रवृत्तेः चालनस्य कस्यापि जनस्य अधिकारं निर्बन्धितं करोति इति ।

(२) राष्ट्रपतेः अथवा कस्यापि राज्यस्य राज्यपालस्य [1][ * * * ] विरुद्धं तस्य पदावधौ कीदृशी अपि दाण्डिककार्यप्रवृत्तिः कस्मिन् अपि न्यायालये संस्थापिता न भवेत् न च अनुवर्त्येत ।

(३) राष्ट्रपतेः अथवा कस्यापि राज्यस्य राज्यपालस्य [1][ * * * ] वा पदावधो तं बन्दीकर्तुं, कारागारे निरोद्धुं वा कस्मात् अपि न्यायालयात् कापि आदेशिका न प्रचालिता भवेत् ।

(४) राष्ट्रपतेः कस्यापि राज्यस्य राज्यपालस्य [1][ * * * ] वा रूपेण स्वपदस्य ग्रहणात् पूर्वं, तत् पश्चाद् वा वैयक्तिकरूपेण कृतस्य कृतं इति अभिप्रेतस्य वा कस्यापि कार्यस्य विषये, राष्ट्रपतेः अथवा एतादृश-राज्यस्य राज्यपालस्य [1][ * * *] विरुद्धं अनुतोषस्य अभ्यर्थनां कुर्वत्यः काः अपि कार्यप्रवृत्तयः तस्य पदावधौ कस्मिन् अपि न्यायालये तावत् संस्थापिताः न क्रियेरन्, यावत् कार्यप्रवृत्तीनां स्वरूपं, तदर्थं वादस्य कारणं एतादृश-कार्यप्रवृत्तीनां संस्थापनं कुर्वतः विवादिनः नाम, वर्णनं, निवासस्थानं, तथा तेन अभ्यर्थितं अनुतोषं च वर्णयन्त्याः लिखितसूचनायाः यथायथं राष्ट्रपतये, अथवा राज्यपालाय [2][ * * * ] दानस्य तस्य कार्यालये उत्सर्जनस्य वा अनन्तरं मासद्वयं व्यतीतं न भवेत् ।

**संसदः राज्यानां विधान-मण्डलानां च कार्य-प्रवृत्तीनां प्रकाशनस्य संरक्षणम् ।**

[3][३६१अ. (१) कोपि जनः संसदः कतरस्यचित् सदनस्य, अथवा यथायथं कस्यापि राज्यस्य विधान-सभायाः अथवा कस्यापि राज्यस्य विधानमण्डलस्य कतरस्यचित् सदनस्य कासामपि कार्यविवरणानां सारतः सत्यस्य प्रतिवेदनस्य कस्मिन् अपि समाचारपत्रे प्रकाशनस्य सम्बन्धे कस्मिन् अपि न्यायालये केनापि प्रकारेण व्यावहारिक्यां दाण्डिक्यां वा कार्यप्रवृत्यां तावद् भागी न भवेत् यावत् तत् प्रकाशनं दुर्भावेन कृतं अस्ति इति प्रमाणितं न भवति—

परन्तु एतत् खण्डगतं किमपि संसदः कतरस्यचित् सदनस्य, यथायथं कस्यापि राज्यस्य विधानसभायाः वा कस्यापि राज्यस्य विधानमण्डलस्य कतरस्यचित् सदनस्य गुप्तोपवेशनस्य कार्यप्रवृत्तीनां प्रतिवेदनस्य प्रकाशनं न विषयीकरोति ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखस्य वा" इत्येतौ शब्दौ लोपितौ ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन "राजप्रमुखाय वा" इत्येतौ शब्दौ लोपितौ ।

३. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ४२-अनुभागेन अन्तर्वेशितः (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(२) (१) खण्डः प्रसारणकेन्द्रद्वारा वितरितस्य कस्यापि कार्यक्रमस्य, सेवायाः वा भागरूपेण वितन्त्रिदूर-सञ्चारणद्वारा प्रसारितानां प्रतिवेदनानां सामग्रीणां वा सम्बन्धे तथा अनुप्रयुज्यते यथा सः समाचारपत्रे प्रकाशितानां प्रतिवेदनानां, सामग्रीणां वा सम्बन्धे अनुप्रयुज्यते

**स्पष्टीकरणम्**—एतस्मिन् अनुच्छेदे "समाचारपत्रं" समाचारपत्रे प्रकाशनार्थं सामग्रीं अन्तर्भावयत् समाचाराभिकरणस्य प्रतिवेदनं अन्तर्भावयति ।]

३६२. [देशीयराज्यानां शासकानां अधिकाराः विशेषाधिकाराश्च ।] संविधानस्य (षड्विंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य २-अनुभागेन निरसितः ।

**कतिपयसन्धिसमयादिभ्यः उद्भूतेषु विवादेषु न्यायालयानां हस्तक्षेपस्य निषेधः ।**

३६३. (१) एतत्संविधाने किमपि सत्यपि, किन्तु १४३-तमानुच्छेदस्य उपबन्धानां अधीनं, न हि उच्चतमन्यायालयस्य नापि अन्यस्य कस्यापि न्यायालयस्य, कस्यापि संधेः, समयस्य, प्रसंविदः, वचनबन्धस्य, "सनदः", एतादृशस्य अन्यस्य लिखितस्य वा, यद् एतस्य संविधानस्य प्रारम्भात् पूर्वं कस्यापि देशीयराज्यस्य शासकेन कृतं, निष्पादितं वा अभूत् तथा यस्मिन् भारताधिनिवेशस्य शासनं तत्पूर्वाधिकारी किमपि शासनं वा एकः पक्षः अभूत् तथा यद् एतादृशस्य प्रारम्भस्य पश्चात् प्रवर्तने वर्तते, अनुवर्त्येत वा, कस्माद् अपि उपबन्धात् उद्भूते कस्मिन् अपि विवादे अथवा एतादृशेन संधिना, समयेन, प्रसंविदा, वचनबन्धेन, सनदाख्येन लेखेन एतादृशेन अन्येन लिखितेन वा सम्बद्धानां एतस्य संविधानस्य उपबन्धानां कस्मादपि प्रोद्भूतस्य कस्यापि अधिकारस्य उद्भूतस्य वा कस्यापि दायित्वस्य, आभारस्य वा विषये कस्मिन् अपि विवादे अधिकारिता भवेत् ।

(२) एतस्मिन् अनुच्छेदे—

(क) "देशीयराज्यं" इत्यनेन किमपि राज्यक्षेत्रं अभिप्रेतं भवति यद् एतस्य संविधानस्य प्रारम्भात् पूर्वं सम्राजा, भारताधिनिवेशस्य शासनेन वा एतादृशराज्यरूपेण अभिमतं आसीत्; तथा

(ख) "शासकः" इत्येतस्मिन् राजा, मुख्यः अन्यः वा कश्चित् जनः, यः एतादृशात् प्रारम्भात् पूर्वं सम्राजा, भारताधिनिवेशस्य शासनेन वा कस्यचिद् अपि देशीयराज्यस्य शासकत्वेन अभिमतः आसीत्, अन्तर्भवति ।

**देशीयराज्यानां शासकेभ्यः प्रदत्तायाः मान्यतायाः समाप्तिः, तेषां निजकोशानां समापनं च ।**

[1][३६३अ. एतस्मिन् संविधाने अथवा तदानीं प्रवृत्ते कस्मिन् अपि विधौ किमपि सत्यपि—

(क) राजा, प्रमुखः, अन्यः वा कश्चित् जनः यः कस्मिन् अपि समये संविधानस्य (षड्विंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य प्रारम्भात् पूर्वं राष्ट्रपतिना देशीयराज्यस्य शासकत्वेन अभिमतः अभूत् अथवा यः कश्चित् जनः एतादृशात् प्रारम्भात् पूर्वं कस्मिन् अपि काले राष्ट्रपतिना एतादृशस्य शासकस्य उत्तराधिकारित्वेन अभिमतः अभूत्, सः एतादृशे प्रारम्भे तदनन्तरं च एतादृशशासकत्वेन, एतादृशशासकस्य उत्तराधिकारित्वेन वा मान्यतां न भजेत ।

(ख) संविधानस्य (षड्विंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य प्रारम्भतः तदनन्तरं च निजकोशः समाप्यते; निजकोशेन सम्बद्धाः सर्वे अपि अधिकाराः, दायित्वानि, आभाराश्च निर्वाप्यन्ते तदनुसारं च (क) खण्डे निर्दिष्टशासकाय, अथवा यथायथं शासकस्य उत्तराधिकारिणे, अथवा अन्यस्मै कस्मैचिद् अपि जनाय निजकोशरूपेण कोपि राशिः न सन्दीयेत ।]

**महावेलापत्तनानां विमानक्षेत्राणां च कृते विशेषोपबन्धाः ।**

३६४. (१) एतस्मिन् संविधाने किमपि सत्यपि, राष्ट्रपतिः लोकाधिसूचनया निदेष्टुं क्षमते यद् अधिसूचनायां विनिर्दिष्टात् दिनाङ्कात् आरभ्य—

(क) संसदा, कस्यापि राज्यस्य विधानमण्डलेन वा निर्मितः कोपि विधिः किमपि महावेलापत्तनं, विमानक्षेत्रं वा न विषयीकुर्यात्, अथवा तादृशानां अपवादानां उपान्तरणानां वा अधीनं विषयीकुर्यात् यादृशाः लोकाधिसूचनायां विनिर्दिष्टाः भवेयुः ; अथवा

---

१. संविधानस्य (षड्विंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य ३-अनुभागेन अन्तर्वेशितः ।

(ख) कोपि वर्तमानः विधिः कस्मिन् अपि महावेलापत्तने, विमानक्षेत्रे वा उक्तदिनाङ्कात् पूर्वं कृतानां अथवा न कृतानां अर्थानां सम्बन्धं विहाय कार्यकरः न भवेत्; अथवा एतादृशे महावेलापत्तने विमानक्षेत्रे वा तादृशानां अपवादानां उपान्तरणानां वा अधीनं यादृशाः लोकाधिसूचनायां विनिर्दिष्टाः भवेयुः कार्यकरः भवेत्।

(२) अस्मिन् अनुच्छेदे—

(क) "महावेलापत्तनं" इत्येतेन किमपि वेलापत्तनं अभिप्रेयते यत् संसदा प्रणीतेन केनापि विधिना केनापि विद्यमानविधिना वा तदधीनं वा महावेलापत्तनत्वेन घोषितं विद्यते, तथा तेन तानि सर्वाणि क्षेत्राणि अन्तर्भाव्यन्ते यानि तस्मिन् काले एतादृशस्य वेलापत्तनस्य सीमानां अन्तर्गतानि भवन्ति;

(ख) "विमानक्षेत्रं" इत्येतेन वायुपथैः वायुयानैः विमानपरिवहणेन च सम्बद्धानां अधिनियमानां प्रयोजनार्थं परिभाषितं विमानक्षेत्रं अभिप्रेयते।

**सङ्घेन दत्तानां निदेशानां अनुवर्तने प्रभाविल्वापादने वा असफलतायाः प्रभावः।**

३६५. यत्र एतत्संविधानस्य उपबन्धेषु कस्यापि अधीनं सङ्घस्य कार्यपालिकाशक्तेः प्रयोगेण दत्तानां केषांचित् निदेशानां अनुवर्तने तेषां प्रभाविल्वापादने वा किंचिद् अपि राज्यं असफलं भवति तत्र राष्ट्रपतेः एषा मतिः विधियुक्ता भवेद् यद् एतादृशी स्थितिः उत्पन्ना वर्तते यस्यां राज्यस्य शासनं एतत्संविधानस्य उपबन्धानां अनुसारेण चालयितुं न हि शक्यते।

**परिभाषाः।**

३६६. अस्मिन् संविधाने प्रसङ्गेन अन्यथा अपेक्षितं चेत् न भवति, निम्नलिखितानां पदानां ते अर्थाः ग्राह्याः ये क्रमशः अत्र तेभ्यः अर्पिताः विद्यन्ते; तद् यथा—

(१) "कृष्यायः" इत्येतेन भारतीयायकरेण सम्बद्धानां अधिनियमानां प्रयोजनार्थं परिभाषितः कृष्यायः अभिप्रेयते;

(२) "आङ्ग्लभारतीयः" इत्येतेन स जनः अभिप्रेयते यस्य पिता, पितृपरम्परायां अन्यः कश्चित् पूर्वजः वा योरोपीयसमुद्भववान् आसीत्, अस्ति वा किन्तु यः भारतराज्यक्षेत्रस्य अधिवासी अस्ति यश्च एतादृशे राज्यक्षेत्रे तत्र सामान्यतया निवसद्भ्यां, न च केवलं अस्थायिप्रयोजनैः स्थिताभ्यां, पितृभ्यां जातः अस्ति, आसीद् वा;

(३) "अनुच्छेदः" इत्येतेन एतत्संविधानस्य अनुच्छेदः अभिप्रेयते;

(४) "उद्धारः" इत्येतेन वार्षिकीणां दानेन धनादानं अन्तर्भाव्यते, "ऋणग्रहणस्य" चापि तदनुसारं अर्थः ग्राह्यः।

[1][ * * * * ]

(५) "खण्डः" इत्येतेन तस्य अनुच्छेदस्य खण्डः अभिप्रेयते यस्मिन् एषः वर्तते;

(६) "निगमकरः" इत्येतेन कोपि आयकरः अभिप्रेयते यावत् हि सः करः समवायैः सन्देयः भवति, एतादृशश्च स करः विद्यते यस्य सम्बन्धे निम्नलिखिताः प्रतिबन्धाः पूर्यन्ते—

(क) यत् सः कृष्यायस्य सम्बन्धे प्रभार्यः नास्ति;

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५४-अनुभागेन (४-अ)-खण्डः अन्तर्वेशितः आसीत् (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण); संविधानस्य (त्रिचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७७ इत्यस्य ११-अनुभागेन लोपितश्च (१३-४-१९७८ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

(ख) यत् तस्मिन् करे प्रवर्तमाने कैः अपि अधिनियमनैः समवायैः प्रदातव्यस्य करस्य सम्बन्धे किमपि व्यवकलनं समवायैः व्यक्तिभ्यः सन्देयेभ्यः लाभांशेभ्यः प्राधिकृतं न भवति;

(ग) यद् भारतीयस्य आयकरस्य प्रयोजनार्थं एतादृशान् लाभांशान् प्राप्नुवतां जनानां पूर्णस्य आयस्य गणनायां, अथवा एतादृशैः जनैः सन्देयस्य अथवा तेभ्यः प्रतिदेयस्य भारतीयस्य आयकरस्य गणनायां एवं सन्दत्तस्य करस्य समाकलनाय कोपि उपबन्धः न विद्यते;

(७) "तत्स्थानिप्रान्तः" "तत्स्थानिदेशीयराज्यं" अथवा "तत्स्थानीयराज्यं" इत्येतैः संशयावस्थासु तादृशः प्रान्तः, तादृशं देशीयराज्यं, राज्यं वा अभिप्रेयते यं यद् वा प्रकृतविशिष्ट प्रयोजनार्थं राष्ट्रपतिः यथा-यथं तत् स्थानिप्रान्तं, तत्स्थानिदेशीयराज्यं, तत्स्थानीयराज्यं वा अवधारितं कुर्यात्;

(८) "ऋणं" इत्येतस्मिन् वार्षिकीणां रूपेण मूलधनराशीनां प्रतिदानार्थं कस्यापि आभारस्य विषये किमपि दायित्वं, तथा कस्याः अपि प्रत्याभूतेः अधीनं किमपि दायित्वं अन्तर्भवति, तथा "ऋणभाराः" इत्येतस्य तदनुसारं अर्थः क्रियेत;

(९) "सम्पत्शुल्कः" इत्येतेन कोपि शुल्कः अभिप्रेयते यः मृत्यौ सङ्क्रामन्त्याः अथवा संसदा कस्यापि राज्यस्य विधानमण्डलेन वा तत्शुल्कसम्बन्धे प्रणीतानां विधीनां उपबन्धानां अधीनं तथा सङ्क्रामती इति रूपेण अवगतायाः सर्वस्याः सम्पत्तेः उक्तविधिभिः तदधीनं वा विहितानां नियमानां अनुसारेण अभिनिश्चिते मूलभूतमूल्ये तन्निर्देशेन वा निर्धारितः भवेत् ।

(१०) "विद्यमानः विधिः" इत्येतेन कोपि विधिः, अध्यादेशः, आदेशः, उपविधिः, नियमः, विनियमः वा अभिप्रेयते यः एतत् संविधानस्य प्रारम्भात् पूर्वं एतादृशस्य विधेः, अध्यादेशस्य, आदेशस्य, उपविधेः, नियमस्य, विनियमस्य वा प्रणयनस्य शक्तिमता केनापि विधानमण्डलेन, प्राधिकारिणा, जनेन वा पारितः निर्मितः वा भवति;

(११) "फेडरल-न्यायालयः" इत्येतेन १९३५-वर्षस्य भारतशासनाधिनियमस्य अधीनं घटितः "फेडरल-न्यायालयः" अभिप्रेयते;

(१२) "भाण्डानि" इत्येतस्मिन् सर्वाणि सामग्र्यः, पण्यानि, वस्तूनि च अन्तर्भवन्ति ;

(१३) "प्रत्याभूतिः" इत्येतस्मिन् कोपि आभारः अन्तर्भवति यः एतस्य संविधानस्य प्रारम्भात् पूर्वं कस्यापि उपक्रमस्य लाभानां कस्मादपि विनिर्दिष्टराशेः न्यूनत्वदशायां सन्दानार्थं अङ्गीकृतः भवेत्;

(१४) "उच्चन्यायालयः" इत्येतेन कोपि न्यायालयः अभिप्रेयते यः एतस्य संविधानस्य प्रयोजनानां अर्थे कस्यचित् अपि राज्यस्य कृते उच्चन्यायालयः मन्यते तथा च एतस्मिन् अन्तर्भवति—

(क) एतत् संविधानस्य अधीनं उच्चन्यायालयरूपेण घटितः, पुनर्घटितः वा भारत-राज्यक्षेत्रे कोपि न्यायालयः; तथा च

(ख) भारतराज्यक्षेत्रे कोपि अन्यः न्यायालयः यः एतत्-संविधानस्य प्रयोजनानां कस्यापि वा प्रयोजनस्य कृते संसदा विधिना उच्चन्यायालयत्वेन घोषितः भवेत्;

(१५) "देशीयराज्यं" इत्येतेन किमपि राज्यक्षेत्रं अभिप्रेयते यत् भारताधिनिवेशशासनेन एतादृश-राज्यत्वेन अभ्यमन्यत;

(१६) "भागः" इत्येतेन एतस्य संविधानस्य भागः अभिप्रेयते;

**भागः १९—प्रकीर्णकम्—अनु० ३६६**

(१७) "निवृत्तिवेतनं" इत्येतेन कस्मै अपि जनाय तस्य सम्बन्धे वा सन्देयं कीदृशमपि, अभिदानमूलं अन्यथा वा, निवृत्तिवेतनं अभिप्रेयते तथा तस्मिन् अन्तर्भवन्ति एवं सन्देयं सेवानिवृत्तिवेतनं, एवं सन्देयं उपदानं, तथा कस्यापि भविष्यनिधेः अभिदानानां तद्वृद्ध्या तदतिरिक्तपरिवर्धनेन सहितं, रहितं वा प्रतिदान-रूपेण सन्देयः कोपि राशिः राशयः वा;

(१८) "आपातस्य उद्घोषणा" इत्येतेन ३५२-तमानुच्छेदस्य प्रथमखण्डस्य अधीनं कृता उद्घोषणा अभिप्रेयते;

(१९) "लोकाधिसूचना" इत्येतेन भारतस्य राजपत्रे अथवा यथायथं राज्यस्य राजपत्रे कृता अधिसूचना अभिप्रेयते;

(२०) "लोहमार्गः" इत्येतस्मिन् न अन्तर्भवति—

(क) कस्मिन् अपि नगरक्षेत्रे पूर्णतया स्थितः रथ्यालोहमार्गः (ट्रामवे); अथवा

(ख) सञ्चारस्य कोपि मार्गः यः पूर्णतया एकस्मिन् राज्ये स्थितः भवेत् यश्च संसदा विधिना लोहमार्गः न अस्ति इति घोषितः भवेत्;

[1][ * * * * ]

[2][(२२) "शासकः" इत्येतेन एतादृशः राजाः, प्रमुखः वा अन्यः जनः अभिप्रेयते यः संविधानस्य (षड्विंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य प्रारम्भात् पूर्वं कस्मिन् अपि काले कस्यापि देशीयराज्यस्य शासकत्वेन मान्यताप्राप्तः अभूत् अथवा यः कश्चित् जनः एतादृशात् प्रारम्भात् पूर्वं कस्मिन् अपि काले राष्ट्र-पतिना एतादृशस्य शासकस्य उत्तराधिकारित्वेन मान्यताप्राप्तः अभूत्;]

(२३) "अनुसूची" इत्येतेन एतत् संविधानस्य अनुसूची अभिप्रेयते;

(२४) "अनुसूचितजातयः" इत्येतेन तादृश्यः जातयः, मूलवंशाः, जनजातयः वा अथवा तादृशीनां जातीनां, मूलवंशानां, जनजातीनां वा भागाः तदन्तर्गताः उपवर्गाः वा अभिप्रेयन्ते ये ३४१-तमानुच्छेदस्य अधीनं एतत् संविधानस्य प्रयोजनार्थं अनुसूचितजातयः मन्यन्ते;

(२५) "अनुसूचितजनजातयः" इत्येतेन एतादृश्यः जनजातयः जनजातिसमुदायाः वा, अथवा एतादृशीनां जनजातीनां जनजातिसमुदायानां वा भागाः तदन्तर्गताः उपवर्गाः वा अभिप्रेयन्ते ये ३४२-तमा-नुच्छेदस्य अधीनं एतत् संविधानस्य प्रयोजनार्थं अनुसूचित जनजातयः मन्यन्ते;

(२६) "प्रतिभूतयः" इत्येतस्मिन् निधिपत्राणि अपि अन्तर्भवन्ति;

[3][ * * * * ]

(२७) "उपखण्डः" इत्येतेन तस्य खण्डस्य उपखण्डः अभिप्रेयते यस्मिन् एषः शब्दः वर्तते;

(२८) "कराधानं" इत्येतस्मिन् कस्यापि साधारणस्य स्थानीयस्य, विशिष्टस्य वा करस्य प्रवेशकरस्य वा अधिरोपणं अन्तर्भवति, करस्य च तदनुसारं अर्थः ग्राह्यः;

(२९) "आये करः" इत्येतस्मिन् अतिरिक्त लाभकरप्रकारकः करः अन्तर्भवति;

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च (२१) खण्डः लोपितः।

२. संविधानस्य (षड्विंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य ४-अनुभागेन (२२) खण्डात् [illegible] ति संनिवेशितः।

३. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५४-अनुभागेन (२६अ) खण्डः अन्तर्वेशितः आसीत् (१-२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण); संविधानस्य (त्रिचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७७ इत्यस्य ११-अनुभागेन लोपितश्च (१३-४-१९७८ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

[1][(२९अ) "भाण्डानां विक्रये क्रये वा करः" इत्येतस्मिन् अन्तर्भवति—

(क) मुद्रादानात्, विलम्बितमूल्यदानात् अन्यमूल्यवत् प्रतिफलात् वा केषु अपि भाण्डेषु धृतस्य सम्पत्तिस्वत्वस्य अन्तरणे (संविदः अनुसरणे कृतात् व्यतिरिक्ते) करः;

(ख) कस्यापि कर्म संविदः निष्पादने (भाण्डरूपेण केनापि अन्यरूपेण वा) अन्तर्भूतेषु भाण्डेषु धृतस्य सम्पत्तिस्वत्वस्य अन्तरणे करः;

(ग) भाटकदान-क्रय-पद्धत्या अंशसन्दानस्य कयाचित् पद्धत्या वा भाण्डेषु धृतस्य सम्पत्ति स्वत्वस्य अन्तरणे करः;

(घ) कस्यापि प्रयोजनस्य अर्थं कस्यापि भाण्डस्य (विनिर्दिष्टकालावधिपर्यन्तं अन्यथा वा) उपयोगाधिकारस्य मुद्राप्रदानात् विलिम्बितमूल्य प्रदानात् अथवा अन्य मूल्यवत् प्रतिफलात् अन्तरण-करणे करः ।

(ङ) केनापि अनिगमितेन जनसंस्थया जननिकायेन वा स्वसदस्याय मुद्राप्रदानात्, विलिम्बत-मूल्यदानात्, अन्यमूल्यवत् प्रतिफलात् च कृते भाण्डानां आपूरणे करः;

(च) कयापि सेवया, सेवांशरूपेण वा अन्येन केनापि प्रकारेण वा भाण्डानां आपूरणे करः, तद् भाण्डं खाद्यरूपं, मानवीयभोगार्हअन्यवस्तुरूपं किमपि पेयं (मादकपेयरूपं वा अमादकपेयरूपं वा स्यात्, यत्र एतादृशं आपूरणं मुद्रादानात्, विलम्बितमूल्यादानात्, अन्यमूल्यवत् प्रतिफलात् वा भवति;

केषामपि भाण्डानां एतादृशं अन्तरणं, वितरणं, आपूरणं वा तेषां भाण्डानां अन्तरणं, वितरणं, आपूरणं वा कुर्वता जनेन कृतः विक्रयः, तथा यस्मै जनाय एतादृशं अन्तरणं, वितरणं, आपूरणं वा कृतं भवति तेन कृतः क्रयः मन्येत ।]

[2][(३०) "सङ्घराज्यक्षेत्रं" इत्येतेन प्रथमानुसूच्यां विनिर्दिष्टं सङ्घराज्यक्षेत्रं अभिप्रेयते, तथा भारतान्तर्गतं, किन्तु एतस्यां अनुसूच्यां न विनिर्दिष्टं किमपि अन्यद्राज्यक्षेत्रं एतस्मिन् अन्तर्भवति ।]

**३६७.** (१) यावत् प्रसङ्गेन अन्यथा अपेक्षितं न भवति तावत् एतत् संविधानस्य **निर्वचनस्य हेतोः** साधारणखण्डाधिनियमः, १८९७ इत्यस्य कैः अपि तादृशैः अनुकूलनैः, उपान्तरणैः सह एव यादृशाः **३७२-तमा-नुच्छेदस्य** अधीनं तस्मै क्रियेरन्, तथा एव प्रवृत्तः भवेत् यथा सः भारताधिनिवेशस्य विधानमण्डलस्य **अधिनियमस्य निर्वचनार्थं** प्रवर्तते ।

(२) अस्मिन् संविधाने संसदः, संसदा निर्मितानां वा अधिनियमानां, विधीनां वा कस्मिन् अपि निर्देशे [3][ * * * ] कस्यापि राज्यस्य विधानमण्डलस्य, विधानमण्डलेन निर्मितानां वा अधिनियमानां, **विधीनां** वा

१. संविधानस्य (षट्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९८२ इत्यस्य ४-अनुभागेन एषः खण्डः अन्तर्वेशितः ।

२. संविधानस्यः (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च (३०) खण्डात प्रति एषः खण्डः संनिवेशितः ।

३. उक्तयुक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः 'क'-भागे 'ख'-भागे वा उल्लिखितस्य" इत्येते शब्दाः लोपिताः ।

कस्मिन् अपि निर्देशे यथायथं राष्ट्रपतिना राज्यपालेन वा [1][ * * * ] प्रवर्तितस्य आदेशस्यापि निर्देशः अन्तर्भवति इति अर्थः ग्राह्यः ।

(३) एतत् संविधानस्य प्रयोजनार्थं "वैदेशिकराज्यं" इत्येतेन भारतात् भिन्नं किंचिदपि राज्यं अभिप्रेयते—

परन्तु संसदा निर्मितस्य कस्यापि विधेः उपबन्धानां अधीनं, राष्ट्रपतिः आदेशेन[2] कस्यचिद् अपि राज्यस्य वैदेशिकराज्यत्वस्य अभावं, एतादृशानां प्रयोजनानां कृते, यादृशाः आदेशे विनिर्दिष्टाः भवेयुः, घोषयितुं क्षमते ।

---

१. संविधानस्य (संप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखेन वा" इत्येतौ शब्दौ लोपितौ ।

२. संविधानीयः (विदेशीय राज्यानां सम्बन्धे घोषणा) आदेशः, १९५० (सां० आ० २) इत्येषः द्रष्टव्यः ।

## भागः २०

# संविधानस्य संशोधनम्

[संविधानस्य संशोधनाय संसदः शक्तिः, तदर्थं प्रक्रिया च।]

३६८. [2][(१) एतत् संविधाने किमपि सत्यपि, संसद् स्वीयसंविधायि-शक्तेः प्रयोगेन एतस्य संविधानस्य केषामपि उपबन्धानां परिवर्धनरूपेण, परिवर्तनरूपेण, निरसनरूपेण वा संशोधनं कर्तुं क्षमते।]

[3][(२)] एतत् संविधनास्य संशोधनाय आरम्भः तत्प्रयोजनार्थं संसदः अन्यतरस्मिन् सदने विधेयकस्य पुरःस्थापनेन एव कर्तुं शक्यते, यदा च प्रत्येकसदने तस्य सदनस्य समस्तसदस्यसङ्ख्यायाः मध्ये बहुमतेन तथा तस्य सदनस्य उपस्थितानां मतदातॄणां च सदस्यानां तृतीयांशद्वयात् अन्यूनेन बहुमतेन तद्विधेयकं पारितं भवति तदा [4][तद् राष्ट्रपतेः समक्षं उपस्थाप्येत, यः विधेयकाय स्वीयां अनुमतिं दद्यात्; एवं सति च] विधेयकस्य निबन्धनानां अनुसारेण संविधानं संशोधितं तिष्ठेत्—

परन्तु यदि एतादृशं संशोधनं—

(क) ५४-तमानुच्छेदे, ५५-तमानुच्छेदे, ७३-तमानुच्छेदे, १६२-तमानुच्छेदे, २४१-तमानुच्छेदे वा; अथवा

(ख) पञ्चमभागस्य चतुर्थाध्याये, षष्ठभागस्य पञ्चमाध्याये, एकादशभागस्य प्रथमाध्याये वा; अथवा

(ग) सप्तमानुसूच्याः कस्यामपि सूच्यां; अथवा

(घ) संसदि राज्यानां प्रतिनिधित्वे; अथवा

(ङ) एतस्य अनुच्छेदस्य उपबन्धेषु,

किमपि परिवर्तनं कर्तुं ईहते तर्हि एतादृशसंशोधनार्थं उपबन्धं कुर्वतः विधेयकस्य राष्ट्रपतेः समक्षं अनुमत्यर्थं उपस्थापनात् पूर्वं तत् संशोधनार्थं [5][ * * * ]एकस्मात् अर्धात् अन्यूनानां राज्यानां विधानमण्डलानां तत्प्रयोजनार्थं तैः विधानमण्डलैः पारितैः सङ्कल्पैः अनुसमर्थनमपि अपेक्षेत ]।

[6][(३) १३-तमानुच्छेदगतं किमपि अस्य अनुच्छेदस्य अधीनं कृते संशोधने न अनुप्रयुज्येत।]

---

१. संविधानस्य (चतुर्विंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य ३-अनुभागेन "संविधानस्य संशोधनार्थं प्रक्रिया" इत्येतस्मात् प्रति एतत् संनिवेशितम्।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अन्तर्वेशितः।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन ३६८-अनुच्छेदः (२) खण्डरूपेण पुनरङ्कितः।

४. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन "तद् राष्ट्रपतेः समक्षं तस्य अनुमत्यै स्थाप्येत; विधेयके च एवं अनुमते सति" इत्येतस्मात् प्रति एतत् संनिवेशितम्।

५. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन "प्रथमानुसूच्याः (क)-(ख)-भागयोरुल्लिखित राज्येषु" इत्येते शब्दाः लोपिताः।

६. संविधानस्य (चतुर्विंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य ३-अनुभागेन अन्तर्वेशितः।

[1][(४) एतदेनुच्छेदस्य अधीनं अस्य संविधानस्य (यस्मिन् तृतीयभागस्य उपबन्धाः अन्तर्भवन्ति) संशोधनं [संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५५-अनुभागस्य प्रारम्भात् पूर्वं तदनन्तरं वा] कृतं, कृतं इति अभिप्रेतं वा किमपि संशोधनं, कस्मिन् अपि न्यायालये, केनापि आधारेण प्रश्नगतं न क्रियेत ।

(५) शङ्कानां निवारणार्थं एतेन एवं घोष्यते यत् एतदनुच्छेदाधीनं, परिवर्धनरूपेण, परिवर्तनरूपेण, निरसनरूपेण, वा अस्य संविधानस्य संशोधनाय संसदः संविधानीयशक्तौ किंचित् अपि निर्बन्धनं न भवेत् ।]

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५५-अनुभागेन अन्तर्वेशितौ (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

## [1][अस्थायिनः, सङ्क्रमणकालिकाः, विशेषाश्च उपबन्धाः]

**राज्यसूच्याः केषांचिद् विषयाणां सम्बन्धे ते विषयाः समवर्ति सूच्याः इव इति विधिनिर्माणस्य संसदः अस्थायिनी शक्तिः।**

३६९. एतस्मिन् संविधाने किमपि सत्यपि, एतत्संविधानस्य प्रारम्भात् पञ्चानां वर्षाणां कालावधौ निम्नलिखितविषयाणां सम्बन्धे, ते विषयाः समवर्तिसूच्यां प्रगणिताः इव इति, विधिनिर्माणस्य संसदः शक्तिः भवेत्, तद्यथा—

(क) कार्पासानि, और्णानि च वस्त्राणि, असिद्धं तूलं (धूतं तूलं, अधूतं च तूलं, कर्पासं वा यस्य अन्तर्गतं भवति) कर्पासबीजानि, कागदं (समाचारपत्रार्थं कागदं यस्य अन्तर्गतं भवति), खाद्यपदार्थाः (खाद्यानि, तैलबीजानि, तैलं च येषां अन्तर्गतानि भवन्ति), पशूनां यवसं (खलिः अन्यानि च घनीभूतानि यवसानि यस्य अन्तर्गतानि भवन्ति), खनिजाङ्गाराः ('कोकः' खनिजाङ्गारमयाः पदार्थाश्च येषां अन्तर्गताः भवन्ति), लोहम्, सारलोहम्, अभ्रकम् च—एतेषां कस्यापि राज्यस्य अभ्यन्तरे व्यापारः वाणिज्यं च, तथा तेषां उत्पादनं, सम्भरणं, वितरणं च;

(ख) (क) खण्डे वर्णितविषयेषु केनापि सम्बद्धानां विधीनां विरुद्धं अपराधाः, उच्चतमन्यायालयं अन्तरेण, सर्वेषां न्यायालयानां तेषु विषयेषु कस्यापि सम्बन्धे अधिकारिता, शक्तयश्च तथा तेषु विषयेषु कस्यापि सम्बन्धे कस्मिन् अपि न्यायालये गृह्यमाणप्रशुल्केभ्यः अन्ये प्रशुल्काः,

किन्तु संसदा प्रणीतः कोपि विधिः, यं एतदनुच्छेदस्य उपबन्धानां अभावे प्रणेतुं संसद् क्षमा न भवेत्, उक्तकालावधेः समाप्तौ, अक्षमतायाः मात्रां यावत्, तत्समाप्तेः पूर्वं कृतेभ्यः अकृतेभ्यः वा विषयेभ्यः अन्येषां विषयाणां सम्बन्धे प्रभावात् विरमेत्।

**जम्मू-कश्मीरराज्यस्य सम्बन्धे अस्थायिनः उपबन्धाः।**

[2]३७०. (१) एतस्मिन् संविधाने किमपि सत्यपि—

(क) २३८-तमानुच्छेदस्य उपबन्धाः जम्मूकश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्येरन्;

(ख) उक्तराज्यस्य सम्बन्धे विधिनिर्माणस्य संसदः शक्तिः –

(प्रथमः) सङ्घसूच्याः समवर्तिसूच्याश्च तान् विषयान् यावद्, यान् विषयान् राज्यशासनेन परामर्शं कृत्वा राष्ट्रपतिः घोषयेत् यत् ते भारताधिनिवेशे तस्य राज्यस्य प्रवेशं शासति प्रवेशलिखिते विर्निर्ष्टिानां तादृशानां विषयाणां तत्स्थानिविषयाः सन्ति येषां विषये अधिनिवेशविधानमण्डलं विधिं प्रणेतुं क्षमते; तथा च

---

१. संविधानस्य (त्रयोदशं संशोधनं) अधिनियमः, १९६२ इत्यस्य २-अनुभागेन "अस्थायिनस्तथा सङ्क्रमणकालिका उपबन्धाः" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१-१२-१९६३ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. एतदनुच्छेदेन प्रदत्तानां शक्तीनां प्रयोगं कुर्वन् राष्ट्रपतिः जम्मू-कश्मीर राज्यस्य संविधानसभायाः पुरः प्रशंसनानां समनन्तरं अघोषयत् यत् १९५२-वर्षस्य नवम्बरमासस्य १७-दिनाङ्कात् ३७०-तमानुच्छेदः एतदुपान्तरणेन सहितं प्रवर्तेत यत् तस्य (१) खण्डगतात् स्पष्टीकरणात् प्रति निम्नलिखितं स्पष्टीकरणं संनिवेशितं भवेत्—

"**स्पष्टीकरणम्**—एतदनुच्छेदस्य प्रयोजनार्थं "राज्यस्य शासनं" इत्येतेन अभिप्रेयते सः जनः यः तदानीं पदस्थायाः राज्यमन्त्रिपरिषदः मन्त्रणायाः अनुसारं कार्यं कुर्वन् जम्मू-कश्मीरस्य "सदर-इ-रियासत" (अधुना राज्यपालः) इति राष्ट्रपतिना अभिमतः। (१९५२ वर्षस्य नवम्बरमासस्य २५-दिनाङ्कितः ८०-तमः विधिमन्त्रालयस्य आदेशः, सां० आ० ४४)।

(द्वितीयः) उक्तसूच्योः तान् अन्यान् विषयान् यावत्, यान् तद्राज्यशासनस्य सहमत्या राष्ट्रपतिः आदेशेन विनिर्दिशेत्,

सीमिता भवेत् ।

**स्पष्टीकरणम्**—एतदनुच्छेदस्य प्रयोजनार्थं 'राज्यशासनं' इत्येतेन सः जनः अभिप्रेयते यं राष्ट्रपतिः १९४८-वर्षस्य मार्चमासस्य पञ्चमदिने कृतायाः महाराजस्य उद्घोषणायाः अधीनं तत्काले पदस्थमन्त्रिपरिषदः मन्त्रणायाः अनुसारेण कार्यकारी जम्मू-कश्मीरयोः महाराजः इति तदानीं अभिमन्यते स्म ।

(ग) प्रथमानुच्छेदस्य, एतदनुच्छेदस्य च उपबन्धाः तद्राज्यस्य सम्बन्धे अनुप्रयुज्येरन्;

(घ) एतत् संविधानस्य उपबन्धेषु तादृशाः अन्ये उपबन्धाः तादृशैः अपवादैः उपान्तरणैश्च सह यादृशान् राष्ट्रपतिः आदेशेन[1] विनिर्दिशेत्, तद्राज्यस्य सम्बन्धे अनुप्रयुज्येरन्—

परन्तु एतादृशः कोपि आदेशः यः (ख) उपखण्डस्य प्रथमप्रच्छेदे निर्दिष्टे राज्यस्य प्रवेश-लिखिते विनिर्दिष्टैः विषयैः सम्बद्धः भवेत् राज्यशासनेन सह परामर्शं विना न प्रवर्त्येत—

अपरं च एतादृशः कोपि आदेशः, यः अन्तिमे पूर्ववर्तिनि पारन्तुके निर्दिष्टविषयेभ्यः भिन्नैः विषयैः सम्बद्धः भवेत्, तत् शासनस्य सहमत्या एव प्रवर्त्येत, नान्यथा ।

(२) यदि तद्राज्यशासनेन प्रथमखण्डस्य (ख) उपखण्डस्य द्वितीयप्रच्छेदे, अथवा तत्खण्डस्य (घ) उपखण्डस्य द्वितीयपारन्तुके निर्दिष्टा सहमतिः, तद्राज्यार्थं संविधाननिर्माणप्रयोजनवत्याः संविधानसभायाः आमन्त्रणात् पूर्वं, दीयेत तर्हि सः एतादृश्याः सभायाः समक्षं तादृशस्य विनिश्चयस्य कृते स्थाप्येत यादृशं सा तद्विषये कुर्यात् ।

(३) एतदनुच्छेदस्य पूर्ववर्तिषु उपबन्धेषु किमपि सत्यपि, राष्ट्रपतिः लोकाधिसूचनया घोषयितुं क्षमते यद् एषः अनुच्छेदः एतादृशात् दिनाङ्कात् प्रवर्तनात् विरतः, अथवा एतादृशः अपवादैः उपान्तरणैश्च सह प्रवर्तितः भवेत् यथा हि सः विनिर्दिशेत्—

परन्तु राष्ट्रपतिना एतादृश्याः अधिसूचनायाः प्रकाशनात् पूर्वं (२) खण्डे निर्दिष्टायाः तद्राज्यस्य विधानसभायाः पुरः प्रशंसनं आवश्यकं भवेत् ।

[2][३७१. [3][ * * * * ]

(२) एतस्मिन् संविधाने किमपि सत्यपि, राष्ट्रपतिः [4][महाराष्ट्रराज्यस्य, गुजरातराज्यस्य च] सम्बन्धे कृतेन आदेशेन उपबन्धयितुं क्षमते यत्—

[4][ * * * ] **महाराष्ट्र-राज्यस्य, गुजरात-राज्यस्य च सम्बन्धे विशेषोपबन्धाः ।**

---

१. सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः १९५४, (सां० आ० ४८) इत्ययं काले काले यथा संशोधितः प्रथमपरिशिष्टे द्रष्टव्यः ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २२-अनुभागेन ३७१-तमानुच्छेदात् प्रति एषः सनिवेशितः ।

३. संविधानस्य (द्वात्रिंशत्तमं संशोधनं) अधिनियमः, १९७३ इत्यस्य २-अनुभागेन (१) खण्डः लोपितः (१-७-१९७४ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन "आन्ध्रप्रदेश" शब्दः लोपितः (१-७-१९७४ दिनाङ्कात् प्रवर्तमान-प्रभावेण) ।

५. मुम्बई-(पुनर्घटनं) अधिनियमः, १९६० (१९६० वर्षस्य ११) इत्यस्य ८५-अनुभागेन "मुम्बईराज्यस्य" इत्येतस्मात् प्रति एतत् संनिवेशितं (१-५-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(क) विदर्भ-मराठावाड़ा-[1][अवशिष्टं महाराष्ट्रं इत्येतेषांकृते वा यथायथं] सौराष्ट्र-कच्छ-अवशिष्ट-गुजरातेक्षेत्रं इत्येतेषां कृते वा विकासमण्डलीनां स्थापनं यासां प्रत्येकमण्डल्याः कार्यकरणसम्बन्धे प्रतिवेदनं राज्यस्य विधानसभायाः समक्षं प्रतिवर्षं स्थापितं भविष्यति इति उपबन्धेन सहितं;

(ख) सम्पूर्णराज्यस्य आवश्यकताः संलक्ष्य उक्तक्षेत्राणां सम्बन्धे विकासव्ययाय राशीनां साम्यापूर्णं आवण्टनम्;

(ग) सम्पूर्ण राज्यस्य आवश्यकताः संलक्ष्य सर्वेषां उक्तक्षेत्राणां सम्बन्धे शिल्पीयशिक्षार्थं व्यावसायिक-प्रशिक्षणार्थं च पर्याप्तानां सुविधानां, तथा राज्यशासनस्य नियन्त्रणाधीनासु सेवासु पर्याप्तावसाराणां उप-बन्धनार्थं साम्यापूर्णा व्यवस्था,

राज्यपालस्य विशेषोत्तरदायित्वं भवेत् ।]

**नागालैंडराज्यस्य सम्बन्धे विशेषोपबन्धाः ।**

[2][३७१अ. (१) एतस्मिन् संविधाने किमपि सत्यपि—

(क) संसदः कोपि अधिनियमः—

(प्रथमः) नागजनानां धार्मिकप्रथानां, सामाजिकप्रथानां वा विषये;

(द्वितीयः) नागजनानां रूढिजन्यविधेः प्रक्रियायाश्च विषये;

(तृतीयः) नागजनानां रूढिजन्यविधेः अनुसारं विनिश्चेयेषु व्यवहारिकन्यायविषयेषु, दाण्डिक न्यायविषयेषु वा न्यायप्रशासने;

(चतुर्थः) भूमेः, तस्याः सम्पदां स्वामित्वस्य अन्तरणस्य विषये;

नागालैण्डराज्ये तावत् नानुप्रयुज्येत यावत् नागालैण्डराज्यस्य विधानसभा सङ्कल्पेन एवं करणाय विनिश्चयं न करोति;

(ख) नागालैण्डराज्यस्य राज्यपालस्य नागालैण्डराज्ये विधेः अथवा व्यवस्थायाः सम्बन्धे तावत् विशेषोत्तरदायित्वं भवेत् यावत् तस्य मत्यनुसारं तद्राज्यस्य निर्माणात् अव्यवहितपूर्वं नागपर्वतीये त्युएन साङ्क्षेत्रे उद्भूताः आन्तरिक्यः अशान्तयः एतस्मिन् क्षेत्रे, तस्य कस्मिन् अपि भागे वा अनुप्रवृत्ताः वर्तन्ते, तथा राज्यपालः एतत् सम्बन्धे स्वीयकृत्यानां निर्वहणाय कर्तव्यायाः कार्यावल्याः सम्बन्धे मन्त्रिपरिषदा सह परामर्शानन्तरं स्वस्य व्यक्तिगतनिर्णयस्य प्रयोगं कुर्यात् —

परन्तु यदि एतादृशः प्रश्नः उद्भवति यत् तादृशं किमपि विद्यते न वा यत्सम्बन्धे राज्यपालः स्वस्य व्यक्तिगत-निर्णयस्य प्रयोगद्वारा कार्यं कुर्यात् इति एतत्खण्डानुसारं अपेक्ष्यते, तर्हि तत्र राज्यपालेन स्वविवेकं अधिष्ठाय कृतः विनिश्चयः अन्तिमः भवेत् तथा राज्यपालेन यत् किमपि कृतं स्यात् तस्य विधिमान्यता एतदाधारेण प्रश्नगता न क्रियेत यत् तेन व्यक्तिगतरूपेण निर्णयं कृत्वा कार्यं करणीयं आसीत् न वा—

अपरं च, यदि राज्यपालात् प्रतिवेदनस्य प्राप्तौ, अन्यथा वा, राष्ट्रपतिः समाहितः भवति यत् नागालैण्डराज्ये विधेः अथवा व्यवस्थायाः सम्बन्धे राज्यपालस्य विशेषोत्तरदायित्वं भवेत् इति ततः परं आवश्यकं न वर्तते, तर्हि सः आदेशेन निर्देष्टुं क्षमते यत् राज्यपालः एतादृशात् उत्तरदायित्वात् विरतः भवेत् तादृशात् दिनाङ्कात् यः आदेशे विनिर्दिष्टः भवेत्;

---

१. मुम्बई-पुनर्घटनं अधिनियमः, १९६० (१९६० वर्षस्य ११) इत्यस्य ८५-अनुभागेन "अवशिष्टं महाराष्ट्रं" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१-५-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (त्रयोदशं संशोधनं) अधिनियमः, १९६२ इत्यस्य २-अनुभागेन एषः अनुच्छेदः अन्तर्वेशितः (१-१२-१९६३ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(ग) अनुदानस्य कस्याः अपि अभ्यर्थनायाः सम्बन्धे स्वीये पुरः प्रशंसने नागालैण्डराज्यस्य राज्यपालः एतत् सुनिश्चितं कुर्यात् यत् कस्याः अपि विनिर्दिष्टसेवायाः अर्थे विनिर्दिष्टप्रयोजनस्य अर्थे वा भारतसञ्चित-निधेः भारतशासनेन प्रदत्तं धनं तादृश्या सेवया तादृशेन प्रयोजनेन वा सम्बद्धस्य अनुदानस्य अभ्यर्थनायां एव समावेशितं भवेत्, न च अन्यस्याम्;

(घ) तादृशात् दिनाङ्कात् यं एतदर्थं नागालैण्डस्य राज्यपालः लोकाधिसूचनया विनिर्दिशेत् पञ्चत्रिंशत् सदस्यैः सम्भूता एका प्रादेशिकपरिषद् त्युएन्साङ्मण्डलस्य अर्थे स्थापिता भवेत्; तथा च राज्यपालः स्वविवेकं अधिष्ठाय निम्नलिखितविषयेषु उपबन्धं कुर्वाणान् नियमान् प्रणयेत्—

(प्रथमः) प्रादेशिकपरिषदः संरचना, सा रीतिश्च यया प्रादेशिकपरिषदः सदस्याः वृताः भवेयुः —

परन्तु त्युएन्साङ् मण्डलस्य उपायुक्तः पदेन प्रादेशिकपरिषदः अध्यक्षः भवेत्; प्रादेशिकपरिषदः उपाध्यक्षश्च एतस्याः सदस्यैः आत्मभ्यः निर्वाचितः भवेत्;

(द्वितीयः) प्रादेशिकपरिषदः सदस्याः भवितुं, सदस्यत्वेन वृताः भवितुं च अर्हता;

(तृतीयः) प्रादेशिकपरिषदः सदस्यानां पदावधिः तथा च तेभ्यः सन्देयानि वेतनानि अथवा भक्तानि, यदि चेत् स्युः;

(चतुर्थः) प्रादेशिकपरिषदः कार्यप्रक्रिया, कार्यसञ्चालनं च;

(पञ्चमः) प्रादेशिकपरिषदः अधिकारिणां कर्मचारिवृन्दस्य च नियुक्तिः, तेषां सेवानिर्बन्धनानि च; तथा च

(षष्ठः) अन्यः कोपि विषयः; यस्य सम्बन्धे प्रादेशिकपरिषदः संरचनार्थं, तस्याः समुचितप्रवृत्यर्थं च नियमानां प्रणयनं आवश्यकं भवति ।

(२) अस्मिन् संविधाने किमपि सत्यपि, नागलैण्डराज्यस्य निर्माणदिनाङ्कात् दशानां वर्षाणां अवधौ अथवा तादृशे अधिकतरे अवधौ यं राज्यपालः एतत् सम्बन्धे प्रादेशिकपरिषदः पुरःप्रशंसनायाः समनन्तरं अधिसूचनया तदर्थं विनिर्दिशेत्—

(क) त्युएन्साङ्मण्डलस्य प्रशासनं राज्यपालेन सञ्चालितं भवेत्;

(ख) यत्र नागालैण्डराज्याय सम्पूर्णराज्यस्य आवश्यकतानां पूर्तये भारतशासनेन किमपि धनं प्रदत्तं भवति, तत्र राज्यपालः स्वविवेकं अधिष्ठाय एतादृशस्य धनस्य त्युएन्साङ्मण्डलस्य तदवशिष्टस्य राज्यस्य च मध्ये साम्यापूर्णां वितरणव्यवस्थां कुर्यात्;

(ग) नागलैण्डराज्यस्य कोपि अधिनियमः त्युएनसाङ्मण्डलं तावत् न विषयीकुर्यात्, यावत् राज्यपालः प्रादेशिकपरिषदः पुरः प्रशंसनानां समनन्तरं लोकाधिसूचनया एवं न निदिशति; तथा च एतादृशस्य कस्यापि अधिनियमस्य सम्बन्धे एतादृशं निदेशं कुर्वन् राज्यपालः निदेष्टुं क्षमते यत् स विधिः त्युएनसाङ्मण्डले अथवा एतस्य कस्मिन् अपि भागे अनुप्रयोगे तादृशानां अपवादानां उपान्तराणानां च अधीनःप्र भावी भवेत् यान् राज्य-पालः प्रादेशिकपरिषदः पुरः प्रशंसनानां समनन्तरं विनिर्दिशेत्—

परन्तु एतदुपखण्डाधीनं प्रदत्तः निदेशः यथा भूतलक्षिप्रभावेण प्रवृत्तः भवेत्; तथा प्रदत्तः भवितुं क्षमते;

(घ) राज्यपालः त्युएनासाङ्मण्डले शान्त्यर्थं, प्रगत्यर्थं, सुशासनार्थं च विनियमान् निर्मातुं क्षमते;

तथा एवं निर्मिताः केपि विनियमाः तदानीं तस्मिन् मण्डले प्रवृत्तः संसदः कमपि अधिनियमं अथवा कमपि अन्यं विधिं, यदि आवश्यकता चेत्, भूतलक्षिप्रभावेण निरसितुं, संशोधयितुं वा क्षमन्ते;

(ङ) (प्रथमः) नागालैण्डराज्यस्य विधानसभायां त्युएनसाङ्मण्डलस्य प्रतिनिधित्वं धारयद्भ्यः सदस्येभ्यः एकः सदस्यः राज्यपालेन मुख्यमन्त्रिणा सह मन्त्रणायाः समनन्तरं त्युएनासाङ्मण्डलकार्यमन्त्रिरूपेण नियुक्तः भवेत्, तादृश्याः मन्त्रणायाः प्रदाने च मुख्यमन्त्री उक्तानां सदस्यानां मध्ये बहुसङ्ख्यकानां पुरः प्रशंसनानां अनुसारं वर्तेत;[1]

(द्वितीयः) त्युएनसाङ्मण्डलकार्यमन्त्री त्युएनसाङ्मण्डलेन सह सम्बद्धेषु सर्वेषु विषयेषु कार्यं कुर्यात् तथा च तेषु विषयेषु तस्य राज्यपालस्य समक्षं साक्षात् प्रवेशः भवेत् किन्तु एतत् सम्बन्धे तेन मुख्यमन्त्री सदा ज्ञापितः भवेत्।

(च) एतत् खण्डस्य पूर्वगामिषु उपबन्धेषु किमपि सत्यपि, त्युएनसाङ्मण्डलेन सह सम्बद्धेषु सर्वेषु विषयेषु अन्तिमं विनिश्चयं राज्यपालः स्वविवेकं अधिष्ठाय कुर्यात्।

(छ) ५४-तमानुच्छेदे, ५५-तमानुच्छेदे, ८०-तमानुच्छेदे (४) खण्डे च राज्यस्य विधानसभायै निर्वाचितान् सदस्यान् प्रति, अथवा एतादृशं प्रत्येकं सदस्यं प्रति निर्देशेषु एतदनुच्छेदाधीनं स्थापितया प्रादेशिक-परिषदा निर्वाचितान् निर्वाचितं वा नागालैंडविधानसभायाः सदस्यान् सदस्यं वा प्रति निर्देशः अन्तर्भवेत्।

(ज) १७०-तमानुच्छेदे—

(प्रथमः) नागालैंडविधान सभायाः सम्बन्धे (१) खण्डः तथा प्रभावी भवेत् यथा तस्मिन् "षष्टितः" इति पदात् प्रति "षट्चत्वारिंशत्तः" इति शब्दः संनिवेशितः स्यात्;

(द्वितीयः) एतस्मिन् खण्डे राज्यस्य निर्वाचनक्षेत्रेभ्यः प्रत्यक्षनिर्वाचनं प्रति निदशे, अस्य अनुच्छेदस्य अधीनं स्थापितायाः प्रादेशिकपरिषदः सदस्यैः कृतं निर्वाचनं प्रति निर्देशः अपि अन्त-र्भवेत्;

(तृतीयः) (२) खण्डे (३) खण्डे च निर्वाचनक्षेत्राणि प्रति निर्देशस्य, कोहिमामण्डलस्य मोकोक्चुङ्मण्डलस्य च निर्वाचनक्षेत्राणि प्रति सः निर्देशः अस्ति इति अर्थः ग्राह्यः।

(३) यदि एतदनुच्छेदस्य पूर्वगामिनः उपबन्धानां प्रभावीकरणे कापि बाधा उद्भवति तर्हि राष्ट्रपतिः आदेशेन तत् किमपि (यस्मिन् अन्यस्य कस्यचिद् अपि अनुच्छेदस्य अनुकूलनं, उपान्तरणं वा अन्तर्भवति), कर्तुं क्षमते यत् सः एतादृशीं बाधां निवारयितुं आवश्यकं प्रत्येति—

परन्तु एतादृशः कोपि आदेशः नागालैंडराज्यस्य निर्माणस्य दिनाङ्कात् वर्षत्रयस्य समाप्तेः अनन्तरं न कृतः भवेत्।

**स्पष्टीकरणम्**—एतस्मिन् अनुच्छेदे कोहिमामण्डलं, मोकोक्चुङ्मण्डलं, त्युएनसाङ् मण्डलं च इत्येतेषां स एव अर्थः ग्राह्यः यः १९६२ वर्षस्य नागालैंड राज्याधिनियमे अस्ति।]

---

१. संविधानीयः (दुष्करत्वानां निवारणं) आदेशः १०-तमः, इत्यस्य द्वितीयः प्रच्छेदः उपबन्धयति (१-१२-१९६३ दिनाङ्कात् प्रवर्तमानप्रभावेण) यत् भारतस्य संविधानस्य ३७१अ-तमस्य अनुच्छेदस्य सः एव प्रभावः स्यात् यस्तदा भवति यदा तस्य (२) खण्डस्य (ङ) उपखण्डस्य (द्वितीये) प्रच्छेदे निम्नलिखितः पारन्तुकः अपि समाविष्टः स्यात्, तद् यथा—

"परन्तु यावत् नागालैण्डराज्यस्य विधानसभायां त्युएनसाङ्मण्डलस्य कृते नियतीकृते स्थाने विधिना निर्वाचितः जनः सदस्यः न भवति, तावत् राज्यपालः मुख्यमन्त्रिणा परामृश्य कञ्चित् जनं त्युएनसाङ् विषयकाणां कार्याणां मन्त्रिपदे नियोजयेत्।"

[1][३७१आ. एतस्मिन् संविधाने किमपि सत्यपि, राष्ट्रपतिः असमराज्यसम्बन्धे कृतेन आदेशेन, षष्ठानुसूच्याः २०-तमे प्रच्छेदे संलग्नसारण्याः [2][प्रथम भागे] विनिर्दिष्टेभ्यः जनजातिक्षेत्रेभ्यः, तद्राज्यस्य विधानसभायै निर्वाचितैः सदस्यैः तथा आदेशे निर्देशार्हसङ्ख्याकैः तादृशैः अन्यैः सदस्यैः सम्भूतायाः तद्राज्यस्य विधानसभासमितेः संरचनार्थं तथा तादृश्याः समित्याः योग्यतया कार्यकरणार्थं तत्सभायाः कार्यप्रक्रियानियमेषु उपान्तरणानि कर्तुं उपबन्धयितुं क्षमते ।] **असमराज्यस्य सम्बन्धे विशेषोपबन्धाः ।**

[3][३७१इ. (१) एतस्मिन् संविधाने किमपि सत्यपि, राष्ट्रपतिः मणिपुरराज्यस्य सम्बन्धे कृतेन आदेशेन तद्राज्यस्य पर्वतीयक्षेत्रेभ्यः तद्राज्यस्य विधानसभायै निर्वाचितसदस्यैः सम्भूतायाः तद्राज्यविधानमण्डलसमित्याः संरचनार्थं; तथा एतादृश्याः समित्याः योग्यतया कार्यकरणं सुनिश्चितं कर्तुं, शासनस्य कार्यनियमेषु, तद्राज्यस्य विधामसभायाः प्रक्रियानियमेषु च उपान्तरणानि कर्तुं राज्यपालय किंचित् विशेषोत्तरदायित्वं प्रदातुं उपबन्धयितुं क्षमते । **मणिपुरराज्यस्य सम्बन्धे विशेषोपबन्धाः ।**

(२) राज्यपालः प्रतिवर्षं अथवा यदा यदा राष्ट्रपतिना एवं अपेक्ष्यते तदा तदा मणिपुरराज्यस्य पर्वतीय-क्षेत्राणां प्रशासनसम्बन्धे राष्ट्रपतये प्रतिवेदनं कुर्यात् तथा सङ्घस्य कार्यपालिकाशक्तिः उक्तप्रदेशानां प्रशासनविषये निदेशदानपर्यन्तं विस्तृता भवेत् ।

**स्पष्टीकरणम्**— अस्मिन् अनुच्छेदे "पर्वतीयक्षेत्राणि" इत्येतेन तानि क्षेत्राणि अभिप्रेयन्ते यानि राष्ट्रपतिः आदेशेन पर्वतीयक्षेत्राणि इति घोषयति ।]

[4][३७१ई. (१) आन्ध्रप्रदेशराज्यस्य सम्बन्धे राष्ट्रपतिः तस्य सम्पूर्णराज्यस्य आवश्यकताः संलक्ष्य लोक-नियोजनायाः विषये, शिक्षाविषये च राज्यस्य विभिन्नभागस्थजनानां कृते साम्यापूर्णानां अवसराणां सुविधानां च अर्थे आदेशेन उपबन्धयितुं क्षमते; तथा च भिन्नानां भागानां कृते भिन्नान् उपबन्धान् कर्तुं क्षमते । **आन्ध्रप्रदेशराज्यस्य विषये विशेषोपबन्धाः ।**

(२) (१) खण्डाधीनं कृतः आदेशः विशेषतः —

(क) राज्यशासनात् एतत् अपेक्षितुं क्षमते यत् राज्यशासनं राज्यस्य नागरिकसेवापदानां कस्यचिद् वर्गस्य केषांचिद् वर्गाणां, अथवा राज्याधीनानां कस्यचिद्वर्गस्य, केषांचिद् वर्गाणां च नागरिकसेवापदानां राज्यस्य विभिन्नानां भागानां अर्थे भिन्नेषु स्थानीयसंवर्गेषु घटनं कुर्यात्; तथा च आदेशे विनिर्दिष्टानां तादृशानां सिद्धान्तानां प्रक्रियायाश्च अनुसारं तादृशान् पदान् धारयतां जनानां तादृशेषु संवर्गेषु आवण्टनं कुर्यात्;

(ख) राज्यस्य कंचिद् भागं, कांश्चिद् भागान् वा विनिर्देष्टुं क्षमते यः, ये वा

(प्रथमः) राज्य शासनस्य अधीनं कस्मिन् अपि स्थानीये संवर्गे (स संवर्गः एतदनुच्छेदस्य अधीनं घटितः स्यात् अन्यथा वा) पदेषु प्रत्यक्ष-नियोजनार्थं,

---

१. संविधानस्य (द्वाविंशतितमं संशोधनं) अधिनियमः, १९६९ इत्यस्य ४-अनुभागेन एषः अनुच्छेदः अन्तर्वेशितः ।

२. पूर्वोत्तर क्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१) इत्यस्य "क-भाग" इत्येतस्मात् प्रति एतत् संनिवेशितं (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (सप्तविंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य ५-अनुभागेन अन्तर्वेशितः (१५-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. संविधानस्य (द्वात्रिंशत्तमं संशोधनं) अधिनियमः, १९७३ इत्यस्य ३-अनुभागेन एतौ अनुच्छेदौ संनिवेशितौ (१-७-१९७४ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

(द्वितीयः) राज्यस्य अभ्यन्तरे कस्यापि स्थानीयप्राधिकारिणः अधीने कस्मिन् अपि संवर्गे पदेषु प्रत्यक्षनियोजनार्थं,

(तृतीयः) राज्यस्य अभ्यन्तरे कस्मिन् अपि विश्वविद्यालये अथवा राज्यशासनस्य नियन्त्रणाधीनायां कस्यामपि अन्यस्यां विद्यासंस्थायां प्रवेशप्रयोजनार्थं च,

स्थानीयक्षेत्ररूपेण मन्येत, मन्येरन् वा;

(ग) एतद्विनिर्देष्टुं क्षमते यत् कियद् विस्तृति पर्यन्तं, कया रीत्या, केषां प्रतिबन्धानां अधीनं, यथायथं एतादृशस्य संवर्गस्य, विश्वविद्यालयस्य, अन्यस्याः शिक्षासंस्थायाः वा सम्बन्धे, आदेशे विनिर्दिष्टकालावधौ यैः स्थानीयक्षेत्रे निवासः कृतः अस्ति, अध्ययनं वा कृतं अस्ति तेभ्यः अभ्यर्थिभ्यः —

(प्रथमः) (ख) उपखण्डे निर्दिष्टे तादृशे संवर्गे, यादृशः एतन्निमित्ते कृते आदेशे विनिर्दिष्टः स्यात्, पदेषु प्रत्यक्षनियोजनस्य विषये;

(द्वितीयः) (ख) उपखण्डे निर्दिष्टे एतादृशे कस्मिन् अपि विश्वविद्यालये, निर्दिष्टायां एतादृश्यां कस्यामपि विद्यासंस्थायां यस्य यस्या वा एतन्निमिते आदेशे विनिर्देशः स्यात् प्रवेशविषये,

अधिमानं दीयेत, रक्षणं क्रियेत वा ।

(३) राष्ट्रपतिः आदेशेन आन्ध्रप्रदेशराज्यस्य कृते एकस्य प्रशासनिकस्य अधिकरणस्य घटनाय उपबन्धयितुं क्षमते यत् निम्नलिखितविषयाणां सम्बन्धे तादृशीं अधिकारितां तादृशीः शक्तिः तादृशं प्राधिकारं च प्रयुक्तान् करिष्यति, ये आदेशे विनिर्दिष्टाः स्युः [येषु अन्तर्भवन्ति तदृशाः अधिकारिताः, शक्तिः, प्राधिकाराश्च ये संविधानस्य (द्वात्रिंशत्तमं संशोधनं) अधिनियमः, १९७३ इत्यस्य प्रारम्भात् अव्यवहितपूर्वं उच्चतम न्यायालयात् भिन्नेन केनापि न्यायालयेन, न्यायाधिकरणेन, प्राधिकारिणा वा प्रयोक्तव्याः आसन्], तद्यथा—

(क) तद्राज्यस्य कस्यामपि नागरिकसेवायां पदानां एतादृशे वर्गे, एतादृशेषु वर्गेषु वा; अथवा तद्राज्याधीनानां नागरिकपदानां एतादृशे वर्गे एतादृशेषु वर्गेषु वा, अथवा तद्राज्याभ्यन्तरे कस्यापि स्थानीयप्राधिकारिणः अधीनानां पदानां तादृशे वर्गे तादृशेषु वर्गेषु वा (ये आदेशे विनिर्दिष्टाः स्युः) नियुक्तिः, आवण्टनं, प्रोन्नतिः वा;

(ख) तद्राज्यस्य कस्यामपि नागरिकसेवायां तादृशे वर्गे, तादृशेषु वर्गेषु वा, अथवा तद्राज्याधीनानां नागरिकपदानां तादृशे वर्गे, तादृशेषु वर्गेषु, अथवा तद्राज्याभ्यन्तरे कस्यापि स्थानीयप्राधिकारिणः अधीनानां पदानां तादृशे वर्गे, तादृशेषु वर्गेषु वा ये आदेशे विनिर्दिष्टाः स्युः, नियुक्तानां, आवण्टितानां, प्रोन्नतानां वा जनानां ज्येष्ठता;

(ग) तद्राज्यस्य कस्यामपि नागरिकसेवायां पदानां तादृशे वर्गे तादृशेषु वर्गेषु वा; अथवा तद्राज्याधीनानां नागरिकपदानां तादृशे वर्गे, तादृशेषु वर्गेषु वा, अथवा तद्राज्याभ्यन्तरे कस्यापि स्थानीयप्राधिकारिणः अधीनानां पदानां तादृशे वर्गे, तादृशेषु वर्गेषु वा नियुक्तानां, आवण्टितानां, प्रोन्नतानां वा जनानां सेवा विषयकानि तादृशानि अन्यानि प्रतिबन्धनानि यानि आदेशे विनिर्दिष्टानि स्युः,

(४) (३) खण्डाधीनं कृतः आदेशः —

(क) प्रशासनिकाधिकरणं तस्य अधिकारितान्तर्गतेन केनापि विषयेण सम्बद्धानां व्यथानां निवारणाय अभ्यावेदनानि ग्रहीतुं, यानि राष्ट्रपतिः आदेशे विनिर्दिशेत्, तत्सम्बन्धे च अधिकरणं यादृशान् उचितान् मन्यते तादृशान् आदेशान् कर्तुं च प्राधिकृतं कुर्यात्;

**भागः २१—अस्थायिनः, सङ्क्रमणकालिकाः, विशेषाश्च उपबन्धाः—अनु० ३७१ई०**

(ख) यादृशान् राष्ट्रपतिः आवश्यकान् प्रत्येति तादृशान् प्रशासनाधिकरणस्य शक्तीनां अधिकाराणां प्रक्रियायाश्च विषये उपबन्धान् अन्तर्वेशयेत् (येषु स्वस्य अवमाने दण्डनस्य शक्तिसम्बन्धिनः उपबन्धाः अपि अन्तर्विशन्ति ।)

(ग) कार्यप्रवृत्तीनां एतादृशवर्गाणां, ये आदेशे विनिर्दिष्टाः भवेयुः, याश्च कार्य प्रवृत्तयः प्रशासनिकाधिकरणस्य अधिकारितान्तर्गतैः विषयैः सम्बद्धः भवेयुः तथा च या तस्य आदेशस्य प्रारम्भाद् अव्यवहितपूर्वं (उच्चतमन्यायालयात् अन्यतमस्य) कस्यापि न्यायालयस्य समक्षं अन्यस्य अधिकरणस्य प्राधिकरणस्य वा समक्षं लम्बिताः भवेयुः, प्रशासनाधिकरणाय अन्तरितुं उपबन्धान् कुर्यात्;

(घ) एतादृशान् अनुपूरकान्, आनुषङ्गिकान्, पारिणामिकान् च उपबन्धान् अन्तर्वेशयेत् यान् राष्ट्रपतिः आवश्यकान् मन्यते (येषु उपबन्धेषु प्रशुल्कविषयकाः, परिसीमाविषयकाः, साक्ष्यविषयकाः उपबन्धाः, केषांचित् अपवादानां उपान्तरणानां वा अधीनं कस्यापि विधेः तदानीं प्रवर्तनाय च उपबन्धाः अन्तर्विशन्तु) ।

(५) कस्यापि विवादविषयस्य अन्तिमरूपेण निर्वर्तनं कुर्वन् प्रशासनिकाधिकरणस्य आदेशः प्रभावी भवेत्, यदा सः राज्यशासनेन पुष्टीकृतः भवति, अथवा यस्मिन् दिनाङ्के आदेशः कृतः भवति तद्दिनाङ्कात् मासत्रयस्य समाप्तौ, द्वयोः यत् पूर्वतरं भवति—

परन्तु राज्यशासनं, लिखितरूपेण कृतेन विशेषादेशेन, तस्मिन् विनिर्देश्यानां कारणानां आधारेण, प्रशासनिकाधिकरणस्य कमपि आदेशं, सः प्रभावी भवेत् तस्मात् प्राक्, उपान्तरितं, विलुप्तं वा कर्तुं क्षमते; एतादृश्यां कस्यामपि दशायां प्रशासनिकाधिकरणस्य आदेशः यथायथं एतादृशेन उपान्तरितरूपेण प्रभावी भवेत् अथवा प्रभावशून्यः भवेत् ।

(६) (५) खण्डस्य पारन्तुकस्य अधीनं कृतः प्रत्येकं विशेषः आदेशः तस्य करणात् अनन्तरं राज्यविधानमण्डलस्य उभयोः सदनयोः समक्षं यथाशक्यं शीघ्रं स्थापितः भवेत् ।

(७) राज्यस्य उच्चन्यायालयः प्रशासनिकाधिकरणस्य अधीक्षणाय शक्तिमान् न भवेत् तथा उच्चतमन्यायालयात् अन्यतमः कोपि न्यायालयः किमपि न्यायाधिकरणं वा प्रशासनिकाधिकरणस्य सम्बन्धे अथवा तस्य अधिकारितायाः, शक्तेः, प्राधिकारस्य अधीनत्वे स्थितस्य कस्यापि विषयस्य सम्बन्धे, कस्याः अपि अधिकारितायाः, शक्तेः, कस्यापि प्राधिकारस्य वा प्रयोगं न कुर्यात्,

(८) यदि राष्ट्रपतिः समाहितः भवति यत् प्रशासनिकाधिकरणस्य अविरतं अनुवर्तित्वं आवश्यकं न विद्यते, तर्हि राष्ट्रपतिः आदेशेन प्रशासनिकाधिकरणं उत्सादयितुं क्षमते; तथा च एतादृशात् उत्सादनात् अव्यवहितपूर्वं तदधिकरणस्य समक्षं लम्बमानानां विवादविषयाणां अन्तरणाय, निर्वर्तनाय च सः यादृशान् समुचितान् मन्यते तादृशान् उपबन्धान् एतादृशे आदेशे कर्तुं क्षमते ।

(९) कस्यापि न्यायालयस्य, अधिकरणस्य अन्यस्य वा प्राधिकारिणः कस्मिन् अपि निर्णये, आज्ञप्तौ, आदेशे वा सत्यपि—

(क) (प्रथमः) १९५६-वर्षस्य नवम्वरमासस्य प्रथमदिनाङ्कात् प्राक्, यथास्थितस्य हैदराबादराज्यस्य शासनस्य अथवा एतदधीनं स्थितस्य कस्यापि स्थानीयप्राधिकारिणः अधीने तस्मात् दिनाङ्कात् पूर्वं कस्मिन् अपि पदे, अथवा

(द्वितीयः) संविधानस्य (द्वात्रिंशत्तमं संशोधनं) अधिनियमः, १९७३ इत्यस्य प्रारम्भात् पूर्वं आन्ध्रप्रदेशराज्यशासनस्य, कस्यापि स्थानीयस्य, अन्यस्य वा प्राधिकारिणः अधीने कस्मिन् अपि पदे—

कृतं कस्यापि जनस्य नियोजनं, पदस्थापनं, प्रोन्नतिः अन्तरणं वा, तथा च

(ख) (क) उपखण्डे निर्दिष्टेन केनापि जनेन तस्य समक्षं वा कृता कार्यप्रवृत्तिः कृतं कार्यं वा,

अवैधं, शून्यीभूतं अस्ति, कदाचित् अपि अवैधं शून्यीभूतं वा अभूत् इति केवलं एतदाधारेण न मन्येत यद् एतादृशस्य जनस्य नियोजनं, पदस्थापनं, प्रोन्नतिः अन्तरणं वा तस्मिन् काले तादृश्याः प्रोन्नतेः, तादृशस्य नियोजनस्य, पदस्थापनस्य, अन्तरणस्य वा सम्बन्धे यथायथं हैदराबादराज्यस्य अभ्यन्तरे अथवा आन्ध्रप्रदेशराज्यस्य कस्यापि भागस्य अभ्यन्तरे निवासस्य आवश्यकतां उपबन्धयतः तदानीं प्रवृत्तस्य विधेः अनुसारं न अक्रियत ।

(१०) अस्य संविधानस्य उपबन्धाः तथा च एतदधीनं राष्ट्रपतिना कृतस्य कस्यचिद् आदेशस्य उपबन्धाः, अस्य संविधानस्य अन्यस्मिन् कस्मिन् उपबन्धे अथवा तदानीं प्रवृत्ते कस्मिन् अपि विधौ किमपि सत्यपि, प्रभाविनः भवेयुः ।

**आन्ध्रप्रदेशे केन्द्रीय-विश्वविद्यालस्य स्थापना ।**

३७१-उ. संसद् आन्ध्रप्रदेशराज्ये एकस्य विश्वविद्यालयस्य स्थापनार्थं उपबन्धं कर्तुं क्षमते ।]

**सिक्किमराज्यस्य सम्बन्धे विशेषोपबन्धाः ।**

[1][३७१ऊ. अस्मिन् संविधाने किमपि सत्यपि—

(क) सिक्किमराज्यस्य विधानसभा त्रिंशतः अन्यूनैः सदस्यैः सम्भूता भवेत्;

(ख) संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य प्रारम्भदिनात् (यद् अस्मिन् अनुच्छेदे इतः परं "नियतदिनं" इति अभिहितं अस्ति)—

(प्रथमः) १९७४-वर्षस्य एप्रिलमासे कृतानां निर्वाचनानां परिणामरूपेण, उक्तेषु निर्वाचनेषु निर्वाचितैः द्वात्रिंशत् सदस्यैः (ये अत्र इतः परं आसीनाः सदस्याः इति अभिहिताः सन्ति) सिक्किमस्य कृते सम्भूता विधानसभा, सम्यग्रूपेण घटिता सिक्किमराज्यस्य विधानसभा मन्येत;

(द्वितीयः) आसीनाः सदस्याः अस्य संविधानस्य अधीनं सम्यग्रूपेण निर्वाचिताः सिक्किम-राज्यस्य विधानसभायाः सदस्याः मन्येरन्; तथा च

(तृतीयः) सिक्किमराज्यस्य उक्ता विधानसभा अस्य संविधानस्य अधीनं राज्यस्य विधान-सभायाः शक्तीः प्रयोजयेत् तस्याः कर्तव्यानां पालनं च कुर्यात्;

(ग) (ख) खण्डाधीनं सिक्किमराज्यस्य विधानसभारूपेण मतायाः विधानसभायाः स्थित्यां १७२-तमानुच्छेदस्य (१) खण्डे [2][पञ्चानां वर्षाणां] अवधिं प्रति निर्देशाः [3][चतुर्णां वर्षाणां] अवधेः प्रति निर्देशाः सन्ति इति अर्थः ग्राह्यः; उक्तः [3][चतुर्णां वर्षाणां] अवधिश्च नियतदिनात् प्रारभमाणः मन्येत ।

---

१. संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ३-अनुभागेन एषः अनुच्छेदः अन्तर्वेशितः (२६-४-१९७५ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ४३-अनुभागेन "षण्णां वर्षाणां" इत्येताभ्यां शब्दाभ्यां प्रति एतौ शब्दौ संनिवेशितौ (६-९-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण); "षण्णां वर्षाणां" इत्येतौ शब्दौ च संविधानस्य (द्विचत्वारिंशत्तमं सशोधनं) अधिनियमः, १९७६ इत्यस्य ५६-अनुभागेन मूलपाठस्थिताभ्यां "पञ्चानां वर्षाणां" इत्येताभ्यां शब्दाभ्यां प्रति संनिवेशितौ आस्ताम् (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ४३-अनुभागेन "पञ्चानां वर्षाणां" इत्येताभ्यां शब्दाभ्यां प्रति एतौ शब्दौ संनिवेशितौ (६-९-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण) । "पञ्चानां वर्षाणां" इत्येतौ शब्दौ संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५६-अनुभागेन मूलपाठस्थिताभ्यां "चतुर्णां वर्षाणां" इत्येताभ्यां शब्दाभ्यां प्रति संनिवेशितौ आस्ताम् (३-१-१९७७ दिनाङ्कात् वर्तमानप्रभावेण) ।

(घ) संसदा विधिना यावत् अन्ये उपबन्धाः न क्रियेरन्, तावत् लोकसभायां सिक्किमराज्याय आवण्टितं एकं स्थानं भवेत् तथा च सिक्किमराज्यं "सिक्किमसंसदीयनिर्वाचनक्षेत्रं" इति अभिहितं एकं संसदीयं निर्वाचनक्षेत्रं स्यात्;

(ङ) नियतदिने विद्यमानायां लोकसभायां सिक्किमराज्यस्य प्रतिनिधिः सिक्किमराज्यस्य विधानसभासदस्यैः निर्वाचितः भवेत्;

(च) संसद् सिक्किमराज्यजनतायाः विभिन्नविभागानां अधिकाराणां हितानां च संरक्षणार्थं सिक्किमराज्यस्य विधानसभायां यानि स्थानानि एतादृशविभागानां अभ्यर्थिभिः पूरितानि भवितुं अर्हन्ति तेषां स्थानानां सम्बन्धे, तथा केवलं एतादृशविभागानां अभ्यर्थिनः येभ्यः (निर्वाचनक्षेत्रेभ्यः) सिक्किमराज्यस्य विधानसभायै निर्वाचनाय प्रत्याशिनः भवेयुः तेषां निर्वाचनक्षेत्राणां परिसीमाकरणाय, उपबन्धान् निर्मातुं क्षमते;

(छ) सिक्किमराज्यपालस्य विशेषोत्तरदायित्वं भवेत् यत् सः शान्त्यर्थं, तथा सिक्किमजनतायाः विभिन्नानां विभागानां सामाजिकीं, आर्थिकीं च प्रगतिं सुनिश्चितां कर्तुं साम्यापूर्णां व्यवस्थां कुर्यात्; तथा च एतत् खण्डाधीनं विशेषोत्तरदायित्वस्य निर्वहणाय राज्यपालः, स्वविवेकं अधिष्ठाय तादृशानां निदेशानां अधीनं कार्यं कुर्यात्, यादृशान् राष्ट्रपतिः काले काले दातुं समुचितं मन्येत;

(ज) सिक्किमराज्याभ्यन्तर्गतेषु राज्यक्षेत्रेषु तद् बहिः वा विद्यमाना या सर्वा सम्पत्तिः यानि च सर्वस्वानि सिक्किमराज्यशासने वा सिक्किमराज्यप्रयोजनानां अर्थे अन्यस्मिन् कस्मिन् अपि प्राधिकारिणि वा, जने वा नियतदिनात् अव्यवहितपूर्वं निहितानि आसन् सा सर्वा सम्पत्तिः, तानि सर्वस्वानि च नियतदिनात्, सिक्किमराज्यस्य शासने निहितानि भवेयुः ;

(झ) सिक्किमराज्ये समाविष्टेषु राज्यक्षेत्रेषु नियतदिनात् पूर्वं तद्रूपेण कार्यरतः उच्चन्यायालयः नियतदिनात् सिक्किमराज्यस्य कृते उच्चन्यायालयः मन्येत;

(ञ) सिक्किमराज्यस्य राज्यक्षेत्रे सर्वत्र व्यावहारिकीं, दाण्डिकीं, राजस्विकीं अधिकारितां धारयन्तः सर्वे न्यायालयाः, न्यायिकाः, कार्यपालिकाः, अनुसचिवीयाः च सर्वे प्राधिकारिणः अधिकारिणश्च, नियतदिनात् स्वस्व कृत्यानां प्रयोगे, एतत् संविधानस्य अधीनं अनुवर्तेरन्;

(ट) सिक्किमराज्यस्य, तस्य कस्यचिद् अपि भागस्य वा अन्तर्गतेषु राज्यक्षेत्रेषु नियतदिनात् पूर्वं प्रवृत्ताः सर्वे विधयः यावत् क्षमेण विधानमण्डलेन, अन्येन वा क्षमेण प्राधिकारिणा संशोधिताः निरस्ताः वा न भवेयुः तावत् प्रवृत्तौ अनुवर्तेरन्;

(ठ) (ट) खण्डे यथानिर्दिष्टस्य एतादृशस्य कस्यापि विधेः सिक्किमराज्यस्य प्रशासन सम्बन्धे प्रयोगसौकर्यार्थं, तथा च एतादृशस्य कस्यापि विधेः उपबन्धान् अस्य संविधानस्य उपबन्धैः अनुरूपान् कर्तुं, राष्ट्रपतिः नियतदिनात् वर्षद्वयावधौ, विधेः निरसनरूपेण, संशोधनरूपेण वा एतादृशानि अनुकूलनानि, उपान्तरणानि च कर्तुं क्षमते यादृशानि आवश्यकानि समीचीनानि वा स्युः; तथा एवं कृते एतादृशः प्रत्येकविधिः एवं कृतानां अनुकूलनानां, उपान्तरणानां च अधीनं प्रभावी भवेत्; तथा एतादृशं अनुकूलनं उपान्तरणं वा कस्मिन् अपि न्यायालये प्रश्नगतं न क्रियेत;

(ड) सिक्किमसम्बन्धे नियतदिनात् पूर्वं कृतात् निष्पादितात् वा कस्मात् अपि सन्धेः, समयात्, वचनबन्धात् अन्यस्मात् लिखितात् वा यस्मिन् भारतशासनं अथवा तस्य किमपि पूर्ववर्तिशासनं पक्षकारः आसीत्, उद्भवतः विवादस्य, अन्यविषयस्य वा सम्बन्धे उच्चतमन्यायालयस्य अन्यस्य कस्यचिद् अपि न्यायालयस्य वा अधिकारिता न भवेत् किन्तु एतत्खण्डगतस्य कस्यचिद् अपि कथनस्य एवं अर्थः न ग्राह्यः यत् तत् १४३-तमानुच्छेदस्य उपबन्धान् अल्पीकरोति इति;

(ढ) राष्ट्रपतिः लोकाधिसूचनया कस्याः अपि अधिनियमितेः या अधिसूचनायाः दिनाङ्के भारतस्य कस्मिन् अपि राज्ये प्रवर्तमाना अस्ति, प्रवृत्तिं सिक्किमराज्ये तादृशैः प्रतिबन्धैः उपान्तरणैः वा सह यानि सः मन्येत विस्तारयितुं क्षमते;

(ण) एतदनुच्छेदस्य पूर्वगामिनां उपबन्धानां कस्यचिद् उपबन्धस्य प्रवर्तने यदि कापि बाधा उद्भवति, तर्हि राष्ट्रपतिः आदेशेन[1] तत् किमपि कर्तुं क्षमते (यस्मिन् कस्यापि अन्यस्य अनुच्छेदस्य अनुकूलनं, उपान्तरणं च अन्तर्भवति) यत् तेन तादृश्याः बाधायाः निवारणाय आवश्यकं प्रतीयते—

परन्तु एतादृशः कोपि आदेशः नियतदिनात् वर्षद्वयस्य समाप्तेः अनन्तरं न क्रियेत;

(त) सिक्किमराज्ये तदन्तर्गतेषु राज्यक्षेत्रेषु वा, तस्य, तेषां सम्बन्धे वा नियतदिनात् आरभ्य यस्मिन् दिने संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्येतत् राष्ट्रपतेः अनुमतिं लभते तस्मात् दिनात् अव्यवहितपूर्वं समाप्ते कालावधौ कृतानि सर्वाणि कर्माणि, आचरितानि सर्वाणि कृत्यानि च यावत् पर्यन्तं तानि संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्येतेन संशोधितस्य एतत् संविधानस्य उपबन्धैः अनुरूपाणि सन्ति तावत् पर्यन्तं सर्वप्रयोजनानां अर्थे एवं संशोधितस्य संविधानस्य अधीनं विधिमान्यरूपेण कृतानि आचरितानि वा सन्ति इति मन्येत ।]

**विद्यमानविधीनां प्रवृत्तेः अनुवर्तनं, तेषां अनुकूलनं च ।**

३७२. (१) ३९५-तमानुच्छेदे निर्दिष्टानां अधिनियमितीनां एतत् संविधानेन निरसने अपि, किन्तु एतत् संविधानस्य अन्येषां उपबन्धानां अधीनं एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं भारतराज्यक्षेत्रे सर्वः प्रवृत्तः विधिः तस्मिन् तावत् प्रवृत्तिं अनुवर्तेत यावत् क्षमेण विधानमण्डलेन अन्येन क्षमेण प्राधिकारिणा वा परिवर्तितः, निरस्तः, संशोधितः वा न भवति ।

(२) भारतराज्यक्षेत्रे प्रवृत्तस्य कस्यापि विधेः उपबन्धान् एतस्य संविधानस्य उपबन्धैः सह अनुरूपान् कर्तुं राष्ट्रपतिः आदेशेन[2] तादृशविधेः तादृशानि अनुकूलनानि, उपान्तरणानि च निरसनेन संशोधनेन वा कर्तुं क्षमते यादृशानि आवश्यकानि समीचीनानि वा भवेयुः ; इमं उपबन्धं च कर्तुं क्षमते यत् सः विधिः तादृशदिनाङ्कात् आरभ्य यादृशः आदेशे विनिर्दिष्टः भवेत् एवं कृतानां अनुकूलनानां उपान्तरणानां च अधीनं प्रभावी भवेत्, तादृशं किमपि अनुकूलनं उपान्तरणं च कस्मिन् अपि न्यायालये प्रश्नगतं न क्रियेत ।

(३) (२) खण्डगतं किमपि—

(क) राष्ट्रपतये एतत् संविधानस्य प्रारम्भात् [3][वर्षत्रयस्य] समाप्तेः अनन्तरं कस्यापि विधेः किमपि

---

१. संविधानीयः (दुष्करत्वनिवारणं) आदेशः ११-तमः (सां० आ० ९९) द्रष्टव्यः ।

२. भारतस्य असाधारणराजपत्रस्य द्वितीयभागस्य तृतीयखण्डे ५१-तमे पृष्ठे प्रकटितया सां० नि० आ० ११५ क्रमाङ्कितया, ५-६-१९५० दिनाङ्कितया अधिसूचनया; भारतस्य असाधारणराजपत्रस्य द्वितीयभागस्य तृतीयखण्डे ९०३-तमे पृष्ठे प्रकटितया सां० नि० आ० ८७० क्रमाङ्कितया ४-११-१९५० दिनाङ्कितया अधिसूचनया; भारतस्य असाधारण राजपत्रस्य द्वितीयभागस्य तृतीयखण्डे २८७-तमे पृष्ठे प्रकटितया सां० नि० आ ५०८ क्रमाङ्कितया ४-४-१९५१ दिनाङ्कितया अधिसूचनया; भारतस्य असाधारण राजपत्रस्य द्वितीयभागस्य तृतीयखण्डे ६१६I-तमे पृष्ठे प्रकटितया सां० नि० आ० ११४० बी० क्रमाङ्कितया २-७-१९५२ दिनाङ्कितया अधिसूचनया च यथा संशोधितः १९५० वर्षीयः विधीनां अनुकूलनाय आदेशः भारतस्य असाधारणराजपत्रे ४४९-तमे पृष्ठे प्रकटितः द्रष्टव्यः तथा च भारतस्य असाधारणराजपत्रस्य द्वितीयभागस्य तृतीयखण्डे ९२३-पृष्ठे प्रकटितः १९५२ वर्षस्य तिरुवांकुर-कोच्चि-भूम्यर्जनविधीनां अनुकूलनाय आदेशः क्रमाङ्कितः २०-११-१९५२ दृष्टवः ।

३. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य १२-अनुभागेन "वर्षद्वयस्य" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

**भागः २१ —अस्थायिनः, सङ्क्रमणकालिकाः, विशेषाश्च उपबन्धाः—अनु० ३७२-३७३**

अनुकूलनं उपान्तरणं वा कर्तुं शक्तिं ददाति इति; अथवा

(ख) कस्यापि क्षमस्य विधानमण्डलस्य कस्यापि अन्यस्य क्षमस्य प्राधिकारिणः वा राष्ट्रपतिना उक्त-खण्डस्य अधीनं अनुकूलितस्य उपान्तरितस्य वा कस्यापि विधेः निरसनात् संशोधनात् वा निवारयति इति न मन्येत ।

**स्पष्टीकरणम्** १—अस्मिन् अनुच्छेदे "प्रवृत्तः विधिः" इत्येतस्मिन् सः कोपि विधिः अन्तर्भवेत् यः एतत्-संविधानस्य प्रारम्भात्पूर्वं भारतराज्यक्षेत्रे केनापि विधानमण्डलेन अन्येन क्षमेण प्राधिकारिणा वा पारितः निर्मितः वा अभूत्, न च पूर्वं एव निरस्तः आसीत्, यद्यपि सः, तस्य भागाः वा तदा सर्वथा, केषुचित् विशिष्टक्षेत्रेषु वा प्रवृत्ताः न स्युः ।

**स्पष्टीकरणम्** २—भारतराज्यक्षेत्रस्य केनापि विधानमण्डलेन अन्येन वा क्षमेण प्राधिकारिणा पारितस्य प्रणीतस्य वा कस्यापि विधेः यस्य एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं राज्यक्षेत्रातीतः प्रभावः तथा भारत राज्यक्षेत्रे अपि प्रभावः आसीत्, तादृशानां अनुकूलनानां, उपान्तरणानां च अधीनं, यादृशानि पूर्वं उक्तानि, राज्य-क्षेत्रातीतः प्रभावः अनुवर्तेत ।

**स्पष्टीकरणम्** ३—एतदनुच्छेदे कस्यापि कथनस्य एवं अर्थः न ग्राह्यः यत् तत् कमपि अस्थायित्वेन प्रवृत्तं विधिं तस्य समाप्तये नियतात् दिनाङ्कात् अथवा तस्मात् दिनाङ्कात् यस्मिन्, यदि एतत् संविधानं प्रवृत्तं न अभविष्यत् तर्हि सः समाप्तः अभविष्यत्, अनन्तरं अनुवर्तयति इति ।

**स्पष्टीकरणम्** ४—कस्यापि प्रान्तस्य राज्यपालेन १९३५ वर्षस्य भारतशासनाधिनियमस्य ८८-अनुभागस्य अधीनं प्रख्यापितः एतत्संविधानस्य च प्रारम्भात् अव्यवहितपूर्वं प्रवर्तितः अध्यादेशः यदि तत्स्थानीयराज्यस्य राज्य-पालेन पूर्वं एव प्रत्याहृतः न भवेत् तर्हि, तादृशस्य प्रारम्भात् अनन्तरं ३८२-तमानुच्छेदस्य प्रथमखण्डस्य अधीनं कार्यरतायाः तद्राज्यस्य विधानसभायाः प्रथमाधिवेशनात् षण्णां सप्ताहानां समाप्तौ प्रवर्तनात् प्रविरमेत्, तथा एतद-नुच्छेदे कस्यापि कथनस्य एवं अर्थः न ग्राह्यः यत् तत् कमपि एतादृशं अध्यादेशं उक्तकालावधेः अनन्तरं अनुवर्त-यति इति ।

[1][३७२अ. (१) संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य प्रारम्भात् अव्यवहितपूर्वं भारते तस्य कस्मिन् अपि भागे वा प्रवृत्तस्य विधेः उपबन्धान्, एवं संशोधितस्य अस्य संविधानस्य उपबन्धैः अनु-रूपान् कर्तुं राष्ट्रपतिः १९५७ वर्षस्य नवम्बरमासस्य प्रथमदिनाङ्कात् प्राक् कृतेन आदेशेन[2] निरसनरूपेण, संशोधनरूपेण वा विधौ तादृशानि अनुकूलनानि उपान्तरणानि च कर्तुं क्षमते यादृशानि आवश्यकानि समीचीनानि वा स्युः; तथा च एतत् उपबन्धयितुं क्षमते यत् सः विधिः तादृशात् दिनाङ्कात् यः तस्मिन् (आदेशे) विनिर्दिष्टः स्यात् एवं कृतानां अनुकूलनानां उपान्तरणानां च अधीनं प्रवृत्तः भवेत्, तथा च तादृशं किमपि अनुकूलनं उपान्तरणं वा कस्मिन् अपि न्यायालये प्रश्नगतं न क्रियेत । **विधीनां अनुकूलनाय राष्ट्रपतेः शक्तिः ।**

(२) (१) खण्डगतं किमपि क्षमं विधानमण्डलं, अन्यं कमपि क्षमं प्राधिकारिणं एतत् खण्डाधीनं अनु-कूलितस्य, उपान्तरितस्य वा विधेः निरसनात् संशोधनाद् वा निवारयति इति न मन्येत ।]

३७३. यावत् २२-तमानुच्छेदस्य (७) खण्डस्य अधीनं संसद् उपबन्धं न करोति, अथवा यावद् एतत् संविधानस्य प्रारम्भादनन्तरं एकस्य वर्षस्य समाप्तिः न जायते, यद् अपि एनयोः पूर्वतरं भवति, तावत् उक्तः अनुच्छेदः, तस्य (४), (७) खण्डे च संसदं प्रति निर्देशस्य स्थाने राष्ट्रपतिं प्रति निर्देशः तथा तयोः खण्डयोः संसदा निर्मितं कमपि विधिं प्रति निर्देशस्य स्थाने राष्ट्रपतिना कृतस्य आदेशं प्रति निर्देशः क्रियते इति इव प्रभावी भवेत् । **निवारकनिरोधे स्थापितानां जनानां सम्बन्धे दशाविशेषेषु आदेशकरणे राष्ट्रपतेः शक्तिः ।**

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २३-अनुभागेन अन्तर्वेशितः ।

२. १९५६-१९५७ वर्षयोः विधीनां अनुकूलनाय आदेशाः द्रष्टव्याः ।

**'फेडरल' न्यायालयस्य न्यायाधीशानां तथा 'फेडरल' न्यायालये, सपरिषदः सम्राजः समक्षं वा लम्बितानां कार्यप्रवृत्तीनां सम्बन्धे उपबन्धाः ।**

३७४. (१) एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं 'फेडरल' न्यायालये पदस्थाः न्यायाधीशाः, यदि तैः अन्यथा वरणं न कृतं चेत्, एतादृशे प्रारम्भे उच्चतमन्यायालयस्य न्यायाधीशाः भवेयुः, तथा तदनन्तरं एतादृशेषु वेतनेषु, भक्तेषु च, तथा अनुपस्थित्यनुमतेः, निवृत्तिवेतनस्य च विषये तादृशेषु अधिकारेषु तेषां स्वत्वं भवेत् यादृशाः उच्चतमन्यायालयस्य न्यायाधीशानां सम्बन्धे १२५-तमानुच्छेदस्य अधीनं उपबन्धिताः विद्यन्ते ।

(२) एतत् संविधानस्य प्रारम्भे 'फेडरल' न्यायालये लम्बिताः सर्वे व्यवहारवादाः दाण्डिकवादाः, पुनर्विचारप्रार्थनाः, कार्यप्रवृत्तयश्च उच्चतमन्यायालयं नीताः तिष्ठेयुः तथा तेषां श्रवणस्य, अवधारणस्य च अधिकारिता उच्चतमन्यायालयस्य भवेत् तथा 'फेडरल' न्यायालयेन एतत् संविधानस्य प्रारम्भात् पूर्वं उदीरितानां, कृतानां वा निर्णयानां आदेशानां च बलं प्रभावश्च उच्चतमन्यायालयेन ते उदीरिताः कृताः वा इति इव भवेत् ।

(३) एतत् संविधाने किमपि, भारतस्य राज्यक्षेत्रे कस्यापि न्यायालयस्य कस्यापि निर्णयस्य आज्ञप्तेः आदेशस्य वा तद्विषये वा पुनर्विचारप्रार्थनायां याचिकायां वा व्यवस्थां दातुं सपरिषदः सम्राजः अधिकारितायाः प्रयोगं तावत् अमान्यं न कुर्यात् यावत् एतादृश्याः अधिकारितायाः प्रयोगः विधिना प्राधिकृतः वर्तते, तथा एतादृश्यां पुनर्विचारप्रार्थनायां, याचिकायां वा एतत् संविधानस्य प्रारम्भात् अनन्तरं कृतः सपरिषदः सम्राजः कोपि आदेशः सर्वेषां प्रयोजनानां कृते, सः उच्चतमन्यायालयेन तस्य अधिकारितायाः प्रयोगे यः एतद्दृशाय न्यायालयस्य एतत् संविधानेन कृतः विद्यते, कृतः कोपि आदेशः, विज्ञप्तिः वा भवेत् इति इव प्रभावी भवेत् ।

(४) एतत् संविधानस्य प्रारम्भे प्रारम्भात् अनन्तरं च प्रथमानुसूच्याः (ख) भागे विनिर्दिष्टे कस्मिन् अपि राज्ये अन्तः परिषदः रूपेण कार्यरतस्य प्राधिकारिणः तद्राज्ये कस्यापि न्यायालयस्य कस्यापि निर्णयस्य, आज्ञप्तेः आदेशस्य वा पुनर्विचारप्रार्थनां, याचिकां वा ग्रहीतुं तद्विषये व्यवस्थां दातुं, वा अधिकारिता समाप्ता भवेत्; तथा च एतादृशस्य प्राधिकारिणः समक्षं एतादृशे प्रारम्भे लम्बिता सर्वाः पुनर्विचारप्रार्थनाः, अन्याश्च कार्यप्रवृत्तयः उच्चतमन्यायालयाय अन्तरिताः भवेयुः, तेन एव च तद्विषये व्यवस्था दीयेत ।

(५) एतदनुच्छेदस्य उपबन्धान् प्रभाविनः कर्तुं संसद् विधिना अन्यं उपबन्धं निर्मातुं क्षमते ।

**संविधानस्य उपबन्धानां अधीनं न्यायालयानां प्राधिकारिणां च कृत्यकरणे अनुवर्तनम् ।**

३७५. भारतस्य राज्यक्षेत्रे सर्वत्र व्यवहार-दण्ड-राजस्वाधिकारितां धारयन्तः सर्वे न्यायालयाः तथा सर्वे न्यायपालकाः, कार्यपालकाः साचिविकाश्च प्राधिकारिणः अधिकारिणश्च एतत् संविधानस्य उपबन्धानां अधीनं स्वस्व कृत्यानि कुर्वन्तः अनुवर्तेरन् ।

**उच्चन्यायालयीय-न्यायाधीशानां विषये उपबन्धाः ।**

३७६. (१) २१७-तमानुच्छेदस्य (२) खण्डे किमपि सत्यपि, एतत्संविधानस्य प्रारम्भात् अव्यवहितपूर्वं प्रान्तस्य उच्चन्यायालयस्य पदस्थाः न्यायाधीशाः, यदि तैः अन्यथा वरणं न कृतं चेत्, एतादृशे प्रारम्भे तत्स्थानिराज्यस्य उच्चन्यायालयस्य न्यायाधीशाः भवेयुः; तथा तदनन्तरं एतादृशेषु वेतनेषु, भक्तेषु च तथा अनुपस्थित्यनुमतेः, निवृत्तिवेतनस्य च विषये तादृशेषु अधिकारेषु तेषां स्वत्वं भवेत् यादृशाः उच्चन्यायालयस्य न्यायाधीशानां सम्बन्धे २२१-तमानुच्छेदस्य अधीनं उपबन्धिताः विद्यन्ते । [1][एतादृशः न्यायाधीशः, यदि भारतस्य नागरिकः न स्यात् तथापि, एतादृशस्य उच्चन्यायालयस्य मुख्यन्यायमूर्तिपदे, अथवा कस्यापि अन्यस्य उच्चन्यायालयस्य मुख्यन्यायमूर्तिपदे अथवा अन्यन्यायाधीशस्य पदे नियुक्तेः पात्रं भवेत् ।]

(२) एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं प्रथमानुसूच्याः (ख)-भागे विनिर्दिष्टस्य कस्यचित् अपि राज्यस्य स्थानिनि कस्मिन् अपि देशीयराज्ये उच्चन्यायालयस्य पदस्थाः न्यायाधीशाः, यदि तैः अन्यथा वरणं न कृतं चेत्, एतादृशे प्रारम्भे तादृशस्य विनिर्दिष्टस्य राज्यस्य उच्चन्यायालयस्य न्यायाधीशाः भवेयुः तथा च २१७-तमानुच्छेदस्य (१) खण्डे, (२) खण्डे च किमपि सत्यपि, किन्तु तस्य अनुच्छेदस्य (१) खण्डस्य पारन्तुकस्य अधीनं, एतादृशं कालावधिं यावत् पदस्थाः अनुवर्तेरन् यादृशं राष्ट्रपतिः आदेशेन अवधारयितुं क्षमते ।

---

१. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य १३-अनुभागेन अतिरिक्तरूपेण अन्तर्वेशितः ।

(३) अस्मिन् अनुच्छेदे "न्यायाधीशः" इति शब्दे कार्यकारिन्यायाधीशः अपरन्यायाधीशः वा न अन्तर्भवति ।

**भारतस्य नियन्त्रक-महालेखापरीक्षकस्य विषये उपबन्धाः ।**

३७७. एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं पदस्थः भारतस्य महालेखापरीक्षकः, यदि तेन अन्यथा वरणं न कृतं चेत् एतादृशे प्रारम्भे भारतस्य नियन्त्रकमहालेखापरीक्षकः भवेत् तथा तदनन्तरं एतादृशेषु वेतनेषु तथा अनुपस्थित्यनुमतेः, निवृत्तिवेतनस्य च विषये एतादृशेषु अधिकारेषु तस्य स्वत्वं भवेत् यादृशाः भारतस्य नियन्त्रकमहालेखापरीक्षकस्य सम्बन्धे १४८-तमानुच्छेदस्य (३) खण्डस्य अधीनं उपबन्धिताः विद्यन्ते तथा स्वस्य तस्य पदावधेः, समाप्ति यावत् यः एतादृशप्रारम्भात् अव्यवहितपूर्वं तस्य विषये अनुप्रयुक्तानां उपबन्धानां अधीनं अवधारितः भवेत् पदधारणं कुर्वन् अनुवर्तेत ।

**लोकसेवायोगानां विषये उपबन्धाः ।**

३७८. (१) एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं भारताधिनिवेशस्य लोकसेवायोगस्य पदस्थाः सदस्याः, यदि तैः अन्यथा वरणं न कृतं चेत्, एतादृशे प्रारम्भे सङ्घलोकसेवायोगस्य सदस्याः भवेयुः तथा ३१६-तमानुच्छेदस्य (१) खण्डे, (२) खण्डे च किमपि सत्यपि, किन्तु तदनुच्छेदस्य (२) खण्डस्य पारन्तुकस्य अधीनं स्वस्य एतत् पदावधेः समाप्तिं यावत् यः एतादृशप्रारम्भात् अव्यवहितपूर्वं एतादृशसदस्यानां विषये प्रवर्तनीयनियमानां अधीनं अवधारितः भवेत्, पदधारणं कुर्वन्तः अनुवर्तेरन् ।

(२) एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं कस्यापि प्रान्तस्य अथवा प्रान्तानां समूहस्य आवश्यकतानां कृते सेवां कुर्वतः कस्यापि लोकसेवायोगस्य पदस्थाः सदस्याः यदि तैः अन्यथा वरणं न कृतं चेत् यथायथं तत्स्थानीय-राज्यस्य लोकसेवायोगस्य सदस्याः अथवा तत्स्थानीयराज्यानां आवश्यकतानां कृते सेवां कुर्वतः संयुक्तराज्य-सेवायोगस्य सदस्याः भवेयुः तथा ३१६-तमानुच्छेदस्य (१) खण्डे, (२) खण्डे च किमपिसत्यपि, किन्तु तदनुच्छेदस्य (२) खण्डस्य पारन्तुकस्य अधीनं, स्वस्य तत् पदावधेः समाप्तिं यावत् यः एतादृशप्रारम्भात् अव्यवहितपूर्वं एतादृशसदस्यानां विषये प्रवर्तनीयनियमानां अधीनं अवधारितः भवेत्, पदधारणं कुर्वन्तः अनुवर्तेरन् ।

**आन्ध्रप्रदेशस्य विधान-सभायाः अवधेः विषये विशेषोपबन्धः ।**

[1][३७८अ. १७२-तमानुच्छेदे किमपि सत्यपि, आन्ध्रप्रदेशस्य विधानसभा राज्यानां पुनर्घटनं अधिनियमः, १९५६ इत्यस्य २८-अनुभागस्य; २९-अनुभागस्य च उपबन्धानां अधीनं, यदि सा तत्पूर्वं विघटिता न भवेत्, उक्ते २९-अनुभागे विनिर्दिष्टे पञ्चानां वर्षाणां अवधौ अनुवर्तेत किन्तु न तस्मात् दीर्घतरे कालावधौ; तथा च तादृशस्य अवधेः समाप्तिः तस्याः विधानसभायाः विघटनरूपेण प्रवर्तेत ।]

३७९-३९१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च निरसिताः ।

**दुष्करत्वनिवारणे राष्ट्रपतेः शक्तिः ।**

३९२. (१) राष्ट्रपतिः केषामपि दुष्करत्वानां, विशेषतः १९३५ वर्षस्य भारतशासनाधिनियमस्य उपबन्धेभ्यः एतत् संविधानस्य उपबन्धेषु सङ्क्रमणसम्बन्धे निवारणाय आदेशेन निदेष्टुं क्षमते यत् एतत् संविधानं तस्मिन् आदेशे विनिर्दिष्टकालावधौ उपान्तरणरूपेण वा परिवर्धनरूपेण वा लोपरूपेण वा, तादृशानां, अनुकूलनानां अधीनं यादृशानि सः आवश्यकानि समीचीनानि वा मन्येत प्रभावी भवेत्—

परन्तु पञ्चमभागस्य द्वितीयाध्यायाधीनं सम्यग्रूपेण घटितायाः संसदः प्रथमाधिवेशनस्य अनन्तरं एतादृशः कोपि आदेशः न क्रियेत ।

(२) (१) खण्डाधीनं कृतः प्रत्येकादेशः संसदः समक्षं स्थाप्येत ।

(३) एतेन अनुच्छेदेन, ३२४-तमानुच्छेदेन, ३६७-तमानुच्छेदस्य तृतीय खण्डेन, ३९१-तमानुच्छेदेन च राष्ट्रपतये प्रदत्ताः शक्तयः एतत् संविधानस्य प्रारम्भात् पूर्वं भारताधिनिवेशस्य 'गवर्नरजनरल' इत्याख्येन प्रयोक्तव्याः भवेयुः ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २४-अनुभागेन अन्तर्वेशितः ।

भागः २२

## संक्षिप्तं नाम, प्रारम्भः, निरसनानि च

**संक्षिप्तं नाम ।**

**३९३.** एतत् संविधानं "भारतस्य संविधानं" इति अभिधीयेत ।

**प्रम्भरः ।**

**३९४.** एषः अनुच्छेदः तथा ५, ६, ७, ८, ९, ६०, ३२४, ३६६, ३६७, ३७९, ३८०, ३८८, ३९१, ३९२ एवं ३९३ इत्येते अनुच्छेदाः तत्कालं प्रवृत्ताः भवेयुः, तथा एतत् संविधानस्य अवशिष्टाः उपबन्धाः १९५० वर्षस्य जान्युअरीमासस्य ३१-तमे दिने प्रवृत्ताः भवेयुः यत् दिनं अस्मिन् संविधाने एतत् संविधानस्य प्रारम्भरूपेण निर्दिश्यते ।

**निरसनानि ।**

**३९५.** भारतस्वाधीनताधिनियमः, १९४७ तथा च भारतशासनाधिनियमः १९३५ स्वस्य संशोधकैः अनुपूरकैः वा सर्वैः अधिनियमनैः सह एतेन निरस्येते किन्तु एषु अधिनियमनेषु 'प्रिविकौंसिल' अधिकारिताविलोपनाधिनियमः, १९४९ नान्तर्भवति ।

[1][प्रथमा अनुसूची

[अनुच्छेदौ १ तथा ४]

## १. राज्यानि

| राज्यानां नामानि | राज्यक्षेत्राणि |
| --- | --- |
| १. आन्ध्रप्रदेशराज्यम् | [2][तानि राज्यक्षेत्राणि यानि आन्ध्रराज्याधिनियमः, १९५३ इत्यस्य ३-अनुभागस्य (१) उपानुभागे, राज्यानां पुनर्घटनाधिनियमः, १९५६ इत्यस्य ३-अनुभागस्य (१) उपानुभागे, आन्ध्रप्रदेशस्य मद्रासस्य च (सीमापरिवर्तनं) अधिनियमः, १९५९ इत्यस्य प्रथमानुसूच्यां, तथा आन्ध्रप्रदेशस्य मैसूरस्य च (राज्यक्षेत्रान्तरणं) अधिनियमः, १९६८ इत्यस्य अनुसूच्यां च विनिर्दिष्टानि सन्ति; किन्तु तानि क्षेत्राणि एतस्मिन् नान्तर्भवन्ति यानि आन्ध्रप्रदेशस्य मद्रासस्य च (सीमापरिवर्तनं) अधिनियमः, १९५९ इत्यस्य द्वितीयानुसूच्यां विनिर्दिष्टानि सन्ति । |
| २. असमराज्यम् | तानि राज्यक्षेत्राणि यानि एतत्संविधानस्य प्रारम्भात् अव्यवहितपूर्वं असम-प्रान्ते, खासीराज्येषु तथा असमजनजातिक्षेत्रेषु समाविष्टानि आसन्, किन्तु तानि राज्यक्षेत्राणि एतस्मिन् नान्तर्भवन्ति यानि असमराज्यस्य (सीमापरिवर्तनं) अधिनियमः, १९५१ इत्यस्य अनुसूच्यां विनिर्दिष्टानि सन्ति; [3][तथा च यानि नागालैण्डराज्याधिनियमः, १९६२ इत्यस्य ३-अनुभागस्य (१) उपानुभागे विनिर्दिष्टानि सन्ति] [4][तथा च पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ इत्यस्य ५-अनुभागे, ६-अनुभागे, ७-अनुभागे च विनिर्दिष्टानि सन्ति ।] |

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २-अनुभागेन प्रथमानुसूच्याः प्रति एषा अनुसूची संनिवेशिता ।

२. आन्ध्रप्रदेशस्य मैसूरस्य च (राज्यक्षेत्रान्तरणं) अधिनियमः, १९६८ (१९६८ वर्षस्य ३६-तमः) इत्यस्य ४-अनुभागेन पूर्ववर्तिन्याः प्रविष्ट्याः प्रति एषा प्रविष्टिः संनिवेशिता (१-१०-१९६८ दिनाङ्कात् प्रवर्तमान-प्रभावेण) ।

३. नागालैण्डराज्याधिनियमः, १९६२ (१९६२ वर्षस्य २७-तमः) इत्यस्य ४-अनुभागेन एतत् परिवर्धितम् (१-१२-१९६३ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः), इत्यस्य ९-अनुभागेन एतत् परिवर्धितम् (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**प्रथमा अनुसूची**

| राज्यानां नामानि | राज्यक्षेत्राणि |
|---|---|
| ३. बिहारराज्यम् | [1][तानि राज्यक्षेत्राणि यानि एतत्संविधानस्य प्रारम्भात् अव्यवहितपूर्वं बिहारप्रान्ते समाविष्टानि आसन्, अथवा यानि तत्प्रान्तस्य भागाः इव इति प्रशासितानि आसन्; तथा च तानि राज्यक्षेत्राणि यानि बिहारस्य, उत्तरप्रदेशस्य च (सीमापरिवर्तनं) अधिनियमः, १९६८ इत्यस्य ३-अनुभागस्य (१) उपानुभागस्य (क) खण्डे विनिर्दिष्टानि सन्ति; किन्तु एतस्मिन् नान्तर्भवन्ति तानि राज्यक्षेत्राणि यानि बिहारस्य पश्चिमबङ्गालस्य च (राज्यक्षेत्रान्तरणं) अधिनियमः, १९५६ इत्यस्य, ३-अनुभागस्य (१) उपानुभागस्य (ख) खण्डे विनिर्दिष्टानि सन्ति, तथा च यानि बिहारस्य उत्तरप्रदेशस्य च (सीमापरिवर्तनं) अधिनियमः, १९६८ इत्यस्य ३-अनुभागस्य (१) उपानुभागे विनिर्दिष्टानि सन्ति।] |
| [2][४. **गुजरातराज्यम्** | तानि राज्यक्षेत्राणि यानि मुम्बई-पुनर्घटनाधिनियमः, १९६० इत्यस्य ३-अनुभागस्य (१) उपानुभागे निर्दिष्टानि सन्ति।] |
| ५. **केरलराज्यम्** | तानि राज्यक्षेत्राणि यानि राज्यानां पुनर्घटनाधिनियमः, १९५६ इत्यस्य ५-अनुभागस्य (१) उपानुभागे विनिर्दिष्टानि सन्ति। |
| ६. **मध्यप्रदेशराज्यम्** | तानि राज्यक्षेत्राणि यानि राज्यानां पुनर्घटनाधिनियमः, १९५६ इत्यस्य ९-अनुभागस्य (१) उपानुभागे [3][तथा च राजस्थानस्य मध्यप्रदेशस्य च (राज्यक्षेत्रान्तरणं) अधिनियमः, १९५९ इत्यस्य प्रथमानुसूच्यां] विनिर्दिष्टानि सन्ति। |
| [4][७. **तमिलनाडुराज्यम्**] | तानि राज्यक्षेत्राणि यानि संविधानस्य प्रारम्भात् अव्यवहितपूर्वं मद्रास-प्रान्ते समाविष्टानि आसन्, अथवा यानि तत्प्रान्तस्य भागाः इव इति प्रशासितानि आसन्, तथा च राज्यानां पुनर्घटनाधिनियमः, १९५६ इत्यस्य ४-अनुभागे[5][तथा च आन्ध्रप्रदेशस्यमद्रासस्य च (सीमापरिवर्तनं) अधिनियमः, १९५९ इत्यस्य द्वितीयानुसूच्यां] विनिर्दिष्टानि सन्ति; किन्तु एतस्मिन् नान्तर्भवन्ति तानि राज्यक्षेत्राणि यानि आन्ध्रराज्या-धिनियमः, १९५३ इत्यस्य ३-अनुभागस्य (१) उपानुभागे, ४-अनुभागस्य |

१. बिहारस्य उत्तरप्रदेशस्य च (सीमापरिवर्तनं) अधिनियमः, १९६८ (१९६८ वर्षस्य २४-तमः) इत्यस्य ४-अनुभागेन पूर्ववर्तिन्याः प्रविष्ट्याः प्रति एषा संनिवेशिता (१०-६-१९७० दिनाङ्कात् प्रवर्तमान-प्रभावेण)।

२. मुम्बई-पुनर्घटनं अधिनियमः, १९६० (१९६० वर्षस्य ११-तमः) इत्यस्य ४-अनुभागेन ४-प्रविष्ट्याः प्रति एषा संनिवेशिता (१-५-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण)।

३. राजस्थानस्य मध्यप्रदेशस्य च (राज्यक्षेत्रान्तरणं) अधिनियमः, १९५९ (१९५९-वर्षस्य ४७-तमः) इत्यस्य ४-अनुभागेन एतत् अन्तर्वेशितम् (१-१०-१९५९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

४. मद्रासराज्यस्य (नामपरिवर्तनं) अधिनियमः, १९६८ (१९६८ वर्षस्य ५३-तमः) इत्यस्य ५-अनुभागेन "मद्रास" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१४-१-१९६९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

५. आन्ध्रप्रदेशस्य मद्रासस्य च (सीमापरिवर्तनं) अधिनियमः, १९५९ (१९५९ वर्षस्य ५६-तमः) इत्यस्य ६-अनुभागेन एतत् अन्तर्वेशितम् (१-४-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण)।

**प्रथमा अनुसूची**

| राज्यानां नामानि | **राज्यक्षेत्राणि** |
|---|---|
| | च (१) उपानुभागे विनिर्दिष्टानि सन्ति, तथा च [1][यानि राज्यानां पुनर्घटनाधिनियमः, १९५६ इत्यस्य ५-अनुभागस्य (१) उपानुभागस्य (ख) खण्डे, ६-अनुभागे, तथा ७-अनुभागस्य (१) उपानुभागस्य (घ) खण्डे च विनिर्दिष्टानि सन्ति, अपरं च यानि आन्ध्रप्रदेशस्य मद्रासस्य च (सीमापरिवर्तनं) अधिनियमः, १९५९ इत्यस्य प्रथमानुसूच्यां विनिर्दिष्टानि सन्ति ।] |
| [2][८. **महाराष्ट्रराज्यम्** | तानि राज्यक्षेत्राणि यानि राज्यानां **पुनर्घटनाधिनियमः**, १९५६ इत्यस्य ८-अनुभागस्य (१) उपानुभागे विनिर्दिष्टानि सन्ति, किन्तु एतस्मिन् नान्तर्भवन्ति तानि राज्यक्षेत्राणि यानि मुम्बई-पुनर्घटनाधिनियमः, १९६० इत्यस्य ३-अनुभागस्य (१) उपानुभागे निर्दिष्टानि सन्ति ।] |
| [3][९. **कर्णाटकराज्यम्**] | तानि राज्यक्षेत्राणि यानि राज्यानां पुनर्घटनाधिनियमः, १९५६ इत्यस्य ७-अनुभागस्य (१) उपानुभागे विनिर्दिष्टानि सन्ति; [4][किन्तु एतस्मिन् नान्तर्भवन्ति तानि राज्यक्षेत्राणि यानि आन्ध्रप्रदेशस्य मैसूरस्य च (राज्यक्षेत्रान्तरणं) अधिनियमः, १९६८ इत्यस्य अनुसूच्यां विनिर्दिष्टानि सन्ति ।] |
| [5][१०.] **ओडिश्शाराज्यम्** | तानि राज्यक्षेत्राणि यानि एतत्संविधानस्य प्रारम्भात् अव्यवहितपूर्वं ओडिश्शाप्रान्ते समाविष्टानि आसन् अथवा यानि तत्प्रान्तस्य भागाः इव इति प्रशासितानि आसन् । |
| [5][११.] **पञ्जाबराज्यम्** | तानि राज्यक्षेत्राणि यानि राज्यानां पुनर्घटनाधिनियमः, १९५६ इत्यस्य ११-अनुभागे विनिर्दिष्टानि सन्ति, [6][तथा च यानि अर्जितराज्यक्षेत्राणां |

---

१. आन्ध्रप्रदेशस्य मद्रासस्य च (सीमापरिवर्तनं) अधिनियमः, १९५९ (१९५९ वर्षस्य ५६-तमः) इत्यस्य ६-अनुभागेन कतिपयेभ्यः शब्देभ्यः प्रति एतत् संनिवेशितम् (१-४-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. मुम्बई-पुनर्घटनं अधिनियमः, १९६० (१९६० वर्षस्य ११-तमः) इत्यस्य ४-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता (१-५-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. मैसूरराज्यस्य (नामपरिवर्तनं) अधिनियमः, १९७३ (१९७३ वर्षस्य ३१-तमः) इत्यस्य ५-अनुभागेन "९ मैसूर" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१-११-१९७३ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. आन्ध्रप्रदेशस्य मैसूरस्य च (राज्यक्षेत्रान्तरणं) अधिनियमः, १९६८ (१९६८ वर्षस्य ३६-तमः) इत्यस्य ४-अनुभागेन एतत् अन्तर्वेशितम् (१-१०-१९६८ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. मुम्बई-पुनर्घटनं अधिनियमः, १९६० (१९६० वर्षस्य ११ तमः) इत्यस्य ४ अनुभागेन ८ तः १४-यावत् प्रविष्ट्यः ९ तः १५ यावत् इति क्रमाङ्किताः ।

६. अर्जितराज्यक्षेत्राणां (विलयनं) अधिनियमः, १९६० (१९६० वर्षस्य ६४-तमः) इत्यस्य ४-अनुभागेन, एतत् अन्तर्वेशितम् (१७-१-१९६१ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**प्रथमा अनुसूची**

| राज्यानां नामानि | राज्यक्षेत्राणि |
| --- | --- |
| | (विलयनं) अधिनियमः, १९६० इत्यस्य प्रथमानुसूच्याः २-भागे निर्दिष्टानि सन्ति;] [1][किन्तु एतस्मिन् नान्तर्भवन्ति तानि राज्यक्षेत्राणि यानि संविधानस्य (नवमं संशोधनं) अधिनियमः, १९६० इत्यस्य प्रथमानुसूच्याः २-भागे निर्दिष्टानि सन्ति;] [2][तथा च यानि पञ्जाब-पुनर्घटनं-अधिनियमः, १९६६ इत्यस्य ३-अनुभागस्य (१) उपानुभागे ४-अनुभागे तथा ५-अनुभागस्य (१) उपानुभागे विनिर्दिष्टानि सन्ति।] |
| [3][१२.] **राजस्थानराज्यम्** | तानि राज्यक्षेत्राणि यानि राज्यानां पुनर्घटनाधिनियमः, १९५६ इत्यस्य १०-अनुभागे विनिर्दिष्टानि सन्ति; [4][किन्तु एतस्मिन् नान्तर्भवन्ति तानि राज्यक्षेत्राणि यानि राजस्थानस्य मध्यप्रदेशस्य च (राज्यक्षेत्रान्तरणं) अधिनियमः, १९५९ इत्यस्य प्रथमानुसूच्यां विनिर्दिष्टानि सन्ति।] |
| [3][१३.] **उत्तर प्रदेशराज्यम्** | [5][तानि राज्यक्षेत्राणि यानि एतत् संविधानस्य प्रारम्भात् अव्यवहित-पूर्वं संयुक्तप्रान्तः इति नाम्ना ज्ञाते प्रान्ते समाविष्टानि आसन् अथवा तत्प्रान्तस्य भागाः इव इति प्रशासितानि आसन्; तानि राज्यक्षेत्राणि यानि बिहारस्य उत्तरप्रदेशस्य च (सीमापरिवर्तनं) अधिनियमः, १९६८ इत्यस्य ४-अनुभागस्य (१) उपानुभागस्य (ख) खण्डे विनिर्दिष्टानि सन्ति; तथा तानि राज्यक्षेत्राणि यानि हरियाणोत्तरप्रदेशयोः (सीमापरिवर्तनं) अधिनियमः, १९७९ इत्यस्य ४-अनुभागस्य (१) उपानुभागस्य (ख) खण्डे विनिर्दिष्टानि सन्ति; किन्तु एतस्मिन् नान्तर्भवन्ति तानि राज्यक्षेत्राणि यानि बिहारस्य उत्तरप्रदेशस्य च (सीमा-परिवर्तनं) अधिनियमः, १९६८ इत्यस्य ३-अनुभागस्य (१) उपानुभागस्य (क) खण्डे विनिर्दिष्टानि सन्ति, तथा च तानि अपि राज्यक्षेत्राणि यानि हरियाणोत्तरप्रदेशयोः (सीमापरिवर्तनं) अधिनियमः, १९७९ इत्यस्य ४-अनुभागस्य (१) उपानुभागस्य (क) खण्डे विनिर्दिष्टानि सन्ति।] |

---

१. संविधानस्य (नवमं संशोधन) अधिनियमः, १९६० इत्यस्य ३-अनुभागेन एतत् परिवर्धितम् (१७-१-१९६१ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. पञ्जाब-पुनर्घटनं अधिनियमः, १९६६ (१९६६ वर्षस्य ३१-तमः) इत्यस्य ७-अनुभागेन एतत् अन्तर्वेशितम् (१-११-१९६६ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

३. मुम्बई-पुनर्घटनं अधिनियमः, १९६० (१९६० वर्षस्य १४-तमः) इत्यस्य ४-अनुभागेन ८ तः १४ यावत् प्रविष्ट्यः ९ तः १५ यावत् इति क्रमाङ्किताः (१-५-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण)।

४. राजस्थानस्य मध्यप्रदेशस्य च (राज्यक्षेत्रान्तरणं) अधिनियमः, १९५९ (१९५९ वर्षस्य ४७-तमः) इत्यस्य ४-अनुभागेन एतत् अन्तर्वेशितम् (१-१०-१९५९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

५. हरियाणोत्तरप्रदेशयोः (सीमापरिवर्तनं) अधिनियमः, १९७९ (१९७९ वर्षस्य ३१-तमः) इत्यस्य ५क-अनुभागेन पूर्ववर्तिन्याः प्रविष्ट्याः प्रति एषा प्रविष्टिः संनिवेशिताः (१५-९-१९८३ दिनाङ्कात् प्रवर्तमान-प्रभावेण)।

## प्रथमा अनुसूची

| राज्यानां नामानि | राज्यक्षेत्राणि |
|---|---|
| [1] [१४.] **पश्चिमबङ्गालराज्यम्** | तानि राज्यक्षेत्राणि यानि एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं पश्चिमबङ्गालप्रान्ते समाविष्टानि आसन् अथवा यानि तत्प्रान्तस्य भागाः इवइति प्रशासितानि आसन्, तथा चन्द्रनगरस्य (विलयनं) अधिनियमः, १९५४ इत्यस्य २-अनुभागस्य (ग) खण्डे यथापरिभाषितचन्द्रनगरस्य राज्यक्षेत्रं, तथा च तानि राज्यक्षेत्राणि यानि विहारस्य पश्चिमबङ्गालस्य च (राज्यक्षेत्रान्तरणं) अधिनियमः, १९५६ इत्यस्य ३-अनुभागस्य (१) उपानुभागे विनिर्दिष्टानि सन्ति । |
| [1] [१५.] **जम्मू-कश्मीरराज्यम्** | तद्राज्यक्षेत्रं यत् एतत्संविधानस्य प्रारम्भात् अव्यवहितपूर्वं जम्मू-कश्मीर-देशीयराज्ये समाविष्टं आसीत् । |
| [2] [१६. **नागालैंडराज्यम्** | तानि राज्यक्षेत्राणि यानि नागालैंड-राज्याधिनियमः, १९६२ इत्यस्य २-अनुभागस्य (१) उपानुभागे विनिर्दिष्टानि सन्ति ।] |
| [3] [१७. **हरियाणाराज्यम्** | [4] [तानि राज्यक्षेत्राणि यानि पञ्जाब-पुनर्घटनं अधिनियमः, १९६६ इत्यस्य ३-अनुभागस्य (१) उपानुभागे विनिर्दिष्टानि सन्ति, तथा च यानि हरियाणोत्तरप्रदेशयोः (सीमापरिवर्तनं) अधिनियमः, १९७९ इत्यस्य ४-अनुभागस्य (१) उपानुभागस्य (क) खण्डे विनिर्दिष्टानि सन्ति; किन्तु एतस्मिन् नान्तर्भवन्ति तानि राज्यक्षेत्राणि यानि एतदधिनियमस्य ४ अनुभागस्य (१) उपानुभागस्य (ख) खण्डे विनिर्दिष्टानि सन्ति । ] |
| [5] [१८. **हिमाचलप्रदेशराज्यम्** | तानि राज्यक्षेत्राणि यानि एतत्संविधानस्य प्रारम्भात् अव्यवहितपूर्वं हिमाचलप्रदेशः इति नामकः, 'विलासपुरं' इति नामकश्च मुख्यायुक्तयोः प्रान्तौ इव इति प्रशासिते आस्ताम् तथा तानि राज्यक्षेत्राणि यानि पञ्जाब-पुनर्घटनं अधिनियमः, १९६६ इत्यस्य ६-अनुभागस्य (१) उपानुभागे विनिर्दिष्टानि सन्ति ।] |
| [6] [१९. **मणिपुरराज्यम्** | तद्राज्यक्षेत्रं यत् एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं मणिपुरनामकः मुख्यायुक्तस्य प्रान्तः इव इति प्रशासितं आसीत् ।] |

---

१. मुम्बई-पुनर्घटनं अधिनियमः, १९६० (१९६० वर्षस्य ११-तमः) इत्यस्य ४-अनुभागेन ८तः १४ यावत् प्रविष्टयः ९तः १५ यावत् इति क्रमाङ्किता (१-५-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. नागालैण्डराज्याधिनियमः, १९६२ (१९६२ वर्षस्य २७-तमः) इत्यस्य ४-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता (१-१२-१९६३ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. पञ्जाब-पुनर्घटनं अधिनियमः, १९६६ (१९६६ वर्षस्य ३१-तमः) इत्यस्य ७-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता (१-११-१९६६ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. हरियाणोत्तरप्रदेशयोः (सीमापरिवर्तनं) अधिनियमः, १९७९ (१९७९ वर्षस्य ३१-तमः इत्यस्य ५ (ख) अनुभागेन पूर्ववर्तिन्याः प्रविष्ट्याः प्रति एषा प्रविष्टिः संनिवेशिता (१५-११-१९८३ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. हिमाचलप्रदेशराज्याधिनियमः १९७० (१९७० वर्षस्य ५३-तमः) इत्यस्य ४-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता (२५-१-१९७१ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

६. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ९-अनुभागेन एताः प्रविष्टयः अन्तर्वेशिताः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**प्रथमा अनुसूची**

| राज्यानां नामानि | राज्यक्षेत्राणि |
|---|---|
| २० त्रिपुराराज्यम् | तद्राज्यक्षेत्रं यत् एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं त्रिपुरानामकः मुख्यायुक्तस्य प्रान्तः इव इति प्रशासितं आसीत् । |
| २१. मेघालयराज्यम् | तद्राज्यक्षेत्रं यत् पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ इत्यस्य ५-अनुभागे विनिर्दिष्टं अस्ति ।] |
| [1][२२.] सिक्किमराज्यम् | तद्राज्यक्षेत्रं यत् संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य प्रारम्भात् अव्यवहितपूर्वं सिक्किमे समाविष्टं आसीत् ।] |

## २. संघराज्यक्षेत्राणि

| नामानि | विस्तारः |
|---|---|
| १. दिल्लीक्षेत्रम् | तद्राज्यक्षेत्रं यत् एतत्संविधानस्य प्रारम्भात् अव्यवहितपूर्वं दिल्लीनाम्नि मुख्यायुक्तस्य प्रान्ते समाविष्टं आसीत् । |
| [2][* * | * * * *] |
| [3][* * | * * * *] |
| [4][२] अन्दमान-निकोबार द्वीप-क्षेत्रम् | तद्राज्यक्षेत्रं यत् एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं अन्दमान-निकोबारद्वीपयोः मुख्यायुक्तस्य प्रान्ते समाविष्टं आसीत् । |
| [4][३] [5][लक्षद्वीप-क्षेत्रम्] | तद्राज्यक्षेत्रं यत् राज्यानां पुनर्घटनस्य अधिनियमः, १९५६ इत्यस्य ६-अनुभागे विनिर्दिष्टं अस्ति । |
| [6][[4][४] दादरा-नगर हवेली क्षेत्रम् | तद्राज्यक्षेत्रं यत् १९६१ वर्षस्य अगस्तमासस्य ११ दिनाङ्कात् अव्यवहितपूर्वं स्वतन्त्रे दादरानगरहवेलीक्षेत्रे समाविष्टं आसीत् ।] |

---

१. संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य २-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता (२६-४-१९७५ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. हिमाचलप्रदेशराज्याधिनियमः, १९७० (१९७० वर्षस्य ५३-तमः) इत्यस्य ४-अनुभागेन हिमाचलप्रदेश-सम्बन्धिनी २-प्रविष्टिः लोपिता (२५-१-१९७१ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ९-अनुभागेन मणिपुर-सम्बन्धिनी, त्रिपुरासम्बन्धिनी च प्रविष्टी लोपिते) (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. उपर्युक्ताधिनियमस्य ९-अनुभागेन ४ तः ९ यावत् प्रविष्ट्यः २ तः ७ यावत् इति पुनः क्रमाङ्किताः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. लक्षद्वीप-मिनिकोइ-अमीनदीवि-द्वीपानां (नामपरिवर्तनं) अधिनियमः, १९७३ (१९७३ वर्षस्य ३४-तमः) इत्यस्य ५-अनुभागेन "लक्षद्वीप-मिनिकोइ-अमीनदीवि-द्वीपक्षेत्रं" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

६. संविधानस्य (दशमं संशोधनं) अधिनियमः, १९६१ इत्यस्य २-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता ।

## प्रथमा अनुसूची

| नामानि | विस्तारः |
|---|---|
| [1][[2][५] **गोवा-दमण-दीव-क्षेत्रम्** | तानि राज्यक्षेत्राणि यानि १९६१ वर्षस्य दिसम्बरमासस्य २०-तम-दिनाङ्कात् अव्यवहितपूर्वं गोवा-दमण-दीव इत्येतेषु समाविष्टानि आसन् ।] |
| [3][[2][६] **पाण्डिचेरि-क्षेत्रम्** | तानि राज्यक्षेत्राणि यानि १९६२ वर्षस्य अगस्तमासस्य १६-तमदिनाङ्कात् अव्यवहितपूर्वं भारते पाण्डिचेरि-कारिकल-माही-यनम-नामसु फ्रांसीय-वसतिषु समाविष्टानि आसन् ।] |
| [4][[2][७] **चण्डीगढ़क्षेत्रम्** | तानि राज्यक्षेत्राणि यानि पञ्जाब-पुनर्घटनं अधिनियम, १९६६ इत्यस्य ४-अनुभागे विनिर्दिष्टानि सन्ति ।] |
| [5][८ **मिजोरम्क्षेत्रम्** | तानि राज्यक्षेत्राणि यानि पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ इत्यस्य ६-अनुभागे विनिर्दिष्टानि सन्ति । |
| ९ **अरुणाचलप्रदेशक्षेत्रम्** | तानि राज्यक्षेत्राणि यानि पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ इत्यस्य ७-अनुभागे विनिर्दिष्टानि सन्ति ।] |

---

१. संविधानस्य (द्वादशं संशोधनं) अधिनियमः, १९६२ इत्यस्य २-अनुभागेन अन्तर्वेशितम् ।

२. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१, (१९७१ वर्षस्य ८१-तमः) इत्यस्य ९-अनुभागेन ४ तः ६ यावत् प्रविष्ट्यः २ तः ७ यावत् इति पुनः क्रमाङ्किता (२१-१-१९७८ दिनाङ्कात् प्रवर्तमान प्रभावेण )।

३. संविधानस्य (चतुर्दशं संशोधनं) अधिनियमः, १९६२ इत्यस्य ३-अनुभागेन, ७ अनुभागेन च अन्तर्वेशितं (१६-८-१९६२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. पञ्जाब-पुनर्घटनं अधिनियमः, १९६६ (१९६६ वर्षस्य ३१-तमः) इत्यस्य ७-अनुभागेन अन्तर्वेशितम् (१-११-१९६६ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ९-अनुभागेन एते प्रविष्टी अन्तर्वेशिते (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

## द्वितीया अनुसूची

**[अनुच्छेदाः—५९ (३), ६५ (३), ७५ (६), ९७, १२५, १४८ (३), १५८ (३), १६४ (५), १८६ तथा २२१]**

### अ—भागः

**राष्ट्रपतेः तथा [1][ * * * ] राज्यानां राज्यपालानां कृते उपबन्धाः**

१. राष्ट्रपतये तथा [1][* * *] राज्यानां राज्यपालेभ्यः निम्नलिखिताः उपलब्धयः प्रतिमासं सन्दीयेरन् तद्यथा—

| | |
|---|---|
| राष्ट्रपतिः | १०,००० रूप्यकाणि |
| राज्यस्य राज्यपालः | ५,५०० रूप्यकाणि |

२. राष्ट्रपतये तथा [2][ * * * ] राज्यानां राज्यपालेभ्यः तादृशानि भक्तानि अपि सन्दीयेरन् यादृशानि क्रमशः भारताधिनिवेशस्य 'गवर्नरजनरल' इति आख्याय तथा तत्स्थानिप्रान्तानां 'गवर्नर' इति आख्येभ्यः एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं सन्देयानि आसन् ।

३. राष्ट्रपतेः तथा [3][ * * * ] राज्यानां राज्यपालानां स्वस्वपदावधौ निरन्तरं तादृशेषु विशेषाधिकारेषु स्वत्वं भवेत् यादृशेषु एतत्संविधानस्य प्रारम्भात् अव्यवहितपूर्वं क्रमशः 'गवर्नरजनरल' इति आख्यस्य तथा तत्स्थानिप्रान्तानां 'गवर्नर' इति आख्यानां आसीत् ।

४. यदा उपराष्ट्रपतिः, अन्यः कश्चित् जनः वा राष्ट्रपतेः कृत्यानि निर्वहति, तद्रूपेण वा कार्यं करोति अथवा अन्यः कश्चित् जनः राज्यपालस्य कृत्यानि निर्वहति, तदा तस्य तादृशेषु एव उपलब्धिषु, भक्तेषु, विशेषाधिकारेषु च स्वत्वं भवेत् यादृशेषु यथायथं राष्ट्रपतेः राज्यपालस्य वा वर्तते यस्य कृत्यानि सः निर्वहति, यद्रूपेण वा सः कार्यं करोति ।

[4][ * * * * ]

### इ—भागः

**लोकसभायाः अध्यक्षस्य, उपाध्यक्षस्य च तथा राज्यसभायाः सभापतेः, उपसभापतेश्च तथा [5][* * * ] राज्यस्य विधानसभायाः अध्यक्षस्य, उपाध्यक्षस्य च तथा [6][ * * * ] विधानपरिषदः सभापतेः उपसभापतेश्च सम्बन्धे उपबन्धाः**

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागे अनुसूच्या च "प्रथमानुसूच्याः क-भागे उल्लिखितानां" इत्येते शब्दाः लोपिताः ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "एवं उल्लिखित" इत्येतौ शब्दौ लोपितौ ।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "एतादृश" इति शब्दः लोपितः ।

४. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "(आ)—भागः" लोपितः ।

५. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः क-भागीय" इत्येषः शब्दसमूहः लोपितः ।

६. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "एतादृशस्य कस्यापि राज्यस्य" इति एते शब्दाः लोपिताः ।

## द्वितीया अनुसूची

७. लोकसभायाः अध्यक्षाय, राज्यसभायाश्च सभापतये तादृशानि वेतने भक्तानि च सन्दीयेरन् यादृशानि भारताधिनिवेशस्य संविधानसभायाः अध्यक्षाय एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं सन्देयानि आसन्, तथा लोकसभायाः उपाध्यक्षाय, राज्यसभायाश्च उपसभापतये तादृशानि वेतने भक्तानि च सन्दीयेरन् यादृशानि भारताधिनिवेशस्य संविधानसभायाः उपाध्यक्षाय एतत्संविधानस्य प्रारम्भात् अव्यवहितपूर्वं सन्देयानि आसन् ।

८. [1][ * * * ] राज्यस्य विधानसभायाः अध्यक्षाय, उपाध्यक्षाय च तथा [2][ * * * ] विधान-परिषदः सभापतये, उपसभापतये च तादृशानि वेतनानि भक्तानि च सन्दीयेरन् यादृशानि क्रमशः तत्स्थानिप्रान्तस्य विधानसभायाः अध्यक्षाय, उपाध्यक्षाय च तथा विधानपरिषदः सभापतये उपसभापतये च एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं सन्देयानि आसन्, यत्र च तत्स्थानिप्रान्ते एतादृशप्रारम्भात् अव्यवहितपूर्वं कापि विधानपरिषत् न आसीत् तत्र तद्राज्यस्य विधानपरिषदः सभापतये, उपसभापतये च तादृशानि वेतने भक्तानि च सन्दीयेरन् यादृशानि तद्राज्यस्य राज्यपालः अवधारयेत् ।

### ई—भागः

**उच्चतमन्यायालयस्य तथा [3][ * * * ] उच्चन्यायालयानां न्यायाधीशानां सम्बन्धे उपबन्धाः**

९. (१) उच्चतमन्यायालयस्य न्यायाधीशेभ्यः वास्तविकसेवायां यापितस्य कालस्य विषये निम्नलिखितमानेन प्रतिमासं वेतनं सन्दीयेत; तद्यथा—

| | |
|---|---|
| मुख्यन्यायमूर्तिः | ५,००० रूप्यकाणि |
| कोपि अन्यः न्यायाधीशः | ४,००० रूप्यकाणि |

परन्तु यदि उच्चतमन्यायालयस्य न्यायाधीशेन स्वनियुक्तिकाले भारतशासनस्य, तत्पूर्ववर्तिशासनेषु कस्यापि वा अथवा राज्यशासनस्य तत्पूर्ववर्तिशासनेषु कस्यापि वा पूर्वकृतायाः सेवायाः सम्बन्धे (अशक्यता मूलकं अथवा क्षतिमूलकं निवृत्तिवेतनं विहाय) किमपि निवृत्तिवेतनं प्राप्यते तर्हि उच्चतमन्यायालयीयसेवाविषयकात् तस्य वेतनात् निम्नलिखितः राशिः [4][न्यूनीक्रियेत—

(क) तत् निवृत्तिवेतनस्य राशिः, तथा

(ख) यदि एतादृश्याः नियुक्तेः पूर्वं तेन एतादृश्याः पूर्वसेवायाः सम्बन्धे तस्मै सन्देयस्य निवृत्तिवेतनस्य भागात् प्रति एतस्य संराशितं मूल्यं प्राप्तं अस्ति, तर्हि तत् निवृत्तिवेतनभागस्य राशिः; तथा

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः; क-भागे उल्लिखित" इति एते शब्दाः लोपिताः ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "एतादृश राज्यस्य" इत्येतत् लोपितम् ।

३. उपर्युक्ताधिनियमस्य २५-अनुभागेन "प्रथमानुसूच्याः क-भागस्य राज्यानाम्" इत्येषः शब्दसमूहः लोपितः ।

४. उपर्युक्ताधिनियमस्य २५-अनुभागेन "तत् निवृत्तिवेतनस्य राशिः न्यूनीक्रियेत" इत्ययेतत् प्रति एतत् संनिवेशितम् ।

**द्वितीया अनुसूची**

(ग) यदि तेन एतादृश्याः नियुक्तेः पूर्वं एतादृश्याः पूर्वसेवायाः सम्बन्धे निवृत्युपदानं प्राप्तं अस्ति, तर्हि तदुपदानस्य समतुल्यं निवृत्तिवेतनम्] ।

(२) उच्चतमन्यायालयस्य प्रत्येकन्यायाधीशः भाटकं विना एव पदावासस्य उपयोगे स्वत्ववान् भवेत् ।

(३) एतत्प्रच्छेदस्य द्वितीयोपप्रच्छेदे गतं किमपि नानुप्रयुज्येत तस्य न्यायाधीशस्य विषये यः एतस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं—

(क) 'फेडरल्' न्यायालयस्य मुख्यन्यायमूर्तिरूपेण पदं धारयमाणः आसीत्, तथा च एतादृशे प्रारम्भे ३७४-तमानुच्छेदस्य (१) खण्डाधीनं उच्चतमन्यायालयस्य मुख्यन्यायमूर्तिः सञ्जातः वर्तते, अथवा

(ख) 'फेडरल्' न्यायालयस्य कस्यापि न्यायाधीशस्य रूपेण पदं धारयमाणः आसीत्, तथा एतादृशे प्रारम्भे उक्तखण्डाधीनं उच्चतमन्यायालस्य (मुख्यन्यायमूर्तेः अन्यः) न्यायाधीशः सञ्जातः वर्तते, उक्तकालावधौ, यस्मिन् सः एतादृशमुख्यन्यायामूर्तेः अन्यस्य वा न्यायाधीशस्य रूपेण पदधारणं करोति; तथा च प्रत्येकन्यायाधीशः, यः एवं उच्चतमन्यायालयस्य मुख्यन्यायमूर्तिः अन्यः वा न्यायाधीशः सञ्जायते, यथायथं एतादृशस्य मुख्यन्यायमूर्तेः अन्यस्य वा न्यायाधीशस्य रूपेण वास्तविकसेवायां यापितकालस्य सम्बन्धे एतत्प्रच्छेदस्य प्रथमोपप्रच्छेदे विनिर्दिष्टवेतनात् अतिरिक्तं विशेषवेतनस्य रूपेण तादृशस्य राशेः प्राप्तौ स्वत्ववान् भवेत् यः एवं विनिर्दिष्टवेतनस्य तथा एतादृशप्रारम्भात् अव्यवहितपूर्वं तेन प्राप्यमाणवेतनस्य च अन्तरेण समः भवतिः ।

(४) उच्चतमन्यायालयस्य प्रत्येकं न्यायाधीशः भारतराज्यक्षेत्रस्य अभ्यन्तरे स्वकर्तव्यस्य पालने कृतायां यात्रायां कृतव्ययानां प्रतिपूर्त्य तादृशानि युक्तियुक्तानि भक्तानि प्राप्नुयात् तथा यात्रासम्बन्धीनि तादृशानि सौकर्याणि तस्मै प्रदीयेरन् यादृशानि राष्ट्रपतिः काले काले विहितानि कुर्यात् ।

(५) उच्चतमन्यायालयस्य न्यायाधीशानां अनुपस्थित्यनुमतेः (अनुपस्थित्यनुमतिभक्तैः सह) तथा निवृत्ति वेतनस्य विषये अधिकाराः तैः उपबन्धैः शासिताः भवेयुः ये एतस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं 'फेडरल' न्यायालयस्य न्यायाधीशानां विषये प्रवृत्ताः आसन् ।

१०. [1][(१) उच्चन्यायालयानां न्यायाधीशेभ्यः वास्तविकसेवायां यापितकालस्य विषये निम्नलिखित-मानेन प्रतिमासं वेतनं सन्दीयेत; तद्यथा—

| | |
|---|---|
| मुख्यन्यायमूर्तिः | ४,००० रूप्यकाणि |
| कोपि अन्यः न्यायाधीशः | ३,५०० रूप्यकाणि |

परन्तु यदि कस्यापि उच्चन्यायालयस्य केनापि न्यायाधीशेन स्वनियुक्तिकाले भारतशासनस्य, तत्पूर्ववर्तिशासनेषु कस्यापि वा, अथवा राज्यशासनस्य, तत्पूर्ववर्तिशासनेषु कस्यापि वा पूर्वं कृतायाः सेवायाः सम्बन्धे (अशक्ततामूलकं अथवा क्षतिमूलकं निवृत्तिवेतनं विहाय) किमपि निवृत्तिवेतनं प्राप्यते, तर्हि उच्च-न्यायालयीयसेवाविषयकात् तस्य वेतनात् निम्नलिखितः राशिः न्यूनीक्रियेत —

(क) तत् निवृत्तिवेतनस्य राशिः, तथा

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २५-अनुभागेन (१) उपप्रच्छेदात् प्रति एषः उपप्रच्छेदः संनिवेशितः ।

**द्वितीया अनुसूची**

(ख) यदि एतादृश्याः नियुक्तेः पूर्वं तेन एतादृश्याः पूर्वसेवायाः सम्बन्धे तस्मै सन्देयस्य निवृत्तिवेतनस्य भागात् प्रति एतस्य संराशितं मूल्यं प्राप्तं अस्ति, तर्हि तत् निवृत्तिवेतनभागस्य राशिः; तथा

(ग) यदि तेन एतादृश्याः नियुक्तेः पूर्वं एतादृश्याः पूर्वसेवायाः सम्बन्धे निवृत्युपदानं प्राप्तं अस्ति, तर्हि तदुपदानस्य समतुल्यं निवृत्तिवेतनम् ।]

(२) यः कोपि जनः एतत् संविधानस्य प्रारम्भात् अव्यवहित पूर्वं—

(क) कस्मिन् अपि प्रान्ते उच्चन्यायालयस्य मुख्यन्यायमूर्तिरूपेण पदं धारयमाणः आसीत् तथा तादृशे प्रारम्भे ३७६-तमानुच्छेदस्य (१) खण्डाधीनं तत्स्थानीयराज्यस्य उच्चन्यायालयस्य मुख्यन्यायमूर्तिरूपेण सञ्जातः वर्तते, अथवा

(ख) कस्मिन् अपि प्रान्ते उच्चन्यायालयस्य कस्यापि इतरस्य न्यायाधीशस्य रूपेण पदं धारयमाणाः आसीत् तथा एतादृशप्रारम्भे उक्तखण्डाधीनं तत्स्थानीयराज्यस्य उच्चन्यायालस्य (मुख्यन्यायमूर्तेः अन्यः) कोपि न्यायाधीशः सञ्जातः वर्तते;

सः यदि एतादृशप्रारम्भात् अव्यवहितपूर्वं एतत् प्रच्छेदस्य प्रथमोपप्रच्छेदे विनिर्दिष्टमानात् अधिकेन मानेन वेतनं प्राप्नोत् तर्हि यथायथं एतादृशस्य मुख्यन्यायमूर्तेः अन्यस्य वा न्यायाधीशस्य रूपेण वास्तविक-सेवायां यापितकालस्य सम्बन्धे उक्तोपप्रच्छेदे विनिर्दिष्टवेतनात् अतिरिक्तं विशेषवेतनस्य रूपेण तादृशस्य राशेः प्राप्तौ स्वत्ववान् भवेत् यः एवं विनिर्दिष्टवेतनस्य तथा एतादृशप्रारम्भात् अव्यवहितपूर्वं तेन प्राप्यमाणवेतनस्य च अन्तरेण समः भवति ।

[1][(३) एतादृशः कोपि जनः यः संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य प्रारम्भात् अव्यवहितपूर्वं प्रथमानुसूच्याः ख-भागे विनिर्दिष्टस्य कस्यापि राज्यस्य उच्चन्यायालयस्य मुख्यन्यायमूर्ति-रूपेण पदं धारयमाणाः आसीत् तथा सः एतादृशे प्रारम्भे उक्ताधिनियमेन यथासंशोधितायां उक्तानुसूच्यां विनिर्दिष्टस्य कस्यापि राज्यस्य उच्चन्यायालयस्य मुख्यन्यायामूर्तिः सञ्जातः वर्तते, यदि सः एतादृशप्रारम्भात् अव्यवहितपूर्वं स्ववेतनात् अतिरिक्तं कमपि राशिं भक्तरूपेण प्राप्नुवन् आसीत्, तर्हि एतादृशमुख्यायमूर्तिरूपेण वास्तविकसेवायां यापितकालस्य सम्बन्धे एतत् प्रच्छेदे विनिर्दिष्टवेतनात् अतिरिक्तं तत्समं राशिं भक्तरूपेण प्राप्त्यै स्वत्ववान् भवेत् ।]

११. अस्मिन् भागे यावत् सन्दर्भेण अन्यथा अपेक्षितं न भवति तावत्—

(क) "मुख्यन्यायमूर्तिः" इति पदे कार्यकारिमुख्यन्यायमूर्तिः अन्तर्भवति, तथा "न्यायाधीशः" इति पदे तदर्थन्यायाधीशः अन्तर्भवति ।

(ख) "वास्तविकसेवा" इति एतस्यां अन्तर्भवति—

(१) न्यायाधीशरूपेण कर्तव्यं कुर्वता अथवा तादृशानां अन्येषां कृत्यानां पालने, येषां निर्वहणस्य भारः, तेन राष्ट्रपतेः प्रार्थनायां सत्यां गृहीतः भवेत्, न्यायाधीशेन यापितः कालः;

(२) यस्मिन् सः न्यायाधीशः अनुमतिं गृहीत्वा अनुपस्थितः भवति तं कालं वर्जयित्वा, दीर्घावकाशाः; तथा

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २५-अनुभागेन (३) उपप्रच्छेदात् तथा (४) उपप्रच्छेदात् प्रति एषः उपप्रच्छेदः संनिवेशितः ।

**द्वितीया अनुसूची**

(३) उच्चन्यायालयात् उच्चतमन्यायालयं प्रति अथवा एकस्मात् उच्चन्यायालयात् अन्यं उच्चन्यायालयं प्रति स्थानान्तरणे पदग्रहणकालः ।

### उ—भागः

**भारतस्य नियन्त्रकमहालेखापरीक्षकस्य सम्बन्धे उपबन्धाः**

१२. (१) भारतस्य नियन्त्रकमहालेखापरीक्षकाय चतुःसहस्ररूप्यकाणि प्रतिमासं इति मानेन वेतनं सन्दीयेत ।

(२) यः जनः एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं भारतस्य महालेखापरीक्षकस्य रूपेण पदं धारयमाणः आसीत्, तथा एतादृशप्रारम्भेः ३७७-तमानुच्छेदस्य अधीनं भारतस्य नियन्त्रकमहालेखापरीक्षकः सञ्जातः वर्तते सः एतत् प्रच्छेदस्य प्रथमोपप्रच्छेदे विनिर्दिष्टवेतनात् अतिरिक्तं विशेषवेतनस्य रूपेण तादृशराशेः प्राप्तौ स्वत्ववान् भवेत् यः (राशिः) एवं विनिर्दिष्टस्य वेतनस्य तथा एतादृशप्रारम्भात् अव्यवहितपूर्वं भारतस्य महालेखापरीक्षकस्य रूपेण तेन प्राप्यमाणवेतनस्य च अन्तरेण समः भवति ।

(३) भारतस्य नियन्त्रकमहालेखपरीक्षकस्य अनुपस्थित्यनुमतेः तथा निवृत्तिवेतनस्य तथा अन्येषां सेवाप्रतिबन्धानां विषये अधिकाराः तैः उपबन्धैः यथायथं शासिताः भवेयुः, शासिताः वा अनुवर्तेरन्, ये एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं भारतस्य महालेखापरीक्षकस्य विषये प्रवृत्ताः आसन्, तथा तेषु उपबन्धेषु 'गवर्नरजनरल' इति आख्यं प्रति सर्वे निर्देशाः राष्ट्रपतिं प्रति निर्देशाः इति अर्थः क्रियेत ।

## तृतीया अनुसूची

**[अनुच्छेदाः ७५ (४), ९९, १२४ (६), १४८ (२), १६४ (३), १८८ तथा २१९]***

## शपथानां प्रतिज्ञानानां वा प्ररूपाणि

**१**

सङ्घस्य मन्त्रिणः कृते पदशपथस्य प्ररूपम्—

ईश्वरस्य नाम्ना शपे
"अहं अमुकः——————————यद् अहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां, निष्ठां
सत्यनिष्ठया प्रतिजाने

च धारयिष्ये, [1][भारतस्य प्रभुतां, अखण्डतां च अक्षुण्णां रक्षिष्यामि], सङ्घस्य मन्त्रित्वेन स्वकर्तव्यानि श्रद्धापूर्वकं शुद्धान्तःकरणेन च निर्वक्ष्यामि, तथा सर्वविधलोकान् प्रति भीतिं पक्षपातं वा रागं द्वेषं वा विहाय यथासंविधानं यथाविधि च न्याय्यं आचरिष्यामि।"

**२**

सङ्घस्य मन्त्रिणः कृते गोपनीयताशपथस्य प्ररूपम्—

ईश्वरस्य नाम्ना शपे
"अहं, अमुकः— ——————————यत् कमपि विषयं, यः सङ्घस्य मन्त्रित्वेन मम विचारार्थं आनीयेत,
सत्यनिष्ठया प्रतिजाने

मया परिज्ञातः वा भवेत्, कमपि जनं, कान् अपि जनान् वा प्रति, एतादृशमन्त्रित्वेन मम कर्तव्यानां निर्वहणार्थं यद् अपेक्षितं भवेत् तद्विहाय, प्रत्यक्षरूपेण, अप्रत्यक्षरूपेण वा नहि संसूचयिष्यामि न वा प्रकटीकरिष्यामि।"

**[2]३**

**क**

संसदे निर्वाचनस्य कृते अभ्यर्थिना कर्तव्यस्य शपथस्य प्रतिज्ञानस्य वा प्ररूपम्—

"अहं, अमुकः, यः राज्यसभायां (वा लोकसभायां) स्थानपूर्त्यै अभ्यर्थिरूपेण नामनिर्देशितः अस्मि,
ईश्वरस्य नाम्ना शपे
——————————यद् अहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां निष्ठां च धारयिष्ये
सत्यनिष्ठया प्रतिजाने

तथा भारतस्य प्रभुतां अखण्डतां च अक्षुण्णां रक्षिष्यामि।"

---

* ८४ (क), १७३ (क) अनुच्छेदौ अपि अत्र द्रष्टव्यौ।

१. संविधानस्य (षोडशं संशोधनं) अधिनियमः, १९६३ इत्यस्य ५-अनुभागेन एतत् अन्तर्वेशितम्।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन तृतीयात् प्ररूपात् प्रति संनिवेशितम्।

## तृतीया अनुसूची

### ख

संसदः सदस्येन कर्तव्यस्य शपथस्य प्रतिज्ञानस्य च प्ररूपम्—

"अहं, अमुकः, यः राज्यसभायाः (वा लोकसभायाः) सदस्यत्वेन निर्वाचितः (वा नामनिर्देशितः) अस्मि ईश्वरस्य नाम्ना शपे / सत्यनिष्ठया प्रतिजाने ——————यद् अहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां निष्ठां च धारयिष्ये, तथा भारतस्य प्रभुतां अखण्डतां च अक्षुण्णां रक्षिष्यामि; तथा यत् पदं ग्रहीतुं अहं उद्यतः अस्मि तस्य कर्तव्यानि श्रद्धापूर्वकं निर्वक्ष्यामि।"]

### ४

उच्चतमन्यायालयस्य न्ययाधीशैः तथा भारतस्य नियन्त्रकमहालेखापरीक्षकेण कर्तव्यस्य शपथस्यप्रतिज्ञानस्य वा प्ररूपम्—

अहं, अमुकः, भारतस्य उच्चतमन्यायालयस्य मुख्यन्यायमूर्तिरूपेण (न्यायाधीशरूपेण वा) (अथवा भारतस्य नियन्त्रकमहालेखपरीक्षकरूपेण,) नियुक्तः,——ईश्वरस्य नाम्ना शपे / सत्यनिष्ठया प्रतिजाने——यद् अहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां, निष्ठां च धारयिष्ये [1][तथा भारतस्य प्रभुतां अखण्डतां च अक्षुण्णां रक्षिष्यामि,] तथा अहं सम्यक् प्रकारेण श्रद्धापूर्वकं च तथा मम पूर्णया योग्यतया, पूर्णेन ज्ञानेन, पूर्णेन विवेकेन च स्वपदस्य कर्तव्यानि भीतिं पक्षपातं वा, रागं द्वेषं वा विहाय पालयिष्यामि, तथा अहं संविधानस्य विधीनां च मर्यादां रक्षिष्यामि।"

### ५

कस्यापि राज्यस्य मन्त्रिणः कृते पदशपथस्य प्ररूपम्—

"अहं, अमुकः——ईश्वरस्य नाम्ना शपे / सत्यनिष्ठया प्रतिजाने——यद् अहं विधिना स्थापितस्य भारतस्य संविधानं प्रति सत्यां श्रद्धां निष्ठां च धारयिष्ये [1][तथा भारतस्य प्रभुतां अखण्डतां च अक्षुण्णां रक्षिष्यामि] तथा अहं…………राज्यस्य मन्त्रित्वेन स्वकर्तव्यानि श्रद्धापूर्वकं, शुद्धान्तःकरणेन च निर्वक्ष्यामि, तथा सर्वविधलोकान् प्रति भीतिं पक्षपातं वा, रागं द्वेषं वा विहाय यथासंविधानं यथाविधि च न्याय्यं आचरिष्यामि।"

---

१. संविधानस्य (षोडशं संशोधनं) अधिनियमः, १९६३ इत्यस्य ५-अनुभागेन एतत् अन्तर्वेशितम्।

## तृतीया अनुसूची

६

कस्यापि राज्यस्य मन्त्रिणः कृते गोपनीयताशपथस्य प्ररूपम्—

ईश्वरस्य नाम्ना शपे
"अहं, अमुकः———————————यत् कमपि विषयं, यः राज्यस्य मन्त्रित्वेन मम विचारार्थं आनीयेत, मया
सत्यनिष्ठया प्रतिजाने
परिज्ञातः वा भवेत्, कमपि जनं, कान् आपि जनान् वा प्रति, एतादृशमन्त्रित्वेन मम कर्तव्यानां निर्वहणार्थं यद् अपेक्षितं स्यात् तद्विहाय, प्रत्यक्षरूपेण, अप्रत्यक्षरूपेण वा नहि संसूचयिष्यामि न वा प्रकटीकरिष्यामि ।

[१][७

क

कस्यापि राज्यस्य विधानमण्डलाय निर्वाचनस्य कृते अभ्यर्थिना कर्तव्यस्य शपथस्य प्रतिज्ञानस्य च प्ररूपम्—

"अहं, अमुकः यः विधानसभायां (विधानपरिषदि वा) स्थानपूर्त्यै अभ्यर्थिरूपेण नामनिर्देशितः अस्मि
ईश्वरस्य नाम्ना शपे
————————————यद् अहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां निष्ठां च धारयिष्ये तथा
सत्यनिष्ठया प्रतिजाने
भारतस्य प्रभुतां अखण्डतां च रक्षिष्यामि ।

ख

कस्यापि राज्यस्य विधानमण्डलस्य सदस्येन कर्तव्यस्य शपथस्य प्रतिज्ञानस्य च प्ररूपम्—

"अहं अमुकः यः विधानसभायाः (विधानपरिषदः वा) सदस्यत्वेन निर्वाचितः (नामनिर्देशितः वा) अस्मि,
ईश्वरस्य नाम्ना शपे
————————————यद् अहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां निष्ठां च धारयिष्ये तथा
सत्यनिष्ठया प्रतिजाने
भारतस्य प्रभुतां अखण्डतां च अक्षुण्णां रक्षिष्यामि तथा यत् पदं ग्रहीतुं अहं उद्यतः अस्मि तस्य कर्तव्यानि श्रद्धापूर्वकं निर्वक्ष्यामि ।]

---

१. संविधानस्य (षोडशं संशोधनं) अधिनियमः, १९६३ इत्यस्य ५-अनुभागेन सप्तम प्रारूपात् प्रति एतत् संनिवेशितम् ।

## तृतीया अनुसूची

### ८

उच्चन्यायालयस्य न्यायाधीशैः कर्तव्यस्य शपथस्य प्रतिज्ञानस्य च प्ररूपम्—

"अहं, अमुकः..................उच्चन्यायालयस्य मुख्यन्यायमूर्तिरूपेण (न्यायाधीशरूपेण वा) नियुक्तः

ईश्वरस्य नाम्ना शपे
———————यद् अहं विधिना स्थापितं भारतस्यसंविधानं प्रति सत्यां श्रद्धां, निष्ठां च धारयिष्ये [1][तथा
सत्यनिष्ठया प्रतिजाने

भारतस्य प्रभुतां अखण्डतां च अक्षुण्णां रक्षिष्यामि], तथा अहं सम्यक् प्रकारेण श्रद्धापूर्वकं च तथा मम पूर्णया योग्यतया, पूर्णेन ज्ञानेन, पूर्णेन विवेकेन च स्वपदस्य कर्तव्यानि भीतिं पक्षपातं वा रागं द्वेषं वा, विहाय पालयिष्यामि तथा अहं संविधानस्य, विधीनां च मर्यादां रक्षिष्यामि।"

---

१. संविधानस्य (षोडशं संशोधनं) अधिनियमः, १९६३ इत्यस्य ५-अनुभागेन अन्तर्वेशितम्।

[1]चतुर्थी अनुसूची

[अनुच्छेदौ ४(१), तथा ८०(२)]

## राज्यसभायां स्थानानां आवण्टनम्

निम्नलिखितायाः सारिण्याः प्रथमस्तम्भे विनिर्दिष्टाय प्रत्येकराज्याय, सङ्घराज्यक्षेत्राय वा यथायथं तस्य राज्यस्य, सङ्घराज्यक्षेत्रस्य वा सम्मुखं द्वितीयस्तम्भे विनिर्दिष्टसङ्ख्याकानि स्थानानि आवण्टितानि भवेयुः ।

**सारिणी**

| | |
|---|---|
| १. आन्ध्रप्रदेशराज्यम् | १८ |
| २. असमराज्यम् | ७ |
| ३. बिहारराज्यम् | २२ |
| [2][४. गुजरातराज्यम् | ११] |
| [3][५. हरियाणाराज्यम् | ५] |
| [4][६.] केरलराज्यम् | ९ |
| [4][७] मध्यप्रदेशराज्यम् | १६ |
| [5][८. तमिलनाडुराज्यम्] | [6][१८] |
| [7][[4][९.] महाराष्ट्रराज्यम् | १९] |
| [8][१०.] कर्णाटकराज्यम्] | १२ |

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य ३-अनुभागेन चतुर्थानुसूच्याः प्रति एषा संनिवेशिता ।

२. मुम्बई-पुनर्घटनं अधिनियमः, १९६० (१९६० वर्षस्य ११-तमः) इत्यस्य ६-अनुभागेन ४-प्रविष्ट्याः प्रति एषा संनिवेशिता (१-५-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. पञ्जाब-पुनर्घटनं अधिनियमः, १९६६ (१९६६ वर्षस्य ३१-तमः) इत्यस्य ९-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता (१-११-१९६६ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. उपर्युक्ताधिनियमस्य ९-अनुभागेन ५ तः २१ यावत् प्रविष्ट्यः ६ तः २२ यावत् इति पुनः क्रमाङ्किताः (१-११-१९६६ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. मद्रासराज्यस्य (नामपरिवर्तनं) अधिनियमः, १९६८ (१९६८ वर्षस्य ५३-तमः) इत्यस्य ५-अनुभागेन "८-मद्रास" इति एतस्मात् प्रति एतत् संनिवेशितम् (१४-१-१९६९ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

६. आन्ध्रप्रदेशस्य मद्रासस्य च (सीमापरिवर्तनं) अधिनियमः, १९५९ (१९५९ वर्षस्य ५६-तमः) इत्यस्य ८-अनुभागेन "१७" इत्येतस्मात् प्रति एषः अङ्कः संनिवेशितः (१-४-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

७. मुम्बई-पुनर्घटनं अधिनियमः, १९६० (१९६० वर्षस्य ११-तमः) इत्यस्य ६-अनुभागेन अन्तर्वेशिता (१-५-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

८. मैसूरराज्यस्य (नामपरिवर्तनं) अधिनियमः, १९७३ (१९७३ वर्षस्य ३१-तमः) इत्यस्य ५-अनुभागेन "१०. मैसूर" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१-११-१९७३ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

## चतुर्थी अनुसूची

| | |
|---|---|
| [1][११.] ओडिश्शाराज्यम् | १० |
| [1][१२.] पञ्जाबराज्यम् | [2][७] |
| [1][१३.] राजस्थानराज्यम् | १० |
| [1][१४] उत्तरप्रदेशराज्यम् | ३४ |
| [1][१५] पश्चिमबङ्गालराज्यम् | १६ |
| [1][१६.] जम्मूकश्मीरराज्यम् | ४ |
| [3][[1][१७.]नागलैंडराज्यम् | १ |
| [4][१८. हिमाचलप्रदेशराज्यम् | ३] |
| [5][१९. मणिपुरराज्यम् | १ |
| २०. त्रिपुराराज्यम् | १ |
| २१. मेघालयराज्यम् | १ |
| [6][२२. सिक्किमराज्यम् | १] |
| [7][२३.] दिल्लीराज्यक्षेत्रम् | ३ |
| [7][२४.] पाण्डिचेरीराज्यक्षेत्रम् | १ |
| [7][२५.] मिजोरमराज्यक्षेत्रम् | १ |
| [7][२६.] अरुणाचलप्रदेशराज्यक्षेत्रम् | १] |
| योगः | [8][२३२] |

१. पञ्जाब-पुनर्घटनं अधिनियमः, १९६६ (१९६६ वर्षस्य ३१-तमः) इत्यस्य ६-अनुभागेन ५ तः २१ यावत् प्रविष्ट्यः ६ तः २२ यावत् इति पुनः क्रमाङ्किताः (१-११-१९६६ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन "११" इति एतस्मात् प्रति एषः अङ्कः संनिवेशितः (१-११-१९६६ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

३. नागालैण्डराज्याधिनियमः, १९६२ (१९६२ वर्षस्य २७-तमः) इत्यस्य ६-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता (१-१२-१९६३ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

४. हिमाचलप्रदेशराज्याधिनियमः, १९७० (१९७० वर्षस्य ५३-तमः) इत्यस्य ५-अनुभागेन अन्तर्वेशिता (२५-१-१९७१ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

५. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य १०-अनुभागेन १९ तः २२ यावत् प्रविष्टिभ्यः प्रति एताः प्रविष्ट्यः संनिवेशिताः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

६. संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ४-अनुभागेन अन्तर्वेशिता (२६-४-१९७५ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

७. उपर्युक्ताधिनियमस्य ४-अनुभागेन २२ तः २५ यावत् प्रविष्ट्यः २३ तः २६ यावत् इति पुनः क्रमाङ्किताः २६-४-१९७५ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

८. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन "२३१" इत्येतस्याः प्रति एषा सङ्ख्या संनिवेशिता (२६-४-१९७५ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

## पञ्चमो अनुसूची

[अनुच्छेदः २४४ (१)]

## अनुसूचितक्षेत्राणां अनुसूचितजनजातीनां च प्रशासनस्य नियन्त्रणस्य च सम्बन्धे उपबन्धाः

### अ—भागः

### साधारणम्

१. **निर्वचनम्**—एतस्यां अनुसूच्यां यावत् सन्दर्भेण अन्यथा अपेक्षितं न भवति तावत् "राज्य" पदे [1][ * * * ] [2][असमराज्यं, मेघालयराज्यं, च नान्तर्भवतः] ।

२. **अनुसूचितक्षेत्रेषु कस्यापि राज्यस्य कार्यपालिकाशक्तिः**—एतस्याः अनुसूच्याः उपबन्धानां अधीनं कस्यापि राज्यस्य कार्यपालिका शक्तिः तस्य अनुसूचितक्षेत्राणि यावद् विस्तृता भवति ।

३. **अनुसूचित क्षेत्राणां प्रशासनविषये राष्ट्रपतिं प्रति राज्यपालस्य [3][ * * * ] प्रतिवेदनम्**—प्रत्येकं अनुसूचितक्षेत्रवतः राज्यस्य राज्यपालः [4][ * * * ] प्रतिवर्षं, यदा यदा वा राष्ट्रपतिना एवं अपेक्ष्यते, तस्य राज्यस्य अनुसूचितक्षेत्राणां प्रशासनविषये राष्ट्रपतिं प्रति प्रतिवेदनं कुर्यात्, सङ्घस्य कार्यपालिकाशक्तिश्च राज्याय उक्तक्षेत्राणां प्रशासनविषये निदेशदानं यावद् विस्तृता भवेत् ।

### आ—भागः

### अनुसूचित क्षेत्राणां अनुसूचित जनजातीनां च प्रशासनं नियन्त्रणं च

४. **जनजातिमन्त्रणापरिषत्**—(१) अनुसूचित क्षेत्रवति प्रत्येकराज्ये तथा, राष्ट्रपतिः चेत् एवं निर्दिशति तर्हि, कस्मिंश्चित् अपि अनुसूचितजनजातिमति, किन्तु अनुसूचितक्षेत्रविरहिते राज्ये अपि च, एका जनजातिमन्त्रणापरिषत् स्थाप्येत, या विंशत्यनधिकैः सदस्यैः सम्भूय भवेत्, येषां यथाशक्यं उपचतुर्थांशत्रयं तद्राज्यस्य विधानसभायां अनुसूचितजनजातीनां प्रतिनिधयः भवेयुः —

परन्तु यदि तस्य राज्यस्य विधानसभायां अनुसूचितजनजातीनां प्रतिनिधीनां सङ्ख्या, जनजातिमन्त्रणापरिषदि एतादृशैः प्रतिनिधिभिः पूरयितव्यानां स्थानानां सङ्ख्यातः न्यूना भवति, तर्हि शेषस्थानानि तासां जातीनां अन्यैः सदस्यैः पूर्येरन् ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः क-भागे, ख-भागे वा उल्लिखितं किमपि राज्यं अभिप्रेयते" इत्येतत् लोपितम् ।

२. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१-अनुभागेन "असमराज्यं तदन्तर्गतं न भवति" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

३. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "राजप्रमुखस्य वा" इति शब्दौ लोपितौ ।

४. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखः वा" इति शब्दौ लोपितौ ।

**पञ्चमी अनुसूची**

(२) जनजातिमन्त्रणापरिषदः एतत् कर्तव्यं भवेत् यत् सा राज्यपालेन [1][ * * * ] तां प्रति निर्दिष्टेषु तद्राज्यस्य अनुसूचितजनजातीनां कल्याणेन उन्नत्या च सम्बद्धेषु विषयेषु मन्त्रणां दद्यात् इति ।

(३) राज्यपालः [2][ * * * ]

(क) परिषदः सदस्यानां सङ्ख्यायाः, तेषां नियुक्तेः, परिषदश्च अध्यक्षस्य तस्याः पदाधिकारिणां सेवकानां च नियुक्तेः सम्बन्धिन्याः रीतेः,

(ख) तस्याः अधिवेशनानां सञ्चालनस्य, साधारणप्रक्रियायाश्च,

(ग) अन्येषां सर्वेषां आनुषङ्गिकविषयाणां च,

यथायथं विधानार्थं विनियमनार्थं वा नियमान् निर्मातुं क्षमते ।

५. **अनुसूचितक्षेत्रेषु अनुप्रयोज्यः विधिः** — (१) एतत्संविधाने किमपि सत्यपि राज्यपालः [2][ * * * ] लोकाधिसूचनया निदेष्टुं क्षमते यत् संसदः तद्राज्यविधानमण्डलस्य वा कोपि विशेषः अधिनियमः तद्राज्यस्य अनुसूचितक्षेत्रे तस्य कस्मिन् अपि भागे वा नानुप्रयुज्येत अथवा तद्राज्यस्य अनुसूचितक्षेत्रे तस्य कस्मिन् अपि भागे वा एतादृशैः अपवादैः उपान्तरणैश्च अनुप्रयुज्येत यादृशान् सः अधिसूचनायां विनिर्दिशेत्, तथा एतस्य उपप्रच्छेदस्य अधीनं दत्तः कोपि निदेशः तथा दीयेत यथा तस्य भूतलक्षिप्रभावः भवेत् ।

(२) राज्यपालः [2][ * * * ] कस्मिन् अपि राज्ये कस्यापि तस्य क्षेत्रस्य शान्त्यै, सुशासनाय च नियमान् निर्मातुं क्षमते यत् (क्षेत्रं) तदानीं अनुसूचितक्षेत्रं वर्तते ।

विशेषतः, तथा च पूर्वगामिशक्तेः व्यापकतायां प्रतिकूलप्रभावं अन्तरेण, एतादृशाः विनियमाः —

(क) एतादृशक्षेत्रस्य अनुसूचितजनजातीनां सदस्यैः सदस्येषु वा भूमेः अन्तरणस्य प्रतिषेधं निर्बन्धनं वा;

(ख) एतादृशक्षेत्रस्य अनुसूचितजनजातीनां सदस्येषु भूमेः आवण्टनस्य विनियमनम्;

(ग) एतादृश क्षेत्रस्य अनुसूचितजनजातीनां सदस्येभ्यः ऋणरूपेण धनस्य दातृभिः जनैः वृद्धिजीविरूपेण कार्यकरणस्य विनियमनम्,

कर्तुं क्षमन्ते ।

(३) एतादृशस्य कस्यापि विनियमस्य निर्माणे यादृशः एतत्प्रच्छेदस्य द्वितीयोपप्रच्छेदे निर्दिष्टः अस्ति, राज्यपालः [2][ * * * ] संसदः तद्राज्यस्य विधानमण्डलस्य वा अधिनियमं, कमपि विद्यमानं विधिं वा यः तदानीं प्रश्नगतक्षेत्रे अनुप्रयुज्यते, निरसितुं संशोधयितुं वा क्षमते ।

(४) एतत्प्रच्छेदस्य अधीनं निर्मिताः सर्वे विनियमाः सद्यः राष्ट्रपतिं प्रति प्रेष्येरन्, यावत् च स तान् न अनुमन्यते तावत ते कार्यकराः न भवेयुः ।

(५) एतत् प्रच्छेदस्य अधीनं कोपि विनियमः तावत् न निर्मीयेत, यावत् विनियमस्य निर्मात्रा राज्यपालेन [3][ * * * ], तद्राज्यार्थं जनजातिमन्त्रणापरिषद् विद्यते चेत्, तादृश्या परिषदा परामर्शः कृतः न भवति ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "यथायथं राजप्रमुखेन वा" इत्येते शब्दाः लोपिताः ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखो वा" इत्येतौ शब्दौ लोपितौ ।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन अनुसूच्या च "राजप्रमुखेन वा" इत्येतौ शब्दौ लोपितौ ।

## पञ्चमी अनुसूची

### इ—भागः

### अनुसूचितक्षेत्राणि

६. **अनुसूचितक्षेत्राणि—**(१) अस्मिन् संविधाने "अनुसूचितक्षेत्राणि" इति पदेन तादृशानि क्षेत्राणि अभिप्रेयन्ते येषां राष्ट्रपतिः आदेशेन[1] अनुसूचितक्षेत्रत्वं घोषयेत्।

(२) राष्ट्रपतिः कस्मिन् अपि काले आदेशेन[2] —

(क) निदेष्टुं क्षमते यत् किमपि सम्पूर्णं अनुसूचितक्षेत्रं तस्य कोपि विनिर्दिष्टः भागः वा, अनुसूचितक्षेत्रं, एतादृशक्षेत्रस्य भागः वा न भवेत्;

[3][(कक) कस्यापि राज्यस्य कमपि अनुसूचितजनजातिक्षेत्रं तद्राज्यस्य राज्यपालेन सह परामृश्य परिवर्धयितुं क्षमते];

(ख) किमपि अनुसूचितक्षेत्रं संशोधयितुं क्षमते किन्तु केवलं सीमानां शोधनद्वारा एव;

(ग) कस्यापि राज्यस्य सीमानां कस्मिन् अपि परिवर्तने, कस्यापि नूतनराज्यस्य सङ्घे अन्तःप्रवेशे वा स्थापनायां वा किमपि पूर्वतः कस्मिंश्चित् अपि राज्ये असमाविष्टं क्षेत्रं अनुसूचितक्षेत्रत्वेन तस्य भागत्वेन वा घोषयितुं क्षमते;

[3][(घ) कस्यापि राज्यस्य राज्यानां वा सम्बन्धे एतत् प्रच्छेदाधीनं कृतं आदेशं विखण्डयितुं अथवा सम्बन्धितराज्यस्य राज्यपालेन सह परामृश्य यानि अनुसूचितक्षेत्राणि भवेयुः तानि पुनः परिणिश्चेतुं नवं आदेशं दातुं क्षमते];

तादृशः कोपि आदेशः तादृशान् आनुषङ्गिकान् पारिणामिकान् च उपबन्धान् अन्तर्भावयितुं क्षमते यान् राष्ट्रपतिः आवश्यकान् उचितान् च प्रत्येति; किन्तु उपर्युक्तां रीतिं विहाय एतत् प्रच्छेदस्य (१) उपप्रच्छेदस्य अधीनं कृतः आदेशः केनापि पश्चाद्वर्तिना आदेशेन परिवर्तितः न भवेत्।

### ई—भागः

### अनुसूच्याः संशोधनम्

७. **अनुसूच्याः संशोधनम्**—(१) संसत् काले काले विधिना परिवर्धनद्वारा, परिवर्तनद्वारा, निरसनद्वारा वा एतस्याः अनुसूच्याः कस्यापि उपबन्धस्य संशोधनं कर्तुं क्षमते, यदा च अनुसूची एवं संशोधिता भवति तदा अस्मिन् संविधाने एतां अनुसूचीं प्रति कोपि निर्देशः एवं संशोधितां एतादृशीं अनुसूचीं प्रति निर्देशः इति अर्थः ग्राह्यः।

(२) तादृशः कोपि विधिः यादृशः एतत् प्रच्छेदस्य (१) उपप्रच्छेदे उल्लिखितः अस्ति, एतत् संविधानस्य ३६८-तमानुच्छेदस्य प्रयोजनानां अर्थे एतत् संविधानस्य संशोधनं न मन्येत।

---

१. अनुसूचितक्षेत्राणां सम्बन्धे (क-भागीय राज्यानां कृते) आदेशः, १९५० (सां० आ० ९), अनुसूचितक्षेत्राणां सम्बन्धे (ख) भागीय राज्यानां कृते आदेशः, १९५० (सां० आ० २६), अनुसूचितक्षेत्राणां सम्बन्धे (हिमाचलप्रदेशस्य कृते) आदेशः, १९७५ (सां० आ० १०२), तथा च अनुसूचितक्षेत्राणां सम्बन्धे (बिहार-गुजरात-मध्यप्रदेश-ओडिश्शा राज्यानां कृते) आदेशः, १९७५ (सां० आ० १०९) च द्रष्टव्याः।

२. मद्रासस्य अनुसूचितक्षेत्राणां (विरतीकरणं) आदेशः, १९५० (सां० आ० ३०) तथा च आन्ध्रस्य अनुसूचितक्षेत्राणां विरतीकरणं आदेशः, १९५५ (सां० आ० ५०) च द्रष्टव्यौ।

३. संविधानस्य (संशोधनं) अधिनियमः, १९७६ (१९७६ वर्षस्य १०१-तमः) इत्यस्य २-अनुभागेन पञ्चमानुसूच्या च अन्तर्वेशितः।

## षष्ठी अनुसूची

[अनुच्छेदौ २४४ (२) तथा २७५(१)]

### [1][असमस्य मेघालयस्य तथा मिजोरम सङ्घराज्यक्षेत्रस्य जनजातिक्षेत्राणां] प्रशासनस्य विषये उपबन्धाः

**१. स्वशासिमण्डलानि, स्वशासिक्षेत्राणि च** —(१) एतत् प्रच्छेदस्य उपबन्धानां अधीनं, एतदनुसूच्याः २०-प्रच्छेदेन संलग्नसारिण्याः [2][१, २ भागयोः प्रत्येकं अंशस्य, ३ भागस्य च] जनजातिक्षेत्राणां एकं स्वशासिमण्डलं भवेत् ।

(२) यदि कस्मिन् अपि स्वशासिमण्डले विभिन्नाः अनुसूचितजनजातयः वर्तन्ते तर्हि राज्यपालः लोकाधिसूचनया ताभिः अध्युषितं क्षेत्रं, क्षेत्राणि वा स्वशासिमण्डलेषु विभाजयितुं क्षमते ।

(३) राज्यपालः लोकाधिसूचनया—

(क) उक्तसारिण्याः [2][कस्मिन् अपि भागे] किमपि क्षेत्रं अन्तर्भावयितुम्;

(ख) उक्तसारिण्याः [2][कस्माद् अपि भागात्] किमपि क्षेत्रं अपवर्जयितुम्;

(ग) नूतनं स्वशासिमण्डलं निर्मातुम्;

(घ) कस्यापि स्वशासिमण्डलस्य क्षेत्रं वर्धयितुम्;

(ङ) कस्यापि स्वशासिमण्डलस्य क्षेत्रं ह्रासयितुं;

(च) द्वे, अधिकानि वा स्वशासिमण्डलानि तद्भागान् वा संयोज्य एकं स्वशासिमण्डलं निर्मातुं;

(चच) [3][कस्यापि स्वाशासिमण्डलस्य नाम परिवर्तयितुं; ]

---

१. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१-अनुभागस्य (झ) खण्डेन अष्टमानुसूच्या च "असमस्य" इति शब्दात् प्रति एषः शब्दसमूहः संनिवेशितः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. उपर्युक्ताधिनियमस्य उक्तस्य अनुभागस्य (झ) खण्डेन अष्टमानुसूच्या च "अ-भागे" इत्येतत् प्रति एतेषां संनिवेशः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. असमस्य पुनर्घटनं (मेघालयः) अधिनियमः, १९६९ (१९६९ वर्षस्य ५५-तमः) इत्यस्य ७४-अनुभागेन चतुर्थानुसूच्या च एषः खण्डः अन्तर्वेशितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**षष्ठी अनुसूची**

(छ) कस्यापि स्वशासिमण्डलस्य सीमा परिणिश्चेतुम्,

**क्षमते—**

परन्तु राज्यपालः एतदुपप्रच्छेदस्य (ग),(घ), (ङ),(च) खण्डानां अधीनं कमपि आदेशं एतस्याः अनुसूच्याः १४-प्रच्छेदस्यः (१) उपप्रच्छेदस्य अधीनं नियुक्तस्य आयोगस्य प्रतिवेदने विचारं कृत्वा एव कुर्यात्, नान्यथा—

[1][अपरं च एतत् उपप्रच्छेदस्य अधीनं राज्यपालेन कृते आदेशे, तादृशाः आनुषङ्गिकाः पारिणामिकाः उपबन्धाः (येषु अन्तर्भवति २०-प्रच्छेदस्य तथा उक्तसारिण्याः कस्यापि भागस्य कस्यापि अंशस्य किमपि संशोधनं) अन्तर्विष्टाः भवितुं क्षमन्ते यान् राज्यपालः तादृशान् उपबन्धान् कार्यान्वितान् कर्तुं आवश्यकान् प्रत्येति ।]

२. **मण्डलपरिषदां, प्रादेशिकपरिषदां च घटनम्**—[2][(१) प्रत्येकस्वशासिमण्डलस्य कृते त्रिंशत्तः अनधिकसदस्यैः सम्भूता एकामण्डलपरिषद् भवेत् येषु (सदस्येषु) चतुः सङ्ख्यातः अनधिकजनाः राज्यपालेन नामनिर्दिष्टाः भवेयुः, शेषाश्च प्राप्तवयस्कमताधिकारस्य आधारेण निर्वाचिता भवेयुः।]]

(२) एतदनुसूच्याः १-प्रच्छेदस्य (२) उपप्रच्छेदस्य अधीनं स्वाशासिप्रदेशरूपेण घटितस्य प्रत्येकक्षेत्रस्य कृते एका पृथक् प्रादेशिकपरिषद् भवेत् ।

(३) प्रत्येकमण्डलपरिषत् प्रत्येकप्रादेशिकपरिषत् च क्रमशः अमुक(मण्डलस्य नाम) मण्डलपरिषत् अमुक (प्रदेशस्य नाम) प्रादेशिकपरिषत् च इति नाम्ना निगमितः निकायः भवेत्, तस्याः शाश्वतः उत्तराधिकारः, एका सामान्यमुद्रा च भवेत् उक्तनाम्ना च सा वादिनी प्रतिवादिनी वा भवेत् ।]

(४) एतदनुसूच्याः उपबन्धानां अधीनं स्वशासिमण्डलस्य प्रशासनं एतादृशमण्डलस्य मण्डलपरिषदि तावन्मात्रं निहितं भवेत् यावन्मात्रं तत् एतादृशमण्डलस्य कस्यामपि प्रादेशिकपरिषदि एतदनुसूच्याः अधीनं निहितं नास्ति; स्वशासिप्रदेशस्य च प्रशासनं एतादृशप्रदेशस्य प्रादेशिकपरिषदि निहितं भवेत् ।

(५) प्रादेशिकपरिषद्वति स्वशासिमण्डले प्रादेशिकपरिषदः प्राधिकाराधीनानां क्षेत्राणां विषये मण्डलपरिषदः एतदनुसूच्या एतादृशक्षेत्राणां विषये प्रदत्ताभ्यः शक्तिभ्यः अतिरिक्तं केवलं तादृश्यः शक्तयः भवेयुः या प्रादेशिकपरिषत् तस्यै प्रत्यायोजयेत् ।

---

१. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१(झ) अनुभागेन अष्टमानुसूच्या च एषः पारन्तुकः अन्तर्वेशितः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. असमस्य पुनर्घटनं(मेघालयः) अधिनियमः, १९६९ (१९६९ वर्षस्य ५५-तमः)इत्यस्य ७४-अनुभागेन चतुर्थानुसूच्या च (१) उपप्रच्छेदात् प्रति एषः उपप्रच्छेदः संनिवेशितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण)।

**षष्ठी अनुसूची**

(६) राज्यपालः, स्वशासिनां मण्डलानां प्रदेशानां वा अन्तर्गतैः वर्तमानैः जनजातिपरिषद्भि अन्यैः प्रतिनिधित्ववद्भिः जनजातिसङ्घटनैः वा परामृश्य मण्डलपरिषदां, प्रादेशिकपरिषदां च प्रथमघटनार्थं, नियमान् निर्मिमीत, एतादृशाः नियमाश्च निम्नलिखितेषु विषयेषु उपबन्धान् कुर्युः—

(क) मण्डलपरिषदां, प्रादेशिकपरिषदां च रचना, तासु स्थानानां आवण्टनं च;

(ख) तासां परिषदां कृते निर्वाचनप्रयोजनाय प्रादेशिकनिर्वाचनक्षेत्राणां परिसीमनम्;

(ग) एतादृशनिर्वाचनेषु मतदानार्थं अर्हतानां कृते, तथा च तदर्थं निर्वाचकनामवलीनां परिकल्पनम्;

(घ) एतादृशनिर्वाचनेषु एतादृशपरिषदां सदस्यत्वेन निर्वाचनार्थं अर्हताः;

(ङ) [1][प्रादेशिकपरिषदां] सदस्यानां पदावधि;

(च) एतादृशपरिषद्भ्यः निर्वाचनैः नामनिर्देशनैश्च सम्बद्धः संसक्तः वा अन्यः कोपि विषयः;

(छ) मण्डलपरिषत्सु, प्रादेशिकपरिषत्सु च प्रक्रिया, कार्यसञ्चालनं च [2][(यस्मिन् कस्मिन् अपि स्थाने रिक्ते सत्यपि कार्यकरणाय शक्तिः अन्तर्भवति)];

(ज) मण्डलपरिषदां प्रादेशिकपदिषदां च अधिकारिणां कर्मचारिवृन्दस्य च नियुक्तिः ।

[3][(६अ.) मण्डलपरिषदः निर्वाचितसदस्याः परिषदः कृते साधारणनिर्वाचनस्य पश्चात् परिषदः प्रथमोपवेशनाय नियतदिनाङ्कात् पञ्चानां वर्षाणां अवधिं यावत् स्वपदं धारयेयुः यदि चेत् मण्डलपरिषत् तत्पूर्वं १६-प्रच्छेदाधीनं विघटिता न भवति, तथा च नामनिर्दिष्टः सदस्यः राज्यपालस्य प्रसादपर्यन्तं पदं धारयेत्—

परन्तु उक्तं पञ्चानां वर्षाणां अवधिं, यदा आपातस्य उद्घोषणा प्रवर्तते अथवा यदा एतादृश्यः परिस्थितयः विद्यन्ते याः राज्यपालस्य मत्या निर्वाचनं असाध्यं कुर्वन्ति, तदा राज्यपालः वर्धयितुं क्षमते, यद्वर्धनं एकस्मिन् काले एकवर्षावधिं न अत्येत्; तथा यदा आपातस्य उद्घोषणा प्रवर्तमाना स्यात् तदा उद्घोषणायाः पर्यवसानोत्तरं षण्मासान् अतीत्य अवधिः कदापि वर्धितः न भवेत्—

अपरं च, आकस्मिकरिक्तेः पूर्त्यै निर्वाचितः सदस्य यस्य सदस्यस्य स्थानं सः गृह्णाति तस्य शेषपदावधेः समाप्तिपर्यन्तं पदं धारयेत् ।]

---

१. असमस्य पुनर्घटनं (मेघालयः) अधिनियमः, १९६९ (१९६९ वर्षस्य ५५-तमः) इत्यस्य ७४ अनुभागेन चतुर्थानुसूच्या च "एतादृशपरिषदां" इत्येतस्मात् प्रति एषः शब्दसमूहः संनिवेशितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन उक्तानुसूच्या च एषः शब्दसमूहः अन्तर्वेशितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन उक्तानुसूच्या च एषः उपप्रच्छेदः अन्तर्वेशितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**षष्ठी अनुसूची**

(७) स्वकीयप्रथमघटनात् परं मण्डलपरिषत् प्रादेशिकपरिषद्वा [1][राज्यपालस्य अनुमोदनेन] एतत् प्रच्छेदस्य (६) उपप्रच्छेदे विनिर्दिष्टानां विषयाणां सम्बन्धे नियमान् निर्मातुं क्षमते, तथा च [1][तादृशेनैव अनुमोदनेन]—

(क) अधीनानां स्थानीयपरिषदां स्थानीयमण्डलीनां वा रचनायाः, तासां प्रक्रियायाश्च; तासां कार्य सञ्चालनस्य च; तथा

(ख) यथायथं मण्डलस्य, प्रदेशस्य वा प्रशासनविषयककार्यसम्पादनेन सम्बद्धानां साधारणतया सर्वेषां विषयाणां च,

विनियामकान् नियमान् निर्मातुं क्षमते—

परन्तु यावत् एतदुपप्रच्छेदस्य अधीनं मण्डलपरिषदा, प्रादेशिकपरिषदा वा नियमाः न निर्मीयन्ते तावत् एतादृश्याः प्रत्येकं परिषदः कृते निर्वाचनानां, तस्याः अधिकारिणां, कर्मचारिवृन्दस्य च, तथा तस्याः प्रक्रियायाः कार्य-सञ्चालनस्य च विषये एतत् प्रच्छेदस्य (६) उपप्रच्छेदस्य अधीनं राज्यपालेन निर्मिताः नियमाः प्रभाविनः भवेयुः ।

[2][ * * * * ]

३. **मण्डलपरिषदां, प्रादेशिकपरिषदां च विधिनिर्माणस्य शक्तिः**— (१) स्वशासिप्रदेशस्य प्रादेशिकपरिषदः एतादृशप्रदेशाभ्यन्तरे सर्वेषां क्षेत्राणां सम्बन्धे, तथा स्वशासिमण्डलस्य मण्डलपरिषदः स्वशासिमण्डलाभ्यन्तरे प्रादेशिकपरिषदां, ताश्चेत् भवन्ति, प्राधिकाराधीनक्षेत्राणि वर्जयित्वा, सर्वेषां क्षेत्राणां सम्बन्धे निम्नलिखितविषयेषु विधीनां निर्माणस्य शक्तिः भवेत्—

(क) कृषेः पशुचारणस्य वा प्रयोजनार्थं, अथवा निवासस्य, कृषिभिन्नस्य कार्यस्य वा प्रयोजनार्थं अथवा कस्यापि एतादृशस्य अन्यप्रयोजनस्य कृते येन कस्यापि ग्रामस्य नगरस्य वा निवासिनां हितानां अभि-वृद्धिः सम्भाव्यते, कस्यापि आरक्षितवनस्य भूमेः भिन्नायाः भूमेः आवण्टनं, अधिभोगः, उपयोगः, पृथक्स्थापनं वा—

परन्तु एतादृशेषु विधिषु किमपि, अनिवार्यतया अर्जनं प्राधिकृतं कुर्वतः तदानीं प्रवृत्तस्य विधेः अनुसारेण, [3][सम्बन्धितराज्यस्य शासनं] कस्याः अपि अधिभुक्तायाः अनधिभुक्तायाः वा भूमेः लोकप्रयोजनार्थं अनिवार्यतया अर्जनात् न निवारयेत्;

(ख) आरक्षितवनेतरस्य कस्यापि वनस्य प्रबन्धः;

(ग) कृषिप्रयोजनार्थं कस्याः अपि कुल्यायाः जलसरण्याः वा उपयोगः;

(घ) "झूम" पद्धत्याः स्थानपरिवर्तनशीलायाः कृषेः अन्यप्रकाराणां वा विनियमनम्;

---

१. असमस्य पुनर्घटनं (मेघालयः) अधिनियमः, १९६९ (१९६९ वर्षस्य ५५-तमः) इत्यस्य ७४-अनुभागेन चतुर्थानुसूच्या एषः शब्दसमूहः अन्तर्वेशितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन उक्तानुसूच्या च द्वितीयः पारन्तुकः लोपितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१ (झ) अनुभागेन अष्टमानुसूच्या च केभ्यश्चित् शब्देभ्यः प्रति एषः शब्दसमूहः संनिवेशितः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमान-प्रभावेण) ।

**षष्ठी अनुसूची**

(ङ) ग्रामाणां नगराणां वा समितीनां परिषदां वा स्थापना, तासां शक्तयश्च;

(च) ग्रामारक्षिणं, नगरारक्षिणं वा, लोकस्वास्थ्यं वा लोकस्वच्छतां वा अन्तर्भावयन्, ग्रामप्रशासनेन नगरप्रशासनेन वा सम्बद्धः कोपि अन्यः विषयः;

(छ) प्रमुखानां, मुख्यानां वा नियुक्तिः उत्तराधिकारः वा;

(ज) सम्पत्तेः दायभागः;

[1][(झ) विवाहः, विवाहविच्छेदश्च];

(ञ) सामाजिकरूढयः।

(२) एतत्प्रच्छेदे "आरक्षितवननम्" इत्येतेन एतादृशं क्षेत्रं अभिप्रेयते यत् असमवनविनियमः, १८९१ इत्यस्य अधीनं, प्रश्नगतक्षेत्रे तदानीं प्रवृत्तस्य कस्यापि अन्यस्य विधेः अधीनं वा आरक्षितवनं अस्ति।

(३) एतत् प्रच्छेदस्य अधीनं निर्मिताः सर्वे विधयः सद्यः राज्यपालस्य समक्षं स्थापिताः भवेयुः, यावत् च सः तान् न अनुमन्यते तावत् ते प्रभाविनः न भवेयुः।

४. **स्वशासिमण्डलेषु स्वशासिप्रदेशेषु च न्यायप्रशासनम्**—(१) स्वशासिप्रदेशस्य प्रादेशिकपरिषद् एतादृशप्रदेशाभ्यन्तरक्षेत्राणां विषये, स्वशासिमण्डलस्य मण्डलपरिषत् च तन्मण्डलाभ्यन्तरप्रादेशिकपरिषदां, ताश्चेद् भवन्ति, प्राधिकाराधीनक्षेत्रेभ्यः भिन्नानां, तन्मण्डलाभ्यन्तरीयक्षेत्राणां विषये, तेषां व्यवहारवादानां, विवादविषयाणां च विचारणार्थं येषां सर्वे अपि विवादिनः एतादृशक्षेत्रान्तर्गतानुसूचितजनजातिभिः सम्बद्धाः सन्ति ये च तेभ्यः व्यवहारवादेभ्यः विषयेभ्यश्च भिन्नाः सन्ति येषु एतस्याः अनुसूच्याः ५-प्रच्छेदस्य (१) उपप्रच्छेदस्य उपबन्धाः प्रवर्तन्ते, तद्राज्यस्य कमपि न्यायालयं अपवर्ज्य, ग्रामपरिषदः, ग्रामन्यायालयान् वा सङ्घटयितुं क्षमते, उचितजनान् च एतादृशानां ग्रामपरिषदां सदस्यत्वेन, एतादृशन्यायालयानां वा पीठासीनअधिकारित्वेन नियोक्तुं क्षमते, एतादृशान् अधिकारिणश्चापि नियोक्तुं क्षमते ये एतदनुसूच्याः ३-प्रच्छेदस्य अधीनं निर्मितविधीनां प्रशासनार्थं आवश्यकाः भवेयुः।

(२) एतत्संविधाने किमपि सत्यपि, स्वशासिप्रदेशस्य प्रादेशिकपरिषत् तत्प्रादेशिकपरिषदा तदर्थं घटितः कोपि न्यायालयाः वा स्वशासिमण्डलान्तर्गतस्य कस्यापि क्षेत्रस्य अर्थे प्रादेशिकपरिषदः अभावे वा एतादृशमण्डलस्य मण्डलपरिषत्, तन्मण्डलपरिषदा तदर्थं घटितः कोपि न्यायालयः वा, एतदनुसूच्याः ५-प्रच्छेदस्य (१) उपप्रच्छेदस्य, उपबन्धाः येषु व्यवहारवादेषु, विषयेषु च प्रवर्तन्ते तानि वर्जयित्वा, एतत् प्रच्छेदस्य (१) उपप्रच्छेदस्य अधीनं यथायथं एतादृशस्य प्रदेशस्य क्षेत्रस्य वा अभ्यन्तरे घटितया ग्रामपरिषदा, ग्रामन्यायालयेन वा विचारणीयेषु सर्वेषु व्यवहारवादेषु विवादविषयेषु च पुनर्विचारन्यायालयस्य शक्तीः प्रयोजयेत् तथा च उच्चन्यायालयं, उच्चतमन्यायालयं च विहाय, अन्यस्य कस्यापि न्यायालयस्य एतादृशेषु व्यवहारवादेषु विवादविषयेषु वा अधिकारिता न भवेत्।

---

१. असमस्य पुनर्घटनं (मेघालयः) अधिनियमः १९६९ (१९६९ वर्षस्य ५५-तमः) इत्यस्य ७४-अनुभागेन चतुर्थानुसूच्या च (झ) खण्डात् प्रति एषः खण्डः संनिवेशितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण)।

**षष्ठी अनुसूची**

(३) एतत् प्रच्छेदस्य (२) उपप्रच्छेदस्य उपबन्धाः येषु व्यवहारवादेषु विवादविषयेषु च अनुप्रयुज्यन्ते तेषु [१][* * *] उच्चन्यायालयस्य तादृशी अधिकारिता भवेत्, सा च तेन प्रयोज्येत, यादृशीं राज्यपालः काले काले आदेशेन विनिर्दिशेत् ।

(४) यथायथं प्रादेशिकपरिषद्, मण्डलपरिषद् वा राज्यपालस्य पूर्वानुमोदनेन —

(क) ग्रामपरिषदां, ग्रामन्यायालयानां च घटनस्य एतत् प्रच्छेदस्य अधीनं प्रयोक्तव्यानां तेषां शक्तीनां च,

(ख) एतत् प्रच्छेदस्य (१) उपप्रच्छेदस्यः अधीनं व्यवहारवादानां विषयाणां च विचारणायां परिषद्भिः न्यायालयैः वा अनुसरणीयप्रक्रियाः,

(ग) एतत्प्रच्छेदस्य, (२) उपप्रच्छेदस्य अधीनं पुनर्विचारेषु अन्य कार्यप्रवृत्तिषु च प्रादेशिकपरिषदा मण्डलपरिषदा वा एतादृशपरिषदा घटितेन केनापि न्यायालयेन वा अनुसरणीयप्रक्रियाः,

(घ) एतादृशानां परिषदां न्यायालयानां च ये विनिश्चयाः आदेशाश्च तेषां प्रवर्तनस्य,

(ङ) एतस्य प्रच्छेदस्य (१) उपप्रच्छेदस्य (२) उपप्रच्छेदस्य च उपबन्धान् कार्यान्वितान् कर्तुं अन्येषां सर्वेषां आनुषङ्गिकविषयाणां च,

विनियमनार्थं नियमान् निर्मातुं क्षमते ।

[२][(५) तस्मात् दिनाङ्कात् यं राष्ट्रपतिः [३][सम्बद्धराज्यशासनेन सह परामृश्य] अधिसूचनया एतदर्थं नियतं कुर्यात्, एषः प्रच्छेदः तस्य स्वशासिमण्डलस्य, स्वशासिप्रदेशस्य वा सम्बन्धे यद् अधिसूचनायां विनिर्दिष्टं भवेत् तथा प्रभावी भवेत् यथा इव —

(प्रथमः) १ उपप्रच्छेदे "येषां सर्वे अपि विवादिनः एतादृशे क्षेत्रान्तर्गतानुसूचितजनजातिभिः सम्बद्धाः भवन्ति, ये च तेभ्यः व्यवहारवादेभ्यः विषयेभ्यश्च भिन्नाः सन्ति, येषु एतस्याः अनुसूच्याः ५-प्रच्छेदस्य (१) उपप्रच्छेदस्य उपबन्धाः अनुप्रयुज्यन्ते" इत्येतेभ्यः शब्देभ्यः प्रति "ये अस्याः अनुसूच्याः ५-प्रच्छेदस्य (१) उपप्रच्छेदे विनिर्दिष्टप्रकाराः एतादृशाः वादाः विवादविषयाः वा न सन्ति यानि राज्यपालः एतदर्थं विनिर्देष्टुं क्षमते" इत्येते शब्दाः संनिवेशिताः स्युः;

(द्वितीयः) (२) उपप्रच्छेदः (३) उपप्रच्छेदश्च लोपिते स्याताम्;

---

१. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१ (झ)-अनुभागेन अष्टमानुसूच्या च "असमस्य" इति शब्दः लोपितः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. असमस्य पुनर्घटनं (मेघालयः) अधिनियमः, १९६९ (१९६९ वर्षस्य ५५-तमः) इत्यस्य ७४-अनुभागेन चतुर्थानुसूच्या च एषः उपप्रच्छेदः अन्तर्वेशितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१ (झ) अनुभागेन अष्टमानुसूच्या च केभ्यश्चित् शब्देभ्यः प्रति एषः शब्दसमूहः संनिवेशितः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**षष्ठी अनुसूची**

(तृतीय:) (४) उपप्रच्छेदे—

(क) "यथायथं प्रादेशिकपरिषद्, मण्डलपरिषद् वा राज्यपालस्य पूर्वानुमोदनेन" इत्येतस्मात् शब्दसमूहात् प्रति "राज्यपाल:" इति शब्द: संनिवेशित: स्यात्;

(ख) (क)खण्डात् प्रति निम्नलिखित: खण्ड: संनिवेशित: स्यात्, तद्यथा—

"(क) ग्रामपरिषदां ग्रामन्यायालयानां च घटनस्य, एतत् प्रच्छेदस्य अधीनं तै: प्रयोक्तव्यानां शक्तीनां, तथा ग्रामपरिषदां, ग्रामन्यायालयानां च विनिश्चयानां पुनर्विचारणाभ्यर्थना येभ्य: क्रियेत तेषां न्यायालयानां च,"

(ग) (ग)खण्डात् प्रति निम्नलिखित: खण्ड: संनिवेशित: स्यात्, तद् यथा—

"(ग) प्रादेशिकपरिषद:, मण्डलपरिषद: वा, समक्षं अथवा एतादृश्या परिषदा घटितस्य कस्यापि न्यायालयस्य समक्षं, नियतदिनाङ्कात् अव्यवहितपूर्वं लम्बितानां पुनर्विचारप्रार्थनानां, अन्य-प्रक्रियाणां च राष्ट्रपतिना अन्तरणस्य"; तथा च

(घ) (ङ) खण्डे "(१) उपप्रच्छेदस्य, (२) उपप्रच्छेदस्य च" इत्येतेभ्य: शब्देभ्य: कोष्ठकाभ्यां अङ्काभ्यां च प्रति "(१) उपप्रच्छेदस्य" इत्येष: शब्द:, कोष्ठकं, अङ्कश्च संनिवेशितानि स्यु: ।]

५. **केषांचित् व्यवहारवादानां विवादविषयाणां अपराधानां च विचारणार्थं प्रादेशिकपरिषद्भ्य:, मण्डल-परिषद्भ्यश्च केभ्यश्चित् न्यायालयेभ्य: अधिकारिभ्यश्च व्यवहारप्रक्रियासंहिता, १९०८ इत्यस्या: दण्डप्रक्रिया-संहिता, १८९८[1] इत्यस्याश्च अधीनं शक्तीनां प्रदानम्**—(१) राज्यपाल: कस्मिन् अपि स्वशासिमण्डले स्वशासिप्रदेशे वा, तत्कृते राज्यपालेन विनिर्दिष्टात् कस्मादपि प्रवृत्तात् विधे: उद्भवतां व्यवहारवादानां विवाद-विषयाणां वा विचारणार्थं अथवा भारतीयदण्डसंहिताया: अधीनं, एतादृशे मण्डले, प्रदेशे वा तदानीं प्रवृत्तस्य कस्यापि विधे: अधीनं वा मृत्युना, आजीवनं निर्वासनेन, पञ्चवर्षावधे: अन्यूनं कारावसेन वा दण्डनीयानां अपराधानां विचारणार्थं एतादृशे मण्डले, प्रदेशे वा प्राधिकारवत्यै मण्डलपरिषदे प्रादेशिकपरिषदे वा एतादृशमण्डलपरिषदा घटितेभ्य: न्यायालयेभ्य: वा तदर्थं राज्यपालेन नियुक्ताय कस्मैचिद् अधिकारिणे वा, यथायथं व्यवहारप्रक्रिया-संहिता १९०८ इत्यस्या:, दण्डप्रक्रियासंहिता, १८९८[1] इत्यस्या: वा अधीनं तादृशी: शक्ती: प्रदातुं क्षमते यादृशी: स: उचितं मन्यते, तदनन्तरं च उक्ता परिषद्, न्यायालय:, अधिकारी वा एवं प्रदत्तानां शक्तीनां प्रयोगेण व्यवहार-वादानां, विवादविषयाणां अपराधानां च विचारणं कुर्यात् ।

(२) राज्यपाल: कस्मैचित् मण्डलपरिषदे, प्रादेशिकपरिषदे, कस्मैचित् न्यायालयाय, अधिकारिणे वा, एतत् प्रच्छेदस्य (१) उपप्रच्छेदस्य अधीनं प्रदत्तानां शक्तीनां कामपि प्रत्यादातुं उपान्तरितां वा कर्तुं क्षमते ।

(३) एतत्प्रच्छेदे अभिव्यक्तरूपेण उपबन्धितं विहाय, व्यवहारप्रक्रियासंहिता, १९०८, दण्डप्रक्रियासंहिता, १८९८[1] च कस्मिन् अपि स्वशासिमण्डले कस्मिन् अपि स्वशासिप्रदेशे वा, यत्र एतत्प्रच्छेदस्य उपबन्धा: अनु-प्रयुज्यन्ते केषामपि व्यवहारवादानां, विवाद विषयाणां, अपराधानां वा विचारणायां नानुप्रयुज्येताम् ।

---

१. अधुना दण्डप्रक्रियासंहिता, १९७३ (१९७४ वर्षस्य २ (द्वितीय:) अधिनियम:) द्रष्टव्य: ।

## षष्ठी अनुसूची

[1][(४) राष्ट्रपतिना कस्यापि स्वशासिमण्डलस्य स्वशासिप्रदेशस्य वा सम्बन्धे ४-प्रच्छेदस्य (४) उपप्रच्छेदस्य अधीनं नियतात् दिनाङ्कात् एव एतत्प्रच्छेदगतं किमपि तस्य तस्मिन् मण्डले प्रदेशे वा अनुप्रयोगस्य सम्बन्धे कस्यै अपि मण्डलपरिषदे, प्रादेशिकपरिषदे वा, अथवा मण्डलपरिषदा घटितन्यायालयेभ्यः वा एतत्प्रच्छेदस्यः (१) उपप्रच्छेदे निर्दिष्टाभ्यः शक्तिभ्यः कामपि शक्तिं प्रदातुं राज्यपालं प्राधिकृतं करोति इति इव न मन्येत ।]

[2][६. **प्राथमिकविद्यालयादीन् स्थापयितुं मण्डलपरिषदः शक्तयः** —(१) स्वशासिमण्डलस्य मण्डलपरिषद् मण्डले प्राथमिकविद्यालयानां, औषधालयानां, विपणीनां, पश्ववरोधानां, नौघट्टानां, मीनक्षेत्राणां, मार्गाणां, मार्गपरिवहणस्य, जलपथानां च स्थापनां, निर्माणं, प्रबन्धं च कर्तुं क्षमते, तथा राज्यपालस्य पूर्वानुमोदनेन एतेषां विनियमनाय, नियन्त्रणाय च, विनियमान् निर्मातुं क्षमते, तथा च विशिष्टतया मण्डले प्राथमिकविद्यालयेषु प्राथमिकशिक्षा कस्यां भाषायां, कया च रीत्या दीयेत इत्येतद् विहितं कर्तुं क्षमते ।

(२) राज्यपालः मण्डलपरिषदः सहमत्या एतत्परिषदे, एतस्याः अधिकारिभ्यः वा कृषेः, पशुपालनस्य, सामुदायिकपरियोजनानां, सहकारमण्डलीनां, समाजकल्याणस्य, ग्रामयोजनायाः अथवा कस्यापि अन्यस्य विषयस्य सम्बन्धे यस्मिन् [3][ * * * ] राज्यस्य कार्यपालिका शक्तिः विस्तृता भवति, सप्रतिबन्धं अप्रतिबन्धं वा, कृत्यानि न्यस्तुं क्षमते ।]

७. **मण्डलनिधयः, प्रादेशिकनिधयश्च**—(१) प्रत्येकस्वशासिमण्डलार्थं मण्डलनिधिः, प्रत्येकस्वशासिप्रदेशार्थं च प्रादेशिकनिधिः घटितः भवेत् यस्मिन् क्रमशः तन्मण्डलस्य मण्डलपरिषदा, तत्प्रदेशस्य प्रादेशिकपरिषदा च, एतत्संविधानस्य उपबन्धानां अनुसारेण यथायथं तन्मण्डलस्य तत्प्रदेशस्य वा प्रशासनक्रमे प्राप्तानि सर्वाणि धनानि आकलितानि भवेयुः ।

[4][(२) राज्यपालः, यथायथं, मण्डलनिधेः प्रादेशिकनिधेः वा प्रबन्धार्थं तथा उक्तनिधौ धनस्य आकलनार्थं, तस्मात् धनस्य प्रत्याहरणार्थं, तस्मिन् धनस्य अभिरक्षार्थं च तथा उक्तविषयैः सम्बद्धस्य तेषां आनुषङ्गिकस्य वा कस्यापि विषयस्य सम्बन्धे अनुसरणीयप्रक्रियार्थं, नियमान् निर्मातुं क्षमते ।

---

१. असमस्य पुनर्घटनं (मेघालयः) अधिनियमः, १९६९ (१९६९ वर्षस्य ५५-तमः) इत्यस्य ७४-अनुभागेन चतुर्थानुसूच्या च एषः उपप्रच्छेदः अन्तर्वेशितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन उक्तानुसूच्या च ६-प्रच्छेदात् प्रति एषः प्रच्छेदः संनिवेशितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१(झ)-अनुभागेन अष्टमानुसूच्या च "असमस्य यथायथं मेघालयस्य वा" इत्येषः शब्दसमूहः लोपितः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

४. असमस्य पुनर्घटनं (मेघालयः) अधिनियमः, १९६९ (१९६९ वर्षस्य ५५-तमः) इत्यस्य ७४-अनुभागेन चतुर्थानुसूच्या च (२) उपप्रच्छेदात् प्रति एते उपप्रच्छेदाः संनिवेशिताः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**षष्ठी अनुसूची**

(३) यथायथं मण्डलपरिषदः प्रादेशिकपरिषदः वा लेखाः एतादृशे प्ररूपे रक्षिताः भवेयुः यादृशं भारतस्य नियन्त्रकमहालेखापरीक्षकः राष्ट्रपतेः अनुमोदनेन विहितं कुर्यात् ।

(४) नियन्त्रकमहालेखापरीक्षकः मण्डलपरिषदां, प्रादेशिकपरिषदां च लेखानां परीक्षां तया रीत्या कारयेत् यां स उचितां मन्येत, तथा नियन्त्रकमहालेखापरीक्षकस्य एतादृशलेखाभिः सम्बद्धानि प्रतिवेदनानि राज्यपालस्य समक्षं प्रस्तुतानि भवेयुः यः तानि परिषदः समक्षं स्थापितानि कारयेत् ।]

८. **भूराजस्वस्य निर्धारणाय, सङ्ग्रहणाय तथा च कराधिरोपणाय शक्तिः**—(१) स्वशासिप्रदेशस्य प्रादेशिकपरिषदः एतादृशप्रदेशस्य अन्तर्गतानां सर्वासां भूमीनां विषये, स्वशासिमण्डलस्य मण्डलपरिषदश्च, मण्डलान्तर्गतानां प्रादेशिकपरिषदां, ताः भवन्ति चेत्, प्राधिकाराधीनेषु क्षेत्रेषु स्थिताः भूमीः विहाय, मण्डलान्तर्गतानां सर्वासां अन्यासां भूमीनां विषये [1][सामान्यतया राज्ये भूराजस्वस्य प्रयोजनार्थं भूमीनां परिगणने राज्यशासनेन] अनुस्रियमाणानां सिद्धान्तानां अनुसारेण भूराजस्वं निर्धारयितुं सङ्ग्रहीतुं च शक्तिः भवेत् ।

(२) स्वशासिप्रदेशस्य प्रादेशिकपरिषदः एतादृशप्रदेशस्य अन्तर्गतानां क्षेत्राणां विषये, स्वशासिमण्डलस्य मण्डलपरिषदश्च, मण्डलस्य अन्तर्गतानां प्रादेशिकपरिषदां, ताः भवन्ति चेत्, प्राधिकाराधीनं क्षेत्राणि विहाय, मण्डलान्तर्गतानां सर्वेषां अन्येषां क्षेत्राणां विषये भूमिषु गृहेषु च करान्, एतादृशेषु क्षेत्रेषु निवासं कुर्वद्भ्यः जनेभ्यश्च पथकरं उद्ग्रहीतुं सङ्ग्रहीतुं च शक्तिः भवेत् ।

(३) स्वशासिमण्डलस्य मण्डलपरिषदः एतादृशस्य मण्डलस्य अभ्यन्तरे निम्नलिखितेषु करेषु सर्वान् कांश्चित् वा उद्ग्रहीतुं, सङ्ग्रहीतुं च शक्तिः भवेत्, तद् यथा—

(क) वृत्तिषु, व्यापारेषु, आजीविकासु, नियोजनासु च कराः;

(ख) प्राणिषु, यानेषु, नौषु च कराः ;

(ग) कस्यामपि विपणौ तत्र विक्रयार्थं भाण्डानां प्रवेशे कराः; नौभिः उह्यमानेषु जनेषु भाण्डेषु च पथकराः ;

(घ) विद्यालयानां, औषधालयानां, मार्गाणां वा सुस्थित्यै कराः ।

(४) एतत् प्रच्छेदस्य (२) उपप्रच्छेदे, (३) उपप्रच्छेदे च विनिर्दिष्टेषु करेषु कस्यापि उद्ग्रहणं, सङ्ग्रहणं च उपबन्धितं कर्तुं यथायथं प्रादेशिकपरिषद्, मण्डलपरिषद् वा विनियमान् निर्मातुं क्षमते; [2][एतादृशं प्रत्येकं विनियमश्च सद्यः राज्यपालस्य समक्षं स्थाप्येत; सः च, यावत् तेन न अनुमन्येत, तावत् कार्यकरः न भवेत् ।]

---

१. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १६७१ (१६७१ वर्षस्य ८१-तमः) इत्यस्य ७१ (भ) अनुभागेन अष्टमानुसूच्या च केभ्यश्चित् शब्देभ्यः प्रति एषः शब्दसमूहः संनिवेशितः (२१-१-१६७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. असमस्य पुनर्घटनं (मेघालयः) अधिनियमः, १६६६ (१६६६ वर्षस्य ५५-तमः) इत्यस्य ७४-अनुभागेन चतुर्थानुसूच्या च एषः शब्दसमूहः अन्तर्वेशितः (२-४-१६७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**षष्ठी अनुसूची**

९. **खनिजानां पूर्वेक्षणार्थं, निष्कर्षणार्थं वा अनुज्ञप्तयः, भाटकपत्रप्रदानं वा**—(१) कस्यापि स्वशासिमण्डलस्य अन्तर्गतस्य कस्यापि क्षेत्रस्य सम्बन्धे [1][राज्यस्य शासनेन] खनिजानां पूर्वेक्षणार्थं, निष्कर्षणार्थं वा दत्तेभ्यः अनुज्ञप्तिभ्यः भाटकपत्रेभ्यः वा प्रतिवर्षं प्रोद्भूयमानस्य स्वामिस्वस्य एतादृशः अंशः तस्यै मण्डलपरिषदे तथा दीयेत यथा [1][राज्यस्य शासनस्य] एतादृशमण्डलस्य मण्डलपरिषदश्च मध्ये समयः कृतः भवेत् ।

(२) मण्डलपरिषदे प्रदातव्यस्य एतादृशस्य स्वामिस्वांशस्य विषये यदि कश्चिद् विवादः उत्पद्यते तर्हि सः राज्यपालाय अवधारणार्थं निर्देश्यः, राज्यपालेन च स्वविवेकानुसारं अवधारितः राशिः एतत् प्रच्छेदस्य (१) उपप्रच्छेदस्य अधीनं मण्डलपरिषदे सन्देयः राशिः मन्येत, राज्यपालस्य विनिश्चयश्च अन्तिमः भवेत् ।

१०. **जनजातिभ्यः भिन्नजनानां, वृद्धिजीवित्वस्य व्यापारस्य च नियन्त्रणार्थं मण्डलपरिषदः विनियमनिर्माणस्य शक्तिः**—(१) स्वशासिमण्डलस्य मण्डलपरिषत् तस्मिन् मण्डले तत्र निवसन्तीभ्यः जनजातिभ्यः भिन्नानां जनानां वृद्धिजीवित्वस्य, व्यापारस्य च विनियमनार्थं नियन्त्राणार्थं च, विनियमान् निर्मातुं क्षमते ।

(२) विशेषतः, पूर्वगामिशक्तेः व्यापकतायां विपरीतप्रभावेण विना च, एतादृशाः विनियमाः विधातुं क्षमन्ते यत्—

(क) तदर्थं दत्तां अनुज्ञप्तिं, धारयन्तं जनं अन्तरेण कोपि अन्यः वृद्धिजीवित्वस्य कार्यं न कुर्यात्;

(ख) वृद्धिजीविना आरोप्यं प्राप्यं वा वृद्धेः अधिकतमं मानं किं भवेत्;

(ग) वृद्धिजीविभिः लेखानां रक्षणस्य, मण्डलपरिषद्भिः तदर्थं नियुक्तैः अधिकारिभिः एतादृशलेखानां निरीक्षणस्य च उपबन्धं कुर्यात्;

(घ) कोपि जनः यः मण्डले निवसन्तीनां जनजातीनां जनः न वर्तते, मण्डलपरिषदा तदर्थं दत्तया अनुज्ञप्त्या एव कस्यापि वस्तुनः राशिशः, अल्पशः वा पण्यकार्यं कुर्यात्, नान्यथा—

परन्तु एतत् प्रच्छेदस्य अधीनं एतादृशाः विनियमाः तावत् न निर्मीयेरन् यावत् ते मण्डलपरिषदः समस्तसदस्यानां सङ्ख्यायाः चतुर्थांशत्रयात् अन्यूनेन बहुमतेन पारिताः न भवेयुः;

अपरं च, एतादृशानां केषामपि विनियमानां अधीनं एतादृशानां विनियमानां निर्माणकालात् पूर्वं मण्डलस्य अभ्यन्तरे व्यापारं कुर्वते वृद्धिजीविने, व्यापारिणे वा अनुज्ञप्तिदाने निषेधस्य क्षमता न भवेत् ।

(३) एतत्प्रच्छेदस्य अधीनं निर्मिताः सर्वे विनियमाः सद्यः राज्यपालस्य समक्षं स्थाप्येरन्; यावत् च सः तान् नानुमन्यते तावत् ते प्रभाविनः न भवेयुः ।

११. **एतदनुसूच्याः अधीनं निर्मितानां विधीनां नियमानां, विनियमानां च प्रकाशनम्**:—मण्डलपरिषदा प्रादेशिकपरिषदा वा एतदनुसूच्याः अधीनं निर्मिताः सर्वे विधयः, नियमाः, विनियमाश्च राज्यस्य राजपत्रे सद्यः प्रकाश्येरन्, एतादृशे प्रकाशने च ते विधिवत् कार्यकराः भवेयुः ।

---

१. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१ (झ) अनुभागेन अष्टमानुसूच्या च "असमस्य शासनस्य" इति एताभ्यां शब्दाभ्यां प्रति एतौ शब्दौ संनिवेशितौ (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**षष्ठी अनुसूची**

१२. [1][**असमराज्यस्य स्वशासिमण्डलेषु स्वशासिप्रदेशेषु च संसदः असमराज्यस्य विधानमण्डलस्य च अधिनियमानां अनुप्रयोगः**]—(१) एतत्संविधाने किमपि सत्यपि—

(क) [2][असमराज्यस्य विधानमण्डलस्य] कोपि अधिनियमः, यः तेषां विषयाणां सम्बन्धे विद्यते ये एतदनुसूच्याः ३-प्रच्छेदे तादृशविषयाः इव विनिर्दिष्टाः सन्ति, यत् तेषां सम्बन्धे मण्डलपरिषत्प्रादेशिकपरिषद्वा विधीन् निर्मातुं क्षमते; तथा [2][असमराज्यस्य विधानमण्डलस्य] कोपि अधिनियमः यः कस्यापि अनासुतस्य माद्यसारिकपानस्य उपभोगस्य प्रतिषेधं, निर्बन्धनं वा करोति, [3][तद्राज्यस्य] कस्मिन् अपि स्वशासिमण्डले स्वशासिप्रदेशे वा तावत् नानुप्रयुज्येत यावत् अन्यतरस्यामपि स्थितौ, एतादृशस्य मण्डलस्य, एतादृशस्य प्रदेशस्य वा अधिकारितावती मण्डलपरिषद् लोकाधिसूचनया तथा न निदिशति, तथा च मण्डलपरिषत् कस्यापि अधिनियमस्य विषये एतादृशनिदेशनं कुर्वती एतद् अपि निदेष्टुं क्षमते यत् तादृशे मण्डले, प्रदेशे वा तस्य कस्मिन् अपि भागे वा अनुप्रयोगे अधिनियमः तादृशैः अपवादैः उपान्तरणैः वा सह कार्यकरः भवेत् यथा सा उचितं मन्यते।

(ख) राज्यपालः लोकाधिसूचनया निदेष्टुं क्षमते यत् संसदः अथवा [2][असमराज्यस्य विधानमण्डलस्य] कोपि अधिनियमः यं एतदुपप्रच्छेदस्य (क) खण्डस्य उपबन्धाः नानुप्रयुज्यन्ते, [3][तद्राज्यस्य] कस्मिन् अपि स्वशासिमण्डले, स्वशासिप्रदेशे वा नानुप्रयुज्येत अथवा एतादृशे मण्डले प्रदेशे वा तस्य कस्मिन् अपि भागे वा एतादृशैः अपवादैः उपान्तरणैः सह अनुप्रयुज्येत यथा सः तस्यां अधिसूचनायां विनिर्दिशेत्।

(२) एतत् प्रच्छेदस्य (१) उपप्रच्छेदस्य अधीनं दत्तः कोपि निदेशः तथा दातुं शक्यते यथा तस्य भूतलक्षिप्रभावः अपि भवेत्।

[4][**१२अ. संसदः, मेघालयराज्यस्य विधानमण्डलस्य च अधिनियमानां मेघालयराज्यस्य स्वशासिमण्डलेषु, स्वशासिप्रदेशेषु च अनुप्रयोगः** —एतत्संविधाने किमपि सत्यपि—

(क) एतदनुसूच्याः ३ प्रच्छेदस्य (१) उपप्रच्छेदे विनिर्दिष्टस्य कस्यापि विषयस्य सम्बन्धे मेघालयराज्यस्य मण्डलपरिषदा प्रादेशिकपरिषदा वा निर्मितस्य विधेः कोपि उपबन्धः अथवा एतदनुसूच्याः ८ प्रच्छेदस्य १० प्रच्छेदस्य वा अधीनं तद्राज्यस्य मण्डलपरिषदा प्रादेशिकपरिषदा वा निर्मितस्य कस्यापि विनियमस्य कोपि उपबन्धः यदि एतद् विषयस्य सम्बन्धे मेघालयराज्यस्य विधानमण्डलेन निर्मितस्य विधेः कस्यापि उपबन्धस्य विरोधी अस्ति, तर्हि यथायथं मण्डलपरिषदा, प्रादेशिकपरिषदा वा, मेघालयराज्यस्य विधानमण्डलेन विधिः निर्मितः भवति तत्पूर्वं, तत्पश्चात् वा, निर्मितः विधिः विनियमः वा यावत् पर्यन्तं सः विरोधीः अस्ति तावत् पर्यन्तं, शून्यः भवेत्, मेघालयराज्यस्य विधानमण्डलेन निर्मितश्च विधिः तत्र अभिभावी भवेत्;

---

१. पूर्वोत्तरक्षेत्राणां (पुनर्वटनं) अधिनियमः, १६७१ (१६७१ वर्षस्य ८१-तमः) इत्यस्य ७१ (फ) अनुभागेन अष्टमानुसूच्या च शीर्षकात् प्रति एतत् संनिवेशितम् (२१-१-१६७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन उक्तानुसूच्या च "राज्यस्य विधानमण्डलस्य" इत्येताभ्यां शब्दाभ्यां प्रति एते शब्दाः संनिवेशिताः (२१-१-१६७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन उक्तानुसूच्या च एतत् पदं अन्तर्वेशितम् (२१-१-१६७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

४. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन उक्तानुसूच्या च १२अ-प्रच्छेदात् प्रति एषः प्रच्छेदः संनिवेशितः (२१-१-१६७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

**षष्ठी अनुसूची**

(ख) राष्ट्रपतिः संसदः कस्यापि अधिनियमस्य सम्बन्धे अधिसूचनया निदेष्टुं क्षमते, यत् सः मेघालय-राज्यस्य कस्मिन् अपि स्वशासिमण्डले, स्वशासिप्रदेशे वा नानुप्रयुज्येत अथवा एतादृशे मण्डले, प्रदेशे वा तस्य कतमस्मिन् अपि भागे वा तादृशैः अपवादैः उपान्तरणैः वा सह अनुप्रयुज्येत यादृशानि सः अधिसूचनायां विनिर्दिशेत् तथा एतादृशः कोपि निदेशः तथा दीयेत यथा भूतलक्षिप्रभावेण कार्यकरः भवेत् ।]

[1][ १२आ. **संसदः, मिजोरमसङ्घराज्यक्षेत्रस्य विधानमण्डलस्य च अधिनियमानां मिजोरमसङ्घराज्यक्षेत्रस्य स्वशासिमण्डलेषु स्वशासिप्रदेशेषु, च अनुप्रयोगः**—एतत्संविधाने किमपि सत्यपि—

(क) एतदनुसूच्याः ३ प्रच्छेदस्य: (१) उपप्रच्छेदे विनिर्दिष्टस्य कस्यापि विषयस्य सम्बन्धे मिजोरम-सङ्घराज्यक्षेत्रस्य मण्डलपरिषदा, प्रादेशिकपरिषदा वा निर्मितस्य विधेः कोपि उपबन्धः अथवा एतदनुसूच्याः ८ प्रच्छेदस्य, १० प्रच्छेदस्य वा अधीनं तत्सङ्घराज्क्षेत्रस्य मण्डलपरिषदा, प्रादेशिकपरिषदा वा निर्मितस्य कस्यापि उपबन्धस्य विरोधी अस्ति तर्हि यथायथं मण्डलपरिषदा प्रादेशिकपरिषदा वा, मिजोरमसङ्घराज्य-क्षेत्रस्य विधानमण्डलेन विधिः निर्मितः भवति तत्पूर्वं, तत्पश्चात् वा, निर्मितः विधिः यावत् पर्यन्तं सः विरोधी अस्ति तावत् पर्यन्तं शून्यः भवेत्, मिजोरमसङ्घराज्यक्षेत्रस्य विधानमण्डलेन निर्मितः विधिश्च तत्र अभिभावी भवेत्;

(ख) राष्ट्रपतिः, संसदः कस्यापि अधिनियमस्य सम्बन्धे अधिसूचनया निदेष्टुं क्षमते यत् सः मिजोरम-सङ्घराज्यक्षेत्रस्य कतमस्मिन् स्वशासिमण्डले, स्वशासिप्रदेशे वा नानुप्रयुज्येत अथवा एतादृशैः मण्डलैः, प्रदेशैः वा तस्य कतमस्मिन् भागे वा तादृशैः अपवादैः उपान्तरणैः वा सह अनुप्रयुज्येत यादृशानि सः अधिसूचनायां विनिर्दिशेत् तथा एतादृशः कोपि निदेशः तथा दीयेत यथा भूतलक्षिप्रभावेण कार्यकरः भवेत् ।]

१३. **स्वशासिमण्डलैः सम्बद्धानां, प्राक्कलितानां प्राप्तीनां, व्ययानां च वार्षिकवित्तविवरणे पृथक् प्रदर्शनम्**—स्वशासिमण्डलेन सम्बद्धाः प्राक्कलिताः, प्राप्तयः, व्ययाश्च ये [2][ * * * ] राज्यस्य सञ्चितनिधौ आकलनीयाः, ततः वा करणीयाः विद्यन्ते, प्रथमं मण्डलपरिषदः समक्षं विचारविमर्शार्थं स्थाप्येरन्, एतादृशात् विचारविमर्शात् परं च एतत् संविधानस्य २०२-तमानुच्छेदस्य अधीनं राज्यविधानमण्डलस्य समक्षं स्थापनीये वार्षिकवित्तविवरणे पृथक्तः प्रदर्श्येरन् ।

१४. **स्वशासिमण्डलानां स्वशासिप्रदेशानां च प्रशासनस्य परिप्रश्नार्थं तद्विषये प्रतिवेदनार्थं च आयोगस्य नियुक्तिः**—(१) राज्यपालः राज्यस्य स्वशासिमण्डलानां स्वशासिप्रदेशानां च प्रशासनेन सम्बद्धस्य तेन विनिर्दिष्टस्य कस्यापि विषयस्य एतदनुसूच्याः १ प्रच्छेदस्य (३) उपप्रच्छेदस्य (ग), (घ), (ङ), (च) खण्डेषु विनिर्दिष्टान् विषयान् अधिकृत्य परिप्रश्नार्थं प्रतिवेदनदानार्थं च कस्मिन् अपि काले आयोगं नियोक्तुं क्षमते, राज्यस्य स्वशासि-मण्डलानां स्वशासिप्रदेशानां च साधारणतया प्रशासनस्य, विशेषतश्च—

---

१. सङ्घराज्यक्षेत्रं (संशोधनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८३-तमः) इत्यस्य १३-अनुभागेन १२आ-प्रच्छेदात् प्रति एषः प्रच्छेदः संनिवेशितः (२९-४-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१ (झ)-अनुभागेन अष्टमानुसूच्या च "असम" इति शब्दः लोपितः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**षष्ठी अनुसूची**

(क) तादृशेषु मण्डलेषु प्रदेशेषु च शिक्षायाश्चिकित्सायाश्च सौकर्यस्य सञ्चारस्य च व्यवस्थायाः;

(ख) तादृशानां मण्डलानां प्रदेशानां च विषये कस्यापि नूतनस्य, विशेषस्य वा विधानस्य आवश्यकतायाः, तथा

(ग) मण्डलपरिषद्भिः प्रादेशिकपरिषद्भिः निर्मितानां विधीनां, नियमानां, विनियमानां प्रशासनस्य च, काले काले परिप्रश्नार्थं, प्रतिवेदनार्थं च आयोगं नियोक्तुं क्षमते, आयोगेन अनुसरणीयां प्रक्रियां च परिणिश्चेतुं क्षमते ।

(२) तत्सम्बन्धी मन्त्री एतादृशस्य प्रत्येकं आयोगस्य प्रतिवेदनं राज्यपालस्य तद्विषयकेन पुरः प्रशंसनेन सह, तद्विषये [1][राज्यशासनेन] प्रस्थापनीयायाः क्रियायाः विषये स्पष्टीकारकज्ञापनेन सह च राज्यविधानमण्डलस्य समक्षं स्थापयेत् ।

(३) शासनकार्यस्य स्वमन्त्रिषु आवण्टनं कुर्वन् राज्यपालः स्वमन्त्रिषु एकं विशेषतः राज्यस्य स्वशासिमण्डलानां स्वशासिप्रदेशानां च कल्याणस्य भारसाधकं कर्तुं क्षमते ।

**१५. मण्डलपरिषदां प्रादेशिकपरिषदां वा कार्याणां सङ्कल्पानां च विलोपनं निलम्बनं वा**—(१) यदि कस्मिन् अपि काले राज्यपालः समाहितः भवति यत् मण्डलपरिषदः प्रादेशिकपरिषदः वा केनापि कार्येण सङ्कल्पेन वा भारतस्य सुरक्षिततायाः भयापन्नता सम्भाव्यते [2][अथवा लोकव्यवस्थायां प्रतिकूलः प्रभावः सम्भाव्यते], तर्हि सः एतादृशं कार्यं सङ्कल्पं वा विलोपयितुं, निलम्बयितुं वा क्षमते, एतादृशान् उपायान् च (परिषदः निलम्बनेन, परिषदि निहितासु, तथा प्रयोक्तव्यासु वा शक्तिषु सर्वासां, कासांचित् वा स्वायत्तीकरणेन सह) आश्रयितुं क्षमते यादृशान् सः एतादृशकार्यस्य करणं, अनुवृत्तिं वा एतादृशसङ्कल्पस्य च कार्यकरत्वं निवारयितुं आवश्यकान् मन्यते ।

(२) एतत् प्रच्छेदस्यः (१) उपप्रच्छेदस्य अधीनं राज्यपालेन दत्तः आदेशः, तथाभूतस्य आदेशस्य कारणैः सह यथासम्भवं शीघ्रं राज्यविधानमण्डलस्य समक्षं स्थाप्येत; सः च आदेशः, यदि विधानमण्डलेन न प्रतिसंह्रियते, तर्हि यस्मिन् दिनाङ्के सः एवं दत्तः भवति तस्मात् दिनाङ्कात् द्वादशानां मासानां कालावधिं यावत् प्रवर्तने अनुवर्तेत—

परन्तु यदि यावद्वारं च राज्यविधानमण्डलेन एतादृशस्य आदेशस्य अनुवृत्त्यर्थं अनुमोदनस्य सङ्कल्पः पार्यते, तर्हि तावद्वारं च सः आदेशः, राज्यपालेन शून्यीकृतः न भवति चेत्, तस्मात् दिनाङ्कात् यस्मिन् एतदनुच्छेदस्य अधीनं सः अन्यथा प्रवर्तनाद् विरतः अभविष्यत्, द्वादशानां मासानां अन्यं कालावधिं यावत् प्रवर्तने अनुवर्तेत ।

---

१. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१(झ) अनुभागेन अष्टमानुसूच्या च "असमशासनेन" इत्येतस्मात् पदात् प्रति एतत् पदं संनिवेशितम् (२१-१-१९७१ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. असमस्य पुनर्घटनं (मेघालयः) अधिनियमः, १९६९ (१९६९ वर्षस्य ५५-तमः) इत्यस्य ७४ अनुभागेन, चतुर्थानुसूच्या च एते शब्दाः अन्तर्वेशिताः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**षष्ठी अनुसूची**

१६. **मण्डलपरिषदः प्रादेशिकपरिषदः वा विघटनम्**—[1][(१)] एतदनुसूच्याः १४ प्रच्छेदस्य अधीनं नियुक्तस्य आयोगस्य पुरः प्रशंसने प्राप्ते राज्यपालः लोकाधिसूचनया कस्यापि मण्डलपरिषदः प्रादेशिकपरिषदः वा विघटनं कर्तुं क्षमते, तथाच —

(क) परिषदः, पुनः संघटनार्थं सद्यः एव नूतनं साधारणनिर्वाचनं कारयितुं क्षमते, अथवा

(ख) राज्य विधानमण्डलस्य पुर्वानुमोदनेन एतादृशपरिषदः प्राधिकाराधीनक्षेत्रस्य प्रशासनं राज्यपालः स्वायत्तीकर्तुं क्षमते, अथवा एतादृशक्षेत्रस्य प्रशासनं उक्तप्रच्छेदस्य अधीनं नियुक्तस्य आयोगस्य, अथवा अन्यस्य निकायस्य वा अधीनं यः तेन योग्यः मन्यते, द्वादशमासेभ्यः अनधिककालावधिं यावत् स्थापयितुं क्षमते—

परन्तु यदा एतदुपप्रच्छेदस्य (क) खण्डस्य अधीनं कश्चित् आदेशः प्रदत्तः भवेत् तदा राज्यपालः प्रश्नगत-क्षेत्रस्य प्रशासनस्य विषये साधारणनिर्वाचने निर्वृत्ते सति परिषदः पुनर्घटनस्य लम्बनावस्थां यावत् एतत्प्रच्छेदस्य (क) खण्डे निर्दिष्टां क्रियां कर्तुं क्षमते—

अपरंच, यथायथं मण्डलपरिषदे प्रादेशिकपरिषदे वा राज्यविधानमण्डलस्य समक्षं स्वाभिमतानि स्थापयितुं अवसरदानेन विना एतद् उपप्रच्छेदस्य (ख)खण्डस्य अधीनं कापि क्रिया न क्रियेत ।

[2][(२) यदि कस्मिन् अपि काले राज्यपालः समाहितः भवति यद् एतादृशी परिस्थितिः उत्पन्ना अस्ति यस्यां एतदनुसूच्याः अधीनं स्वशासिमण्डलस्य, स्वशासिप्रदेशस्य वा प्रशासनस्य सञ्चालनं अशक्यं विद्यते, तर्हि सः लोकाधिसूचनया, यथायथं मण्डलपरिषदि प्रादेशिकपरिषदि वा निहितानि तया प्रयोक्तव्यानि वा कर्तव्यानि शक्तीश्च स्वायत्तीकर्तुं क्षमते, तथा निदेशं प्रदातुं च क्षमते यत् तादृशानि कर्तव्यानि शक्तयः वा तादृशेन जनेन प्राधिकारिणा वा यं सः एतत् सम्बन्धे विनिर्दिशेत् प्रयोज्येरन् षड्भ्यः मासेभ्यः अनधिककालावधिं यावत्—

परन्तु राज्यपालः तदतिरिक्तेन आदेशेन आदेशैः वा मूलादेशस्य प्रवृत्तिं विस्तारयितुं क्षमते प्रत्येकवारं षड्भ्यः मासेभ्यः अनधिकं कालावधिं यावत् ।

(३) (२) उपप्रच्छेदस्यः अधीनं प्रदत्तः प्रत्येकं आदेशः तथाभूतस्य आदेशस्य कारणैः सह राज्यस्य विधान-मण्डलस्य समक्ष स्थाप्येत; तथा च आदेशप्रदानात् परं राज्यस्य विधानमण्डलं यस्मिन् दिनाङ्के प्रथमं उपविशति तस्मात् दिनाङ्कात् त्रिंशद्दिनानां समाप्तौ सः प्रवर्तनात् विरतः भवेत् यदि तदवधेः समाप्तेः प्राक् सः राज्य-विधानमण्डलेन अनुमोदितः न भवति ।]

---

१. असमस्य पुनर्घटनं (मेघालयः) अधिनियमः, १९६९ (१९६९ वर्षस्य ५५-तमः) इत्यस्य ७४-अनुभागेन चतुर्थानुसूच्या च १६ प्रच्छेदः १६ प्रच्छेदस्य (१) उपप्रच्छेदरूपेण पुनः क्रमाङ्कितः (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन उक्तानुसूच्या च एतौ उपप्रच्छेदौ अन्तर्वेशितौ (२-४-१९७० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**षष्ठी अनुसूची**

१७. **स्वशासिमण्डलेषु निर्वाचनक्षेत्राणां निर्माणे एतादृशमण्डलेभ्यः क्षेत्राणां अपवर्जनम्**—[1][असमराज्यस्य, मेघालयराज्यस्य वा विधानसभायै] निर्वाचनप्रयोजनार्थं राज्यपालः आदेशेन घोषयितुं क्षमते [2][यथायथं असमराज्यस्य मेघालयराज्यस्य वा] कस्यापि स्वशासिमण्डलस्य अभ्यन्तरे किमपि क्षेत्रं एतादृशाय कस्मैचित् मण्डलाय विधानसभायां आरक्षितस्य स्थानस्य स्थानानां वा प्रत्येकस्यापि निर्वाचनक्षेत्रस्य भागः न भवेत् किन्तु विधानसभायां एवं आरक्षितस्य स्थानस्य स्थानानां वा पूर्त्यै आदेशे विनिर्दिष्टस्य निर्वाचन-क्षेत्रस्य भागः भवेत् ।

[3][ * * * * ]

१९. **सङ्क्रमणकालिकाः उपबन्धाः**—(१) एतत्संविधानस्य प्रारम्भात् परं यथासम्भवं शीघ्रं एतदनुसूच्याः अधीनं राज्यपालः राज्यस्य प्रत्येकस्वशासिमण्डलस्य कृते मण्डलपरिषदः घटनार्थं उपायान् कुर्यात्, यावत् च कस्यापि स्वशासिमण्डलस्य कृते मण्डलपरिषद् एवं घटिता न भवति तावत् एतादृशस्य मण्डलस्य प्रशासनं राज्यपाले निहितं भवेत् एतादृशमण्डलस्य च अभ्यन्तरे क्षेत्राणां प्रशासने एतदनुसूच्याः पूर्वगाम्युपबन्धानां स्थाने निम्नलिखिताः उपबन्धाः अनुप्रयुक्ताः भवेयुः, तद्यथा—

(क) संसदः, तद्राज्यविधानमण्डलस्य वा कोपि अधिनियमः, एतादृशे क्षेत्रे तावत् न अनुप्रयोक्तव्यः यावत् राज्यपालः लोकाधिसूचनया एवं निदेशं न करोति, कस्यापि अधिनियमस्य विषये च राज्यपालः एवं निदेशं कुर्वन् निदेष्टुं क्षमते यत् सः अधिनियमः तादृशे क्षेत्रे तस्य कस्मिन् अपि विनिर्दिष्टे भागे वा एतादृशैः अपवादैः उपान्तरणैश्च सह प्रवृत्तः भवेत् यथा सः उचितं मन्यते;

(ख) कस्यापि एतादृशस्य क्षेत्रस्य शान्त्यै, सुशासनार्थं च राज्यपालः विनियमान् निर्मातुं क्षमते; एवं निर्मिताः विनियमाश्च एतादृशे क्षेत्रे तदानीं अनुप्रयुज्यमानं संसदः तद्राज्यस्य विधानमण्डलस्य वा कमपि अधिनियमं, कमपि विद्यमानं विधिं वा निरसितुं संशोधयितुं वा क्षमते ।

(२) एतत् प्रच्छेदस्य (१) उपप्रच्छेदस्य (क) खण्डस्य अधीनं राज्यपालेन प्रदत्तः कोपि निदेशः तथा प्रदातुं शक्येत यथा तस्य भूतलक्षिप्रभावः अपि भवेत् ।

(३) एतत् प्रच्छेदस्य (१) उपप्रच्छेदस्य (ख) खण्डस्य अधीनं निर्मिताः सर्वे विनियमाः सद्यः राष्ट्रपतेः समक्षं स्थाप्येरन् यावत् च सः तान् न अनुमन्यते तावत् ते प्रभाविनः न भवेयुः ।

---

१. पूर्वोत्तर क्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१ (झ) अनुभागेन अष्टमानुसूच्या च "असमस्य विधानसभायै" इत्येतस्मात् प्रति एते शब्दाः संनिवेशिताः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन उक्तानुसूच्या च एते शब्दाः अन्तर्वेशिताः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन उक्तानुसूच्या च १८ प्रच्छेदः लोपितः (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**षष्ठी अनुसूची**

[1][२०. **जनजातिक्षेत्राणि**—(१) निम्नलिखितायाः सारिण्याः प्रथमभागे, द्वितीयभागे, तृतीयभागे च विनिर्दिष्टानि क्षेत्राणि क्रमशः असमराज्यस्य, मेघालयराज्यस्य, मिजोरमसङ्घराज्यक्षेत्रस्य च अभ्यन्तरे जनजातिक्षेत्राणि भवेयुः।

(२) निम्नलिखित किमपि मण्डलं प्रति निर्देशस्य एवं अर्थः ग्राह्यः यथा सः पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ इत्यस्य २-अनुभागस्य (ख) खण्डस्य अधीनं नियतदिनात् अव्यवहितपूर्वं विद्यमाने एतन्नामके स्वशासिमण्डले समाविष्टानि राज्यक्षेत्राणि प्रति निर्देशः अस्तिः—

परन्तु एतदनुसूच्याः ३ प्रच्छेदस्य (१) उपप्रच्छेदस्य (ङ) खण्डस्य, (च) खण्डस्य च; ४ प्रच्छेदस्य; ५ प्रच्छेदस्य; ६ प्रच्छेदस्य; ८ प्रच्छेदस्य (२) उपप्रच्छेदस्य तथा (३) उपप्रच्छेदस्य (क) खण्डस्य, (ख) खण्डस्य, (घ) खण्डस्य च; तथा (४) उपप्रच्छेदस्य; तथा च १० प्रच्छेदस्य (२) उपप्रच्छेदस्य (घ) खण्डस्य च प्रयोजनानां अर्थे शिलङ् नगरपालिकायां समाविष्टस्य क्षेत्रस्य कस्यापि भागस्य विषये एवं न मन्येत यत् सः [2][खासीपर्वतीयमण्डलस्य] अभ्यन्तरे वर्तते।

## सारिणी

**प्रथमः भागः**

१. उत्तरीयं कछारपर्वतीयमण्डलम्।

२. मिकिरपर्वतीयमण्डलम्।

**द्वितीयः भागः**

[2]१. खासीपर्वतीयमण्डलम्।

२. जयन्तियापर्वतीयमण्डलम्।]

३. गारोपर्वतीयमण्डलम्।

**तृतीयः भागः**

[3][ * * * * ]

---

१. पूर्वोत्तरक्षेत्राणां (पुनर्घटनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८१-तमः) इत्यस्य ७१ (झ) अनुभागेन अष्टमानुसूच्या च २० प्रच्छेदात्, २०अ प्रच्छेदात् च प्रति यथाक्रमं एतौ प्रच्छेदौ संनिवेशितौ (२१-१-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

२. २३-६-१९७३ दिनाङ्कितस्य मेघालय-राजपत्रस्य ५-अ-भागे २००-तम पृष्ठे प्रकटितया, मेघालयशासनस्य डीसीए ३१७२११ क्रमाङ्कितया १४-६-१९७६ दिनाङ्कितया अधिसूचनया "तस्य मण्डलस्याभ्यन्तरे" इत्येतस्मात् शब्द समूहात् प्रति एषः शब्दसमूहः संनिवेशितः।

३. सङ्घराज्यक्षेत्र शासनं (संशोधनं) अधिनियमः, १९७१ (१९७१ वर्षस्य ८३-तमः) इत्यस्य १३-अनुभागेन "मिजो-मण्डलं" इत्येतत् लोपितम् (२९-४-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

**षष्ठी अनुसूची**

[1][१. चकमामण्डलम्

२. लखेरमण्डलम्

३. पावीमण्डलम्]

[2][**२०अ. मिजोमण्डलपरिषदः विघटनम्**—(१) एतदनुसूच्यां किमपि सत्यपि विहितदिनाङ्कात् अव्यवहितपूर्वं विद्यमाना मिजोमण्डलपरिषद्(या इतः परं "मिजोमण्डलपरिषद्" इति निर्दिष्टा अस्ति)विघटिता तिष्ठेत्, सत्तया विरता च भवेत् ।

(२) मिजोरम-सङ्घराज्यक्षेत्रस्य प्रशासकः एकेन अधिकैः वा आदेशैः निम्नलिखितानां सर्वेषां, केषांचित् वा विषयाणां कृते उपबन्धान् कर्तुं क्षमते, तद् यथा—

(क) मिजोमण्डलपरिषदः सर्वस्वानां अधिकाराणां दायित्वानां च (येषु तया कृतायाः संविदः अधीनाः अधिकाराः दायित्वानि च अन्तर्भवन्ति) पूर्णतः, भागतः वा सङ्घाय अन्यस्मै प्राधिकारिणे वा अन्तरणम्;

(ख) यस्यां मिजोमण्डलपरिषत् पक्षकारः अस्ति तस्यां कस्यामपि वैधिकप्रक्रियायां पक्षकाररूपेण सङ्घस्य, अन्यस्य कस्यापि वा प्राधिकारिणः मण्डलपरिषदः प्रति संनिवेश; अथवा सङ्घस्य अन्यस्य कस्यापि प्राधिकारिणः पक्षकाररूपेण संवर्धनम्;

(ग) मिजोमण्डलपरिषदः केषामपि कर्मचारिणां सङ्घाय अन्यस्मै प्राधिकारिणे वा अन्तरणं, सङ्घेन अन्येन प्राधिकारिणा वा तेषां पुनर्नियोजनं एतादृशस्य अन्तरणस्य पुनर्नियोजनस्य वा पश्चात् तेषां विषये अनुप्रयोज्यानि सेवा निबन्धनानि प्रतिबन्धनानि च;

(घ) मिजोमण्डलपरिषदा निर्मितानां, तस्याः विघटनात् अव्यवहितपूर्वं च प्रवृत्तानां केषांचित् विधीनां तावत् अनुवर्तनं, एतादृशानां निरसनरूपाणां वा संशोधनरूपाणां वा अनुकूलनानां अन्तरणानां च अधीनं, यानि प्रशासकः एतत् सम्बन्धे विदध्यात्, यावत् एतादृशाः विधयः क्षमेण विधानमण्डलेन अन्येन क्षमेण प्राधिकारिणा वा परिवर्तिताः, निरसिताः, संशोधिताः वा न भवेयुः ;

(ङ) एतादृशाः आनुषङ्गिकाः, पारिणामिकाः, अनुपूरकाश्च विषयाः यान् प्रशासकः आवश्यकान् मन्येत ।

**स्पष्टीकरणम्**—एतत्प्रच्छेदे तथा एतदनुसूच्याः २०अ प्रच्छेदे "विहितदिनाङ्कः" इति पदेन सः दिनाङ्कः अभिप्रेयते यस्मिन् सङ्घराज्यक्षेत्रशासनं अधिनियमः, १९६३ इत्यस्य उपबन्धानां अधीनं तदनुसारं च मिजोरमराज्यक्षेत्रस्य विधानसभा सम्यक्तया घटिता भवति ।

---

१. १९७२ वर्षीयस्य ५-५-१९७२ दिनाङ्कितस्य मिजोरमराजपत्रस्य प्रथमखण्डस्य द्वितीय भागे १७-तमे पृष्ठे प्रकटितेन, १९७२-तम वर्षीयेन मिजोरम परिषदां सम्बन्धे (प्रकीर्णोपबन्धानां कृते) आदेशेन एताः प्रविष्ट्यः अन्तर्वेशिताः ।

२. सङ्घराज्यक्षेत्र शासनं(संशोधनं) अधिनियमः, १९७१(१९७१ वर्षस्य ८३-तमः)इत्यस्य १३-अनुभागेन २०-अ प्रच्छेदात् प्रति एते प्रच्छेदाः संनिवेशिताः (२९-४-१९७२ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

## षष्ठी अनुसूची

**२०आ. मिजोरमसङ्घराज्यक्षेत्रस्य स्वशासिप्रदेशानां स्वशासिमण्डलरूपेण स्थितिः, तत्पारिणामिकाः सङ्क्रमणकालिकाः उपबन्धाश्च**—(१) एतदनुसूच्यां किमपि सत्यपि—

(क) मिजोरमसङ्घराज्यक्षेत्रे विहितदिनाङ्कात् अव्यवहितपूर्वं विद्यमानः प्रत्येकं स्वशासिप्रदेशः एतस्मात् दिनाङ्कात् एव एतत्सङ्घराज्यक्षेत्रस्य स्वशासिमण्डलं (इतः परं "तत्स्थानिनूतनमण्डलं" इति निर्दिष्टं) भवेत्; तथा तस्य प्रशासकः एकेन अधिकैः वा आदेशैः निदेशं प्रदातुं क्षमते यत् एतत्खण्डस्य उपबन्धान् प्रभावीकर्तुं एतदनुसूच्याः २० प्रच्छेदे (यस्मित् एतत् प्रच्छेदस्य संलग्नसारिण्याः तृतीयः भागः अन्तर्भवति) एतादृशानि पारिणामिकानि संशोधनानि क्रियेरन् यानि आवश्यकानि भवेयुः, ततः परं च उक्तप्रच्छेदः उक्ततृतीयभागश्च तदनुसारं संशोधितौ इति मन्येत ।

(ख) विहितदिनाङ्कात् अव्यवहितपूर्वं विद्यमाना मिजोरमसङ्घराज्यक्षेत्रस्य स्वशासिप्रदेशस्य प्रत्येकप्रादेशिकपरिषत् (इतः परं "विद्यमानप्रादेशिकपरिषत्" इति निर्दिष्टा) तस्मिन् दिनाङ्के ततः परं च, तथा यावत् तत्स्थानिनूतनमण्डलस्य कृते मण्डलपरिषत् सम्यक्तया घटिता न भवेत् तावत् तन्मण्डलस्य मण्डलपरिषत् (इतः परं "तत्स्थानिनूतनमण्डलपरिषत्" इति निर्दिष्टा) इति मन्येत ।

(२) विद्यमानप्रादेशिकपरिषदः निर्वाचितः वा नामनिर्दिष्टः वा प्रत्येकं सदस्यः तत्स्थानिनूतनमण्डलपरिषदि यथायथं निर्वाचितः नामनिर्दिष्टः वा अस्ति इति मन्येत तथा च सः तावत् पदधारणं कुर्यात् यावत् एतत् प्रच्छेदस्य अधीनं तत्स्थानिनूतनमण्डलस्य कृते मण्डलपरिषत् सम्यक्तया घटिता न भवति ।

(३) यावद् एतदनुसूच्याः २ प्रच्छेदस्य (७) उपप्रच्छेदस्य, ४ प्रच्छेदस्य (४) उपप्रच्छेदस्य च अधीनं तत्स्थानिनूतनमण्डलपरिषदा नियमाः न निर्मिताः भवेयुः तावत् एतेषां उपबन्धानां अधीनं विद्यमानप्रादेशिकपरिषदा निर्मिताः विहितदिनाङ्कात् अव्यवहितपूर्वं च प्रवर्तमानाः नियमाः तत्स्थानिनूतनमण्डलपरिषदः सम्बन्धे प्रभाविनः भवेयुः, तादृशानां अनुकूलनानां संशोधनानां च अधीनं, यादृशानि तेषु मिजोरमसङ्घराज्यक्षेत्रस्य प्रशासकेन कृतानि भवेयुः ।

(४) मिजोरमसङ्घराज्यक्षेत्रस्य प्रशासकः एकेन अधिकैः वा आदेशैः निम्नलिखितानां सर्वेषां केषांचिद् वा विषयाणां कृते उपबन्धयितुं क्षमते; तद् यथा—

(क) विद्यमानप्रादेशिकपरिषदः सर्वस्वानां अधिकाराणां दायित्वानां च (येषु तया कृतायाः संविदः अधीनाः अधिकाराः दायित्वानि च अन्तर्भवन्ति) पूर्णतः भागतः वा तत्स्थानिनूतनमण्डलपरिषदे अन्तरणम्;

(ख) यस्यां विद्यमानप्रादेशिकपरिषत् पक्षकारः अस्ति तस्यां वैधिकप्रक्रियायां पक्षकाररूपेण विद्यमानप्रादेशिकपरिषदः प्रति तत्स्थानिनूतनमण्डलपरिषदः संनिवेशः ;

(ग) विद्यमानप्रादेशिकपरिषदः केषामपि कर्मचारिणां तत्स्थानिनूतनमण्डलपरिषदे अन्तरणं, तत्स्थानिनूतनमण्डलपरिषदा वा तेषां पुनर्नियोजनं, एतादृशस्य अन्तरणस्य पुनर्नियोजनस्य वा पश्चात् तेषां विषये अनुप्रयोज्यानि सेवायाः निबन्धनानि प्रतिबन्धनानि च;

(घ) विद्यमानप्रादेशिकपरिषदा निर्मितानां, तथा विहितदिनाङ्कात् अव्यवहितपूर्वं प्रवृत्तानां विधीनां तावत् अनुवर्तनं, एतादृशानां निरसनरूपाणां संशोधनरूपाणां वा अनुकूलनानां उपान्तरणानां च अधीनं

**षष्ठी अनुसूची**

यादृशानि, एतत्सम्बन्धे प्रशासकः विदध्यात् यावत् एतादृशाः विधयः क्षमेण विधानमण्डलेन अन्येन क्षमेण प्राधिकारिणा वा परिवर्तिताः, निरस्ताः संशोधिताः वा न भवेयुः ;

(ङ) एतादृशाः आनुषङ्गिकाः, पारिणामिकाः, अनुपूरकाश्च विषयाः यान् प्रशासकः आवश्यकान् मन्यते ।

२०इ. **निर्वचनम्**—एतत्सम्बन्धे निर्मितानां उपबन्धानां अधीनं एतदनुसूच्याः उपबन्धाः मिजोरम-सङ्घराज्यक्षेत्रे प्रवर्तनस्य विषये तथा इव प्रभवेयुः—

(१) यथा राज्यस्य राज्यपालं प्रति, शासनं प्रति च निर्देशाः २३९-तमानुच्छेदस्य अधीनं नियुक्तं सङ्घराज्यक्षेत्रस्य प्रशासकं प्रति निर्देशाः स्युः, तथा च राज्यं प्रति ("राज्यस्य शासनं" इत्येतस्मात् शब्दसमूहादृते) निर्देशाः मिजोरमसङ्घराज्यक्षेत्रं प्रति निर्देशाः स्युः, तथा राज्यस्य विधानमण्डलं प्रति निर्देशाः मिजोरम-सङ्घराज्यक्षेत्रस्य विधानसभां प्रति निर्देशाः स्युः ;

(२) यथा वा—

(क) ४ प्रच्छेदस्य (५) उपप्रच्छेदे सम्बद्धराज्यशासनेन सह परामर्शस्य उपबन्धः लोपितः स्यात् ;

(ख) ६ प्रच्छेदस्य (२) उपप्रच्छेदे "यस्मिन् राज्यस्य कार्यपालिका शक्तिः विस्तृता भवति" इत्येतेभ्यः शब्देभ्यः प्रति "यस्मिन् मिजोरमसङ्घराज्यक्षेत्रस्य विधानसभा विधीनां निर्माणे शक्तिं भजते" इत्येते शब्दाः संनिवेशिताः स्युः ;

(ग) १३ प्रच्छेदे "२०२-तमानुच्छेदस्य अधीनं" इत्येते अङ्काः शब्दौ च लोपिताः स्युः ।]

२१. **अनुसूच्याः संशोधनम्**—(१) संसत् काले काले विधिना परिवर्धनरूपेण, परिवर्तनरूपेण निरसनरूपेण वा एतदनुसूच्याः उपबन्धेषु कतमस्यापि संशोधनं कर्तुं क्षमते, यदा च अनुसूची एवं संशोधिता भवेत् तदा एतत्संविधाने एतदनुसूचीं प्रति कोपि निर्देशः एवं संशोधितानुसूचीं प्रति निर्देशः अस्ति इति अर्थः ग्राह्यः ।

(२) कोपि एतादृशः विधिः, यः एतत्प्रच्छेदस्य (१) उपप्रच्छेदे उल्लिखितः विद्यते, एतत्संविधानस्य ३६८-तमानुच्छेदस्य प्रयोजनार्थं एतत्संविधानस्य संशोधनं न मन्येत ।

## सप्तमी अनुसूची

(अनुच्छेदः २४६)

## सूची १—सङ्घसूची

१. भारतस्य तस्य प्रत्येकभागस्य च रक्षा, यस्यां अन्तर्भवन्ति रक्षार्थं परिकल्पनं, सर्वाणि च तादृशानि कार्याणि यादृशानि युद्धकाले युद्धस्य सञ्चालनार्थं तत्समाप्तेः परं च सफलतापूर्वकं सैन्यवियोजने सहायकानि भवेयुः ।

२. नौसेना, स्थलसेना, वायुसेना च; सङ्घस्य किमप्यन्यत् सशस्त्रबलम् ।

[1][२अ. सङ्घस्य कस्यचित् अपि सशस्त्रबलस्य सङ्घाधीनस्य अन्यस्य कस्यचिद् वाबलस्य, तस्य भागस्य, एकांशस्य वा कस्मिन् अपि राज्ये असैनिकशक्तेः सहायतार्थं अभिनियोजनम्; एतादृशाभिनियोजने एतादृशबलानां सदस्यानां शक्तयः, अधिकारिताः, विशेषाधिकाराः, दायित्वानि च]

३. कटकक्षेत्राणां परिसीमनम्, एतादृशक्षेत्रेषु स्थानीयं स्वाशासनम्, एतादृशक्षेत्राणां अभ्यन्तरे कटकप्राधिकरणानां घटनं, शक्तयश्च, एतादृशक्षेत्रेषु गृहवास-सुविधायाः विनियमनं, (यस्मिन् भाटकस्य नियन्त्रणं अन्तर्भवति) ।

४. नौसेनानां, स्थलसेनानां, वायुसेनानां च सङ्कर्माणि ।

५. आयुधानि, अग्न्यायुधानि, अग्निचूर्णानि विस्फोटकानि च ।

६. परमाणूर्जा, तस्याः उत्पादनार्थं आवश्यका खनिजसम्पत् च ।

७. संसदा प्रणीतेन विधिना रक्षाप्रयोजनार्थं युद्धस्य सञ्चालनार्थं वा आवश्यकाः इतिः घोषिताः उद्योगाः ।

८. आसूचनायाः अन्वेषणस्य च केन्द्रीयविभागौः ।

९. भारतस्य रक्षया, वैदेशिककार्यैः सुरक्षया वा सम्बद्धैः कारणैः निवारकनिरोधः, एवं निरुद्धाः जनाश्च ।

१०. वैदेशिककार्याणि, सर्वे विषयाः यैः सङ्घस्य केनापि विदेशेन सम्बन्धः जायते ।

११. राजनयिकं, वाणिज्यदूतिकं, व्यापारेण सम्बद्धं च प्रतिनिधित्वम् ।

१२. संयुक्तराष्ट्रसङ्घः ।

१३. आन्ताराष्ट्रियेषु सम्मेलनेषु, सङ्गमेषु, अन्येषु निकायेषु च भागग्रहणम्, तत्र कृतानां विनिश्चयानां च कार्यान्वियनम् ।

१४. विदेशैः सह सन्धीनां, समयानां च करणम्; तथा च विदेशैः सह कृतानां सन्धीनां, समयानां अभिसमयानां च कार्यान्वियनम् ।

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५७-अनुभागेन अन्तर्वेशिता (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**सप्तमी अनुसूची**

१५. युद्धं, शान्तिश्च ।

१६. वैदेशिकाधिकारिता ।

१७. नागरिकता, देशीयकरणम्, अन्यदेशीयाश्च ।

१८. प्रत्यर्पणम् ।

१९. भारते प्रवेशः, ततः उत्प्रवासनं निष्कासनं च; पारपत्राणि, दृष्टाङ्काश्च ।

२०. भारतात् बाह्यस्थानेषु तीर्थयात्राः ।

२१. जलदस्युता, महासमुद्रेषु आकाशे वा कृताः अपराधाश्चः; स्थले महासमुद्रेषु आकाशे वा राष्ट्राणां विधेः विरुद्धं कृताः अपराधाः ।

२२. लोहमार्गाः ।

२३. राजमार्गाः ये संसदा प्रणीतेन विधिना तदधीनं वा राष्ट्रियराजमार्गाः इति घोषिताः स्युः ।

२४. यन्त्रनोदितानां जलयानानां विषये संसदा विधिना राष्ट्रियजलमार्गाःइति घोषितेषु देशाभ्यन्तरीयजल-मार्गेषु पोतपरिवहणं, नौपरिवहणं च; एतादृशजलमार्गेषु मार्गनियमः ।

२५. समुद्रीयं पोतपरिवहणं, नौपरिवहणं च यदन्तर्भवति वेलाजलेषु पोतपरिवहणं, नौपरिवहणं च; वणिक्पोतीयशिक्षायाः, प्रशिक्षणस्य च कृते व्यवस्था; तथा च राज्यैः अन्यैः अभिकरणैश्च दीयमानयोः एतादृशयोः शिक्षाप्रशिक्षणयोः विनियमनम् ।

२६. प्रकाशस्तम्भाः येषु पोतवहनस्य विमानानां च सुरक्षायै प्रकाशपोताः आकाशदीपाः अन्याः व्यवस्थाश्च अन्तर्भवन्ति ।

२७. संसदा प्रणीतेन विधिना, विद्यमानविधिना वा तदधीनं वा महापत्तनानि इति घोषितानि बेलापत्तनानि; येषु अन्तर्भवन्ति तेषां परिसीमनं, तेषां प्राधिकरणानां घटनं, शक्तयश्च ।

२८. वेलापत्तननिरोधनानि, येषु अन्तर्भवन्ति तैः सम्बद्धाः चिकित्सालयाः, नाविकाः समुद्रियाश्च चिकित्सालयाः ।

२९. वायुमार्गाः वायुयानानि, विमानपरिवहणं च, विमानक्षेत्राणां व्यवस्था, विमानयातायातस्य विमानक्षेत्राणां च विनियमनं सङ्घटनं च, वैमानिक शिक्षायाः प्रशिक्षणस्य च व्यवस्था, तथा राज्यैः अन्यैः अभिकरणैश्च दीयमानयोः एतादृशयोः शिक्षाप्रशिक्षणयोः विनियमनम् ।

३०. लोहमार्गेण, समुद्रेण, वायुना वा यन्त्रनोदितयानेषु राष्ट्रियजलमार्गैः वा यात्रिणां, भाण्डानां च वहनम् ।

३१. प्रेषणी (डाक विभागः), तन्त्रिसन्देशि (तार विभागः) च; दूरभाषि, वितन्त्रि, प्रसारणम्, तथा च एवं विधानि अन्यानि सञ्चारस्य साधनानि ।

सप्तमी अनुसूची

३२. सङ्घस्य सम्पत्तिः, तदुद्भवत् राजस्वं च, किन्तु [1][ * * * ] कस्मिन् अपि राज्ये स्थितायाः सम्पत्तेः विषये यावत् संस . अन्यथा उपबन्धं न करोति तावत् तद्राज्येन कृतस्य विधिनिर्माणस्य अधीनम् ।

३३. [2][ * * * * ]

३४. देशीयराज्यशासकसम्बन्धिनीनां सम्पदानां कृते प्रतिपालकाधिकरणानि ।

३५. सङ्घस्य लोकऋणम् ।

३६. चलार्थः, टङ्कनिर्माणं, विधिकनिविदा, वैदेशिकमुद्राविनिमयश्च ।

३७. वैदेशिकऋणानि ।

३८. भारतस्य आरक्षितनिधानम् (रिजर्व बैंक) ।

३९. प्रेषणीगृहरक्षितनिधानम् ।

४०. भारतशासनेन कस्यापि राज्यस्य शासनेन सञ्चालिताः देवन्यः (लॉटरीज़) ।

४१. विदेशैः सह व्यापारः वाणिज्यं च; सीमाशुल्कसीमान्तानां बहिर्भागीयः आयातः निर्यातश्च; सीमाशुल्क-सीमान्तानां परिणिश्चयः ।

४२. आन्ताराज्यिकः व्यापारः; आन्तराज्यिकं वाणिज्यं च ।

४३. व्यापारसम्बन्धिनां निगमानां, येषु सहकारिसंस्थाः वर्जयित्वा, महाजनकर्मनिगमाः, अनागतरक्षा निगमाः वित्तीयनिगमाश्च अन्तर्भवन्ति निगमनं, विनियमनं, परिसमापनं च ।

४४. एकस्मिन् राज्ये असीमितोद्देश्यानां, व्यापारेण च सम्बद्धानां असम्बद्धानां वा, विश्वविद्यालयेभ्यः इतरेषां, निगमानां निगमनं विनियमनं, परिसमापनं च ।

४५. महाजनकर्म ।

४६. विनिमयपत्राणि, धनादेशपत्राणि, वचनपत्राणि, अन्यानि च एवं विधानि लिखितानि ।

४७. अनागतरक्षा (बीमा)।

४८. श्रेष्ठिचत्वराणि, भविष्यापणाश्च ।

४९. एकस्वानि, आविष्काराः, अभिकल्पनानि च, अनुकृतिस्वाम्यं, व्यापारचिह्नानि, पण्यचिह्नानि च ।

५०. परिमाणानां, प्रमाणानां च मानस्य स्थापनम् ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च "प्रथमानुसूच्याः (क) भागे (ख) भागे वा उल्लिखिते" इत्येतत् लोपितम् ।

२. उपर्युक्ताधिनियमस्य २६-अनुभागेन ३३-तमाप्रविष्टिः लोपिता ।

## सप्तमी अनुसूची

५१. भारताद् बहिः निर्यातव्यानां, एकस्मात् राज्यात् राज्यान्तरं परिवोढव्यानां वा भाण्डानां गुणवत्तायाः मानस्थापनम् ।

५२. ते उद्योगाः येषां सङ्घेन नियन्त्रणं लोकहिताय समीचीनं इति संसदा विधिना घोषितं भवेत् ।

५३. तैलक्षेत्राणां, खनिजतैलसम्पदश्च विनियमनं विकासश्च; प्रस्तरतैलं प्रस्तरतैलोत्पादाश्च; संसदा विधिना भयानकरूपेण ज्वलनशीलाः इति घोषिताः अन्याः द्रवाः, अन्यानि द्रव्याणि च ।

५४. तावन्मात्रं खनीनां विनियमनं, खनिजानां च विकासः यावन्मात्रं तादृशं विनियमनं विकासश्च सङ्घस्य नियन्त्रणे लोकहिताय समीचीने स्तः इति संसदा विधिना घोषितं भवेत् ।

५५. खनिषु, तैलक्षेत्रेषु च श्रमस्य सुरक्षिततायाश्च विनियमनम् ।

५६. तावन्मात्रं आन्ताराज्यिकीनां नदीनां नदीद्रोणीनां च विनियमनं, विकासश्च यावन्मात्रं तादृशं विनियमनं, विकासश्च सङ्घस्य नियन्त्रणे लोकहिताय समीचीने स्तः इति संसदा विधिना घोषितं भवेत् ।

५७. राज्यक्षेत्रीयसागरखण्डात् परं मत्स्यग्रहणं, मीनक्षेत्राणि च ।

५८. सङ्घस्य अभिकरणैः लवणस्य विनिर्माणं, प्रदायः, वितरणं च; अन्यैः अभिकरणैः लवणस्य विनिर्माणस्य, प्रदायस्य, वितरणस्य च विनियमनं, नियन्त्रणं च।

५९. अहिफेनस्य कृषिः, निर्माणं, निर्यातार्थं विक्रयश्च ।

६०. चलचित्राणां प्रदर्शनार्थं अनुमतिः ।

६१. सङ्घस्य कर्मचारिभिः सम्बद्धाः औद्योगिकविवादाः ।

६२. एतत्संविधानस्य प्रारम्भे राष्ट्रियपुस्तकालयः, भारतीय सङ्ग्रहालयः साम्राज्यिक-युद्धसङ्ग्रहालयः, विक्टोरियास्मारकं, भारतीय युद्ध स्मारकं च इत्येवं ज्ञाताः संस्थाः, भारतशासनेन पूर्णतः अंशतः वा वित्तपोषिताः, संसदा च विधिना राष्ट्रियमहत्वमयी इत्येवं घोषिता, अन्या च एवं विधा कापि संस्था ।

६३. एतत्-संविधानस्य प्रारम्भे काशीहिन्दूविश्वविद्यालयः अलीगढ़मुस्लिमविश्वविद्यालयः [1][दिल्लीविश्व-विद्यालयश्च इत्येवं ज्ञाताः संस्थाः ३७१ इ-अनुच्छेदस्य अनुसारं स्थापिताः विश्वविद्यालयाः]; संसदा च विधिना राष्ट्रियमहत्वमयी इत्येवं घोषिता कापि अन्या संस्था ।

६४. भारतशासनेन पूर्णतः अंशतः वा वित्तपोषिताः संसदा च विधिना राष्ट्रियमहत्वमय्यः इति एवं घोषिताः वैज्ञानिक्यः, शिल्पसम्बन्धिन्यः वा शिक्षासंस्थाः ।

६५. सङ्घस्य अभिकरणानि संस्थाश्च यानि—

---

१. संविधानस्य (द्वात्रिंशत्तमं संशोधनं) अधिनियमः, १९७३ इत्यस्य ४-अनुभागेन "दिल्लीविश्वविद्यालयश्च" इत्येतस्मात् प्रति एतत् संनिवेशितम् (१-७-१९७४ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

## सप्तमी अनुसूची

(क) वृत्तिविषयकस्य, व्यवसायविषयकस्य, शिल्पविषयकस्य च प्रशिक्षणस्य कृते (यस्मिन् आरक्षि-अधिकारिणां प्रशिक्षणं अन्तर्भवति), विद्यन्ते; अथवा

(ख) विशेषस्य अध्ययनस्य गवेषणायाः वा अभिवृद्धये विद्यन्ते; अथवा

(ग) अपराधस्य अन्वेषणे, अवगमने वा वैज्ञानिक्याः शिल्पसम्बन्धिन्याः वा सहायतायाः कृते विद्यन्ते ।

६६. उच्चतरशिक्षासंस्थासु शोधसंस्थासु, वैज्ञानिकीषु, शिल्पसम्बन्धिनीषु च संस्थासु मानानां समन्वयः अवधारणं च ।

६७. [1][संसदा प्रणीतेन विधिना तदधीनं वा] राष्ट्रियमहत्वमयानि इति घोषितानि प्राचीनानि, ऐतिहासिकानि च स्मारकाणि, अभिलेखाश्च, पुरातत्वसम्बन्धीनि च स्थानानि अवशेषाश्च ।

६८. भारतीयसर्वेक्षणं, भौमिकीयं, वानस्पतिकीयं, प्राणिकीयं च सर्वेक्षणं; ऋतुप्रभावशास्त्रीयाः संस्थाश्च ।

६९. जनगणना ।

७०. सङ्घलोकसेवाः, अखिलभारतीयसेवाः, सङ्घलोकसेवायोगः ।

७१. सङ्घनिवृत्तिवेतनानि, अर्थात् भारतशासनेन, भारतस्य सञ्चितनिधितः वा सन्दातव्यानि निवृत्तिवेतनानि ।

७२. संसदः, राज्यानां विधानमण्डलानां च कृते तथा राष्ट्रपतेः उपराष्ट्रपतेश्च पदस्य कृते निर्वाचनानि; निर्वाचनायोगः ।

७३. संसदः सदस्यानां, राज्यपरिषदः, सभापतेः, उपसभापतेश्च, लोकसभायाः अध्यक्षस्य, उपाध्यक्षस्य च वेतनानि, भक्तानि च ।

७४. संसदः प्रत्येकसदनस्य, प्रत्येकसदनस्य च सदस्यानां, समितीनां च शक्तयः, विशेषाधिकाराः; उन्मुक्तयश्च; संसदः समितीनां, संसदा नियुक्तानां च आयोगानां पुरतः साक्ष्यदानार्थं, लेख्यानां उपस्थापनार्थं वा जनानां उपस्थित्यै विवशीकरणम् ।

७५. राष्ट्रपतेः, राज्यपालानां च उपलब्धयः, भक्तानि, विशेषाधिकाराः, अनुपस्थित्यनुमतिविषये अधिकाराश्च; सङ्घमन्त्रिणां वेतनानि भक्तानि च; नियन्त्रकमहालेखापरीक्षकस्य वेतनानि, भक्तानि, अनुपस्थित्यनुमतिविषये च अधिकाराः, अन्ये सेवाप्रतिबन्धाश्च ।

७६. सङ्घस्य राज्यानां च लेखानां परीक्षा ।

७७. उच्चतमन्यायालयस्य घटनं, सङ्घटनं, अधिकारिता, शक्तयश्च यासु तस्य न्यायालयस्य अवमानविषये अधिकारिता, शक्तयश्च अन्तर्भवन्ति; तत्र गृह्यमाणाः प्रशुल्काश्च; उच्चतमन्यायालयस्य समक्षं विधिव्यवसाये स्वत्ववन्तः जनाः ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य२७-अनुभागेन "संसदा विधिना" इत्येतस्मात् प्रति एते शब्दा संनिवेशिताः ।

## सप्तमी अनुसूची

७८. उच्चन्यायालयानां, अधिकारिणां, सेवकानां, च विषये उपबन्धान् वर्जयित्वा उच्चन्यायालयानां घटनं, सङ्घटनं [१] [ (यस्मिन् दीर्घावकाशाः अन्तर्भवन्ति) ]; उच्चन्यायालयानां समक्षं विधिव्यवसाये स्वत्ववन्तः जनाः ।

[२] [७९. कस्मिन् अपि सङ्घराज्यक्षेत्रे उच्चन्यायालयस्य अधिकारितायाः विस्तारः, एतादृशस्य उच्चन्यायालयस्य अधिकारितायाः तस्मात् अपवर्जनं च। ]

८०. कस्यचिद् अपि राज्यस्य आरक्षिबलस्य सदस्यानां शक्तीनां, अधिकारितायाश्च तद्राज्याद् बहिः कस्मिन् अपि क्षेत्रे विस्तारः, किन्तु न एवं प्रकारेण यत् एकराज्यस्य आरक्षी तद्राज्याद् बहिः कस्मिन् अपि क्षेत्रे तत् क्षेत्रवतः राज्यस्य शासनस्य सहमतिं विना शक्तीनां अधिकारितायाश्च प्रयोगं कर्तुं शक्नुयात्; कस्यचिद् अपि राज्यस्य आरक्षिबलस्य सदस्यानां, शक्तीनां, अधिकारितायाश्च तद्राज्याद् बहिः लोहमार्गक्षेत्रेषु विस्तारः ।

८१. आन्ताराज्यिकं प्रव्रजनम्; आन्ताराज्यिकं निरोधनम् ।

८२. कृष्यायात् इतरस्मिन् आये कराः ।

८३. सीमाशुल्काः, येषु निर्यातशुल्काः अन्तर्भवन्ति ।

८४. भारते निर्मितेषु उत्पादितेषु वा तमाखुपत्रेषु अन्येषु भाण्डेषुच उत्पादनशुल्काः यस्मिन् नान्तर्भवन्ति—

(क) मानवीयोपभोगार्थं माद्यसारिकपानानि,

(ख) अहिफेनं, भङ्गा अन्याश्च मादकऔषधयः स्वापकपदार्थाश्च;

किन्तु अन्तर्भवन्ति तादृश्यः औषधीयाः प्रसाधनीयाः सामग्र्यश्च येषु माद्यसारिकपानानि एतस्याः प्रविष्ट्याः (ख) उपप्रच्छेदे उल्लिखिताः पदार्थाश्च अन्तर्भवन्ति ।

८५. निगमकरः ।

८६. व्यक्तीनां समवायानां च, कृषिभूमिवर्जं, सर्वस्वस्य मूलधनमूल्ये कराः ; समवायानां मूलधने कराः ।

८७. कृषिभूमिवर्जं अन्यसम्पत्तिविषये सम्पत् शुल्काः ।

८८. कृषिभूमिवर्जं अन्यसम्पत्तेः उत्तराधिकारविषये शुल्काः ।

८९. लोहमार्गेण, समुद्रेण, वायुमार्गेण वा ऊढेषु भाण्डेषु, यात्रिषु वा सीमाकराः; लोहमार्गस्य यात्रिभाटकेषु भाण्डभाटकेषु च कराः ।

९०. श्रेष्ठिचत्वरस्य, भविष्यापणस्य च पण्यव्यवहारेषु, मुद्राङ्कशुल्कान् विहाय, इतरे कराः।

९१. विनिमयपत्राणां, धनादेशपत्राणां, वचनपत्राणां, वहनपत्राणां, प्रत्ययपत्राणां, अनागतरक्षापत्राणां, अंशानां हस्तान्तरणस्य, ऋणपत्राणां, प्रतिनिधित्वपत्रिकाणां, प्राप्तीनां च सम्बन्धे मुद्राङ्कशुल्कस्य मानानि ।

---

१. संविधानस्य (पञ्चदशं संशोधनं) अधिनियमः, १९६३ इत्यस्य १२-अनुभागेन एते शब्दाः अन्तर्वेशिताः (भूतलक्षिप्रभावेण) ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च ७९-तमप्रविष्टिं प्रति एषा संनिवेशिता ।

## सप्तमी अनुसूची

९२. समाचारपत्राणां क्रयविक्रययोः तेषु प्रकाशितविज्ञापनेषु च कराः ।

[1][९२अ. समाचारपत्रेभ्यः इतरेषां भाण्डानां क्रये विक्रये वा कराः यत्र एतादृशः क्रयः विक्रयः वा आन्ताराज्यिकस्य व्यापारस्य वाणिज्यस्य अभ्यन्तरे भवति ।]

[2][९२आ. भाण्डानां परेषणे कराः (परेषणं भवेत् भाण्डपरेषकाय अन्यस्मै जनाय वा) यत्र एतादृशं परेषणं आन्ताराज्यिकस्य व्यापारस्य वाणिज्यस्य वा अभ्यन्तरे भवति ।]

९३. एतत्सूच्याः विषयेषु केनापि सम्बद्धानां विधीनां विरुद्धं अपराधाः ।

९४. एतत्सूच्याः विषयेषु कस्यापि प्रयोजनार्थं परिप्रश्नाः, सर्वेक्षणानि, सङ्ख्यानानि च ।

९५. उच्चतमन्यायालयं अन्तरेण, सर्वेषां न्यायालयानां एतत्सूच्याः विषयेषु कस्यापि सम्बन्धे अधिकारिता, शक्तयश्च; नावधिकरणविषये अधिकारिता ।

९६. कस्मिन् अपि न्यायालये गृह्यमाणप्रशुल्कान् विहाय, एतत् सूच्याः विषयेषु कस्यापि सम्बन्धे प्रशुल्काः ।

९७. द्वितीयतृतीयसूच्योः कस्यामपि अप्रगणितेन केनापि करेण सह तयोः सूच्योः अप्रगणितः कोपि विषयः ।

## सूची २—राज्यसूची

१. लोकव्यवस्था, (किन्तु असैनिकशक्तेः सहायतार्थं [3][सङ्घस्य नौसेनायाः, स्थलसेनायाः, वायुसेनायाः वा कस्यापि अन्यस्य सशस्त्रबलस्य वा, सङ्घस्य नियन्त्रणाधीनस्य कस्यापि अन्यस्य बलस्य, तस्य भागस्य, एकांशस्य वा प्रयोगः अस्यां नान्तर्भवति]) ।

[4][२. प्रथमसूच्याः २ अ-प्रविष्ट्याः उपबन्धानां अधीनं आरक्षी, यस्मिन् लोहमार्गारक्षी, ग्रामारक्षी चापि अन्तर्भवतः ] ।

३. [5][ * * * ] उच्चन्यायालयस्य अधिकारिणः सेवकाश्च, भाटकन्यायालयानां राजस्वन्यायालयानां च प्रक्रिया, उच्चतमन्यायालयं विहाय सर्वेषु न्यायालयेषु गृह्यमाणाः प्रशुल्काः ।

४. कारागाराः, बालसुधारणालयाः, "बोर्स्टल"-संस्थाः, अन्याश्च एवं विधाः संस्थाः, तासु च निरुद्धाः जनाः ; कारागाराणां अन्यसंस्थानां च उपयोगार्थं अन्यराज्यैः सह प्रबन्धः ।

---

१. संविधानस्य (षष्ठं संशोधनं) अधिनियमः, १९५६ इत्यस्य २-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता ।

२. संविधानस्य (षट्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९८२ इत्यस्य ५-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता ।

३. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५७-अनुभागेन केभ्यश्चित् शब्देभ्यः प्रति एते शब्दाः संनिवेशिताः ।

४. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन द्वितीयप्रविष्ट्याः प्रति एषा संनिवेशिता (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन केचित् शब्दाः लोपिताः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

**सप्तमी अनुसूची**

५. स्थानीयशासनम्, अर्थात् नगरनिगमानां, सुधारणन्यासानां, मण्डलमण्डलीनां, खननवसतिप्राधिकरणानां स्थानीयस्वशासनस्य, ग्रामप्रशासनस्य वा प्रयोजनार्थं अन्येषां स्थानीयप्राधिकरणानां च घटनं शक्तयश्च ।

६. लोकस्वास्थ्यं, स्वच्छता च; चिकित्सालयाः, औषधालयाश्च ।

७. भारताद्बहिः स्थितानां स्थानानां तीर्थयात्राभ्यः इतरा तीर्थयात्राः ।

८. मादकपानानि, अर्थात् मादकपानानां उत्पादनं, विनिर्माणं, भुक्तिः, परिवहणं, क्रयः, विक्रयश्च ।

९. निःशक्तानां जनानां नियोजनाय अयोग्यानां जनानां च सहायता ।

१०. शवनिखननानि, निखननस्थानानि च; शवदाहाः, श्मशानानि च ।

[१][११. * * * * ]

१२. राज्येन नियन्त्रिताः वित्तपोषिताः वा पुस्तकालयाः, सङ्ग्रहालयाः अन्याश्च एवं विधाः संस्थाः, [२][संसदा प्रणीतेन विधिना तदधीनं वा] राष्ट्रियमहत्वमयानि इति घोषितेभ्यः इतराणि प्राचीनानि, ऐतिहासिकानि च स्मारकाणि, अभिलेखाश्च ।

१३. सञ्चारसाधनानि अर्थात् मार्गाः, सेतवः, नौकाघट्टाः, प्रथमसूच्यां अनुल्लिखितानि सञ्चारस्य अन्यानि साधनानि च; नगररथ्यालोहमार्गाः, रज्जुमार्गाः अन्तर्देशीयाः जलमार्गाः, तेषु प्रथमसूच्याः तृतीयसूच्याः च उपबन्धानां अधीनं यातायातं च, यन्त्रनोदितयानेभ्यः इतराणि यानानि ।

१४. कृषिः यस्यां अन्तर्भवन्ति कृषेः शिक्षा, अनुसन्धानं नाशकजन्तुभ्यः रक्षा, पादपरोगाणां निवारणं च ।

१५. पशुधनस्य परिरक्षणं, संरक्षणं, उन्नतिश्च; पशुरोगाणां निवारणं च; पशुचिकित्साविषयकं प्रशिक्षणं, व्यवसायश्च ।

१६. पश्ववरोधाः, पशूनां अतिचारस्य निवारणं च ।

१७. प्रथमसूच्याः ५६-तमप्रविष्टेः उपबन्धानां अधीनं, जलं, अर्थात् जलप्रदायाः, सेचनं, कुल्याश्च; जलनिसारणं, तटबन्धाश्च; जलसङ्ग्रहः, जलशक्तिश्च ।

१८. भूमिः, अर्थात् भूमौ, भूमेः उपरि वा अधिकारः; भूधृतयः यासु भू-स्वामिनः कृषकाणां च सम्बन्धः अन्त-

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५७-अनुभागेन ११-तमा प्रविष्टिः लोपिता (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २७-अनुभागेन "संसदः विधिना" इत्येतस्मात् प्रति एते शब्दाः संनिवेशिताः ।

**सप्तमी अनुसूची**

र्भवति; भाटकसङ्ग्रहणं च, कृषिभूमेः अन्तरणं अन्यसङ्क्रामणं च, भूमिविकासः, कृषिसम्बन्धिनः उद्धाराश्च, उपनिवेशनं च ।

[1][१६. * * * * ]

[1][२०. * * * * ]

२१. मीनक्षेत्राणि ।

२२. प्रथमसूच्याः ३४-तमप्रविष्ट्याः उपबन्धानां अधीनं प्रतिपालकाधिकरणानि, भारग्रस्ताः आसिद्धाश्च सम्पदः ।

२३. सङ्घस्य नियन्त्रणे विनियमनस्य विकासस्य च सम्बन्धे, प्रथमसूच्याः उपबन्धानां अधीनं, खनीनां विनियमनं, खनिजानां विकासश्च ।

२४. प्रथमसूच्याः [2][सप्तमप्रविष्ट्याः, ५२-तमप्रविष्ट्याश्च] उपबन्धानां अधीनं, उद्योगाः ।

२५. "गैसम्", गैस-कर्मशालाश्च ।

२६. तृतीयसूच्याः ३३-तमप्रविष्ट्याः उपबन्धानां अधीनं, राज्यस्य अभ्यन्तरे व्यापारः वाणिज्यं च ।

२७. तृतीयसूच्याः ३३-तमप्रविष्ट्याः उपबन्धानां अधीनं भाण्डानां उत्पादनं, प्रदायः, वितरणं च ।

२८. आपणाः, मेलाश्च ।

[1][२९. * * * * ]

३०. वृद्धिजीविका, वृद्धिजीविनश्च; कृषिऋणितायाः मुक्तिः ।

३१. पान्थशालाः, पान्थशालापालाश्च ।

३२. प्रथमसूच्यां विनिर्दिष्टनिगमेभ्यः भिन्नानां निगमानां विश्वविद्यालयानां च निगमनं, विनियमनं, परिसमापनं च; व्यापार सम्बन्धिनः साहित्यिकाः, वैज्ञानिकाः, धार्मिकाः, अन्याश्च अनिगमिताः समाजाः, सङ्गमाश्च; सहकारिसमाजाः ।

३३. नाट्यशालाः, नाट्यप्रदर्शनानि च; प्रथमानुसूच्याः ६०-तमप्रविष्ट्याः उपबन्धानां अधीनं, चलचित्राणि, क्रीडाः, मनोरञ्जनानि, विनोदाश्च ।

३४. पणनं, द्यूतं च ।

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं)अधिनियमः, १९७६ इत्यस्य ५७-अनुभागेन १९, २०, २९ प्रविष्ट्यः लोपिताः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २८-अनुभागेन "५२-तमप्रविष्टयाः" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

**सप्तमी अनुसूची**

३५. राज्ये निहितानि तेन धृतानि वा सङ्कर्माणि, भूमयः, गृहाणि च ।

[1][३६. * * * * ]

३७. संसदा प्रणीतस्य कस्यापि विधेः उपबन्धानां अधीनं राज्यविधानमण्डलार्थं निर्वाचनानि ।

३८. राज्यस्य विधानमण्डलस्य सदस्यानां, विधानसभायाः अध्यक्षस्य, उपाध्यक्षस्य च, विधानपरिषदः, यदि विद्यते चेत्, तर्हि सभापतेः, उपसभापतेश्च वेतनानि, भक्तानि च ।

३९. विधानसभायाः, तस्याः सदस्यानां समितीनां च, विधानपरिषदः, यदि विद्यते चेत्, तर्हि सदस्यानां समितीनां च शक्तयः, विशेषाधिकाराः, उन्मुक्तयश्च; राज्यविधानमण्डलस्य समितीनां समक्षं साक्ष्यदानार्थं, लेख्यानां उपस्थापनार्थं वा जनानां उपस्थित्यै विवशीकरणम् ।

४०. राज्यस्य मन्त्रिणां वेतनानि, भक्तानि च ।

४१. राज्यलोकसेवाः; राज्यलोकसेवायोगाश्च ।

४२. राज्यनिर्वृत्तिवेतनानि, अर्थात् राज्येन, राज्यसञ्चितनिधेः वा सन्देयानि निवृत्तिवेतनानि ।

४३. राज्यस्य लोकऋणम् ।

४४. निखातनिधिः ।

४५. भूराजस्वम्, यस्मिन् अन्तर्भवन्ति भूराजस्वस्य निर्धारणं, सङ्ग्रहणं च; भूम्यभिलेखानां धारणं, राजस्व-प्रयोजनार्थं स्वत्वाभिलेखार्थं च सर्वेक्षणं, राजस्वानां अन्यसङ्क्रामणं च ।

४६. कृष्यायेषु कराः ।

४७. कृषिभूमेः उत्तराधिकारविषये शुल्काः ।

४८. कृषिभूमेः विषये सम्पत्शुल्कः ।

४९. भूमिषु गृहेषु च कराः ।

५०. संसदा विधिना खनिजविकासस्य सम्बन्धे अधिरोपितानां निबन्धनानां अधीनं खनिजाधिकारेषु कराः ।

५१. राज्ये निर्मितेषु, उत्पादितेषु वा निम्नलिखितभाण्डेषु उत्पादनशुल्काः; भारते अन्यत्र निर्मितेषु उत्पादितेषु वा तत्समभाण्डेषु तेनैव मानेन तदूनेन मानेन वा प्रतिशुल्काः —

(क) मानवीयोपभोगार्थं मद्यसारिकपानानि;

(ख) अहिफेनं, भङ्गा, अन्याश्च मादक औषधयः, स्वापकपदार्थाश्च;

किन्तु अत्र तादृशयः औषधीयाः प्रसाधनीयाश्च सामग्र्यः नान्तर्भवन्ति यासु मद्यसारं, एतस्याः प्रविष्ट्या (ख) उपप्रच्छेदे अन्तर्गतः कोपि पदार्थः वा अन्तर्विष्टः विद्यते ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २६-अनुभागेन ३६ प्रविष्टिः लोपिता ।

सप्तमी अनुसूची

५२. कस्मिन् अपि स्थानीयक्षेत्रे उपभोगस्य, प्रयोगस्य, विक्रयस्य वा कृते भाण्डानां प्रवेशे कराः ।

५३. विद्युतः उपभोगे, विक्रये वा कराः ।

[1][५४. प्रथमसूच्याः ९२ अ प्रविष्ट्याः उपबन्धानां अधीनं समाचारपत्रेभ्यः इतरेषां वस्तूनां क्रये विक्रये वा कराः ।]

५५. समाचारपत्रेषु प्रकाशितविज्ञापनेभ्यः [2][आकाशवाण्या दूरदर्शनेन प्रसारितविज्ञापनेभ्यश्च] इतर-विज्ञापनेषु कराः ।

५६. मार्गैः, देशाभ्यन्तरैः जलमार्गैः वा ऊढेषु भाण्डेषु, यात्रिषु वा कराः ।

५७. यन्त्रनोदितेषु, अयन्त्रनोदितेषु वा, तृतीयसूच्याः ३५-तमप्रविष्ट्याः उपबन्धानां अधीनं मार्गेषु उपयोग-योग्येषु यानेषु कराः येषु (यानेषु) रथ्यालोहयानानि अन्तर्भवन्ति ।

५८. प्राणिषु, नौकासु च कराः ।

५९. पथकराः ।

६०. वृत्तिषु, व्यापारेषु, आजीविकासु, नियोजनासु च कराः ।

६१. प्रतिव्यक्तिकराः ।

६२. विलासवस्तुषु कराः येषु मनोरञ्जनेषु, विनोदेषु, पणनेषु, द्यूतेषु च कराः अन्तर्भवन्ति ।

६३. मुद्राङ्कशुल्कमानानां सम्बन्धे प्रथमसूच्याः उपबन्धेषु विनिर्दिष्टेभ्यः इतरलेख्यानां सम्बन्धे मुद्राङ्कशुल्कस्य मानानि ।

६४. एतत्सूच्याः विषयेषु केनापि सम्बद्धानां विधीनां विरुद्धं अपराधाः ।

६५. एतत्सूच्याः विषयेषु कस्यापि सम्बन्धे उच्चतमन्यायालयं विहाय सर्वेषां न्यायालयानां अधिकारिता, शक्तयश्च ।

६६. एतत्सूच्याः विषयेषु कस्यापि सम्बन्धे प्रशुल्काः, किन्तु तेषु नान्तर्भवन्ति कस्मिन् अपि न्यायालये गृह्यमाणप्रशुल्काः ।

## सूची ३—समवर्तिनी सूची

१. दण्डविधिः यस्मिन् अन्तर्भवन्ति सर्वे अपि ते विषयाः ये एतत् संविधानस्य प्रारम्भे भारतीयदण्डसंहितायां अन्तर्विष्टाः विद्यन्ते; किन्तु अस्मिन् नान्तर्भवन्ति प्रथमसूच्यां, द्वितीयसूच्यां वा उल्लिखितेषु विषयेषु केनापि सम्बद्धानां विधीनां विरुद्धं अपराधाः तथा च असैनिकशक्तेः सहायतार्थं नौ-स्थल-वायुसेनानां, अन्यस्य सशस्त्रबलस्य वा प्रयोगः ।

---

१. संविधानस्य (षष्ठं संशोधनं) अधिनियमः, १९५६ इत्यस्य २-अनुभागेन ५४-प्रविष्ट्याः प्रति एषा संनिवेशिता ।

२. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं)अधिनियमः, १९७६ इत्यस्य ५७-अनुभागेन एते शब्दाः अन्तर्वेशिताः (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**सप्तमी अनुसूची**

२. दण्डप्रक्रिया यस्यां अन्तर्भवन्ति ते सर्वे विषयाः ये एतत् संविधानस्य प्रारम्भे दण्डप्रक्रियासंहितायां अन्तर्गताः आसन् ।

३. कस्यापि राज्यस्य सुरक्षया, लोकव्यवस्थायाः धारणेन, समुदायस्य कृते आवश्यकानां प्रदायानां सेवानां च धारणेन वा संसक्तैः कारणैः कृतः निवारकनिरोधः; एवं निरुद्धाः जनाः ।

४. बन्दिनां, अभियुक्तजनानां, एतस्याः सूच्याः ३-प्रविष्ट्यां विनिर्दिष्टकारणैः निवारकनिरोधं गतानां जनानां एकस्मात् राज्यात् अपरस्मिन् राज्ये अपसारणम् ।

५. विवाहः, विवाहविच्छेदश्च; शिशवः आप्राप्तवयस्काश्च; दत्तकग्रहणं; इच्छापत्राणि; इच्छापत्रहीनत्वं, उत्तराधिकारश्च; अविभक्तकुटुम्बं, विभाजनं च; सर्वे ते विषयाः येषां सम्बन्धे न्यायविषयककार्यप्रवृत्तिषु पक्षकाराः एतत् संविधानस्य प्रारम्भात् अव्यवहितपूर्वं स्वीयविधेः अधीनाः अभूवन् ।

६. कृषिभूमिभिन्नायाः सम्पत्तेः अन्तरणम्; विलेखानां लेख्यानां च पञ्जीकरणम् ।

७. संविदः यासु भागिता, अभिकरणं, वहनसंविदः, अन्याः विशेषरूपाश्च संविदः अन्तर्भवन्ति किन्तु कृषिभूमिसम्बन्धिन्यः संविदः नान्तर्भवन्ति ।

८. अनुयोज्यदोषाः ।

९. ऋणशोधनाशक्तता, ऋणशोधनाक्षमता च ।

१०. न्यासः, न्यासिनश्च ।

११. महाप्रशासकाः, शासकीयन्यासिनश्च ।

[1][११अ. न्यायप्रशासनं, उच्चतमन्यायालयं, उच्चन्यायालयान् च व्यतिरिच्य अन्येषां सर्वेषां न्यायालयानां घटनं सङ्घटनं च ।]

१२. साक्ष्यं, शपथाश्च; विधीनां, लोककार्याणां, अभिलेखानां च मान्यता; न्यायिककार्यप्रवृत्तयश्च ।

१३. व्यवहारप्रक्रिया यस्यां एतत् संविधानस्य प्रारम्भे व्यवहारप्रक्रियासंहितान्तर्गताः सर्वे विषयाः अन्तर्भवन्ति; परिसीमाः, मध्यस्थता च ।

१४. उच्चतमन्यायालयस्य अवमानं व्यतिरिच्य, न्यायालयावमानः ।

१५. आहिण्डनम्; यायावरीयाः प्रव्रजनशीलाश्च जनजातयः ।

१६. उन्मत्तता, मनोविकलता च, यस्मिन् विषये उन्मत्तानां, मनोविकलानां ग्रहणस्य उपचारस्य वा स्थानानि अन्तर्भवन्ति ।

१७. पशून् प्रति क्रूरतायाः निवारणम् ।

---

१. संविधानस्य (द्विचत्वारिंशत्तम संशोधनं) अधिनियमः, १९७६ इत्यस्य ५७-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**सप्तमी अनुसूची**

[1][१७-अ. वनानि ।

१७आ. वन्यपशूनां, पक्षिणां च संरक्षणम् ।]

१८. खाद्यपदार्थेषु अन्येषु वस्तुषु च अपमिश्रणम् ।

१९. अहिफेनविषयिण्याः प्रथमसूच्याः ५९-प्रविष्ट्याः उपबन्धानां अधीनं औषधयः विषाणि च ।

२०. आर्थिकं सामाजिकं च योजनाकार्यम् ।

२०अ. जनसङ्ख्यानियन्त्रणं, परिवारनियोजनं च ।

२१. वाणिज्यिकाः औद्योगिकाश्च एकाधिकाराः, संहतयः, न्यासाश्च ।

२२. व्यापारसङ्घाः, औद्योगिकाः श्रमिकसम्बन्धिनः विवादाश्च ।

२३. सामाजिकी सुरक्षा, सामाजिकी अनागतरक्षा च; नियोजनं, नियोजनाभावश्च ।

२४. श्रमिकाणां कल्याणं यस्मिन् अन्तर्भवन्ति कार्यदशाः, भविष्यनिधयः, नियोजकानां दायित्वं, कर्मकराणां प्रतिकरः, असमर्थतायां वार्धक्ये च निवृत्तिवेतनानि, प्रसूतिसौकर्याणि च ।

[2][२५. प्रथमानुसूच्याः ६३,६४,६५,६६ प्रविष्टीनां उपबन्धानां अधीनं शिक्षा, यस्यां अन्तर्भवन्ति शिल्पसम्बन्धिनीशिक्षा, आयुर्विज्ञानशिक्षा, विश्वविद्यालयाश्च; श्रमिकाणां व्यवसायसम्बन्धिशिल्पसम्बन्धिप्रशिक्षणं च ।]

२६. विधिवृत्तिः, चिकित्सावृत्तिः, अन्याः वृत्तयश्च ।

२७. भारतपाकिस्तानाधिनिवेशयोः स्थापनेन स्वीयमूलनिवासस्थानतः विस्थापितानां जनानां सहायता, पुनर्वासश्च ।

२८. पूर्तानि, पूर्तसंस्थाश्च; पूर्ताः धार्मिकाश्च विन्यासाः, धार्मिकसंस्थाश्च ।

२९. मानवेषु, पशुषु, उद्भित्सु च प्रभाववतां सङ्क्रामकाणां, सांसर्गिकाणां च रोगाणां, नाशकजन्तूनां च एकस्मात् राज्यात् राज्यान्तरे प्रसारस्य निवारणम् ।

३०. जन्ममरणसङ्ख्यानं, यस्यां अन्तर्भवन्ति जन्मनां मृत्यूनां च पञ्जीकरणम् ।

३१. संसदा प्रणीतेन विधिना, विद्यमानविधिना वा तदधीनं वा महावेलापत्तनानि इति घोषितेभ्यः इतराणि वेलापत्तनानि ।

३२. राष्ट्रियजलमार्गविषये प्रथमसूच्याः उपबन्धानां अधीनं, अन्तर्देशीयजलमार्गेषु यन्त्रनोदितसमुद्रयानविषयकं पोतपरिवहणं, नौपरिवहणं च, एतादृशजलमार्गेषु मार्गनियमाश्च; आन्तर्देशीयजलमार्गेषु यात्रिणां भाण्डानां च परिवहणम् ।

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं)अधिनियमः, १९७६ इत्यस्य ५७-अनुभागेन एते प्रविष्टी अन्तर्वेशिते (३-१-१९७७दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन २५-प्रविष्टयाः प्रति एषा संनिवेशिता (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

**सप्तमी अनुसूची**

[1][३३. (क) यत्र कस्यापि उद्योगस्य सङ्घेन नियन्त्रणं लोकहिताय समीचीनं विद्यते इति संसदा विधिना घोषितं भवति तत्र एतादृशात् उद्योगात् उत्पन्नेषु वस्तुषु; एतादृशैः वस्तुभिः सदृशेषु देशान्तरात् आनीतेषु वस्तुषु च;

(ख) खाद्यतैलबीजानि, तैलानि च अन्तर्भावयत्सु खाद्यपदार्थेषु;

(ग) तैलकिट्टं, सारकृतं, यवसं च अन्तर्भावयति पशूनां यवसे,

(घ) निष्कासितबीजे, अनिष्कासित बीजे वा कार्पासे, कार्पासबीजे च;

(ङ) असिद्धपट्टशणे,

व्यापारः वाणिज्यं च तथा तेषां उत्पादनं, प्रदायः, वितरणं च ।]

[2][३३अ. तौलपरिमाणानि मानानि च येषु मानकनियतिः नान्तर्भवति ।]

३४. मूल्यनियन्त्रणम् ।

३५. यन्त्रनोदितयानानि; येषु ते सिद्धान्ताः अन्तर्भवन्ति येषां अनुसारेण एतादृशेषु यानेषु कराः उद्ग्रहणीयाः सन्ति ।

३६. कर्मशालाः ।

३७. वाष्पयन्त्राणि ।

३८. विद्युत् ।

३९. समाचारपत्राणि, पुस्तकानि, मुद्रणालयाश्च ।

४०. [3][संसदा निर्मितेन विधिना तदधीनं वा यानि राष्ट्रियमहत्वमयानि घोषितानि तेभ्यः] इतराणि पुरातत्वसम्बन्धीनि स्थानानि, अवशेषाश्च ।

४१. निष्क्रान्तसम्पत्तिः इति विधिना घोषितायाः सम्पत्तेः (यस्यां अन्तर्भवति कृषिभूमिः) अभिरक्षा, प्रबन्धः, व्ययनं च ।

---

१. संविधानस्य (तृतीयं संशोधनं) अधिनियमः, १९५४ इत्यस्य २-अनुभागेन ३३-प्रविष्टयाः प्रति एषा संनिवेशिता ।

२. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ५७-अनुभागेन एषा प्रविष्टिः अन्तर्वेशिता (३-१-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

३. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २७-अनुभागेन "संसदा विधिना राष्ट्रियमहत्त्ववत्वेन घोषितेभ्यः" इत्येतस्मात् प्रति एते शब्दाः अन्तर्वेशिताः ।

**सप्तमी अनुसूची**

[1][४२. सम्पत्तेः अर्जनं, अधिग्रहणं च ।]

४३. कस्मिन् अपि राज्ये कराणां विषये अभ्यर्थनानां अन्यासां च लोकाभियाचनानां प्रत्युद्धारः यासु तद्राज्यात् बहिः उत्पन्नाः भूराजस्वस्य अवशेषाः एवं अवशेषरूपेण प्रत्युद्धरणीयाः राशयश्च अन्तर्भवन्ति ।

४४. न्यायिकमुद्राङ्कैः सङ्गृहीतान् शुल्कान् प्रशुल्कान् वा विहाय, मुद्राङ्कशुल्काः, किन्तु अत्र मुद्राङ्कशुल्कमानानि नान्तर्भवन्ति ।

४५. द्वितीयसूच्यां तृतीयसूच्यां वा विनिर्दिष्टेषु विषयेषु कस्यापि प्रयोजनार्थं परिप्रश्नाः, सङ्ख्यानं च ।

४६. उच्चतमन्यायालयं व्यतिरिच्य, सर्वेषां न्यायालयानां एतस्याः सूच्याः विषयेषु कस्यापि सम्बन्धे अधिकारिता, शक्तयश्च ।

४७. एतस्याः सूच्याः विषयेषु कस्यापि सम्बन्धे प्रशुल्काः किन्तु तेषु नान्तर्भवन्ति कस्मिन् अपि न्यायालये ग्राह्याः प्रशुल्काः ।

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २६-अनुभागेन ४२-प्रविष्टयाः प्रति एषा संनिवेशिता ।

## अष्टमी अनुसूची

[अनुच्छेदः ३४४ (१) तथा ३५१]

**भाषाः**

१. असमीभाषा

२. उर्दूभाषा

३. ओडियाभाषा

४. कन्नडभाषा

५. कश्मीरीभाषा

6. गुजरातीभाषा

७. तमिलभाषा

८. तेलुगुभाषा

९. पञ्जाबीभाषा

१०. बांग्लाभाषा

११. मराठीभाषा

१२. मलयालम्भाषा

१३. संस्कृतभाषा

[1][१४.] सिन्धीभाषा

[2][१५.] हिन्दीभाषा

---

१. संविधानस्य (एकविंशतितमं संशोधनं) अधिनियमः; १९६७ इत्यस्य २-अनुभागेन एषा प्रविष्टिः परिवर्धिता ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन १४-प्रविष्टिः १५-रूपेण पुनः क्रमाङ्किता ।

## [1][नवमी अनुसूची

### (अनुच्छेदः—३१आ)

१. बिहारस्य भूमिसुधारणा अधिनियमः, १९५० (१९५० वर्षस्य बिहाराधिनियमः ३०)।

२. मुम्बय्याः अभिधृतिः कृषिभूमिश्च अधिनियमः, १९४८ (१९४८ वर्षस्य मुम्बय्याः अधिनियमः ६७)।

३. मुम्बय्याः मालिकीभूधृतेः उत्सादनं अधिनियमः, १९४९ (१९४९ वर्षस्य मुम्बय्याः अधिनियमः ६१)।

४. मुम्बय्याः तालुकदारीभूधृतेः उत्सादनं अधिनियमः, १९४९ (१९४९ वर्षस्य मुम्बय्याः अधिनियमः ६२)।

५. पञ्चमहाल-मेहवासीभूधृतेः उत्सादनं अधिनियमः, १९४९ (१९४९ वर्षस्य मुम्बय्याः अधिनियमः ६३)।

६. मुम्बय्याः खोती-उत्सादनं अधिनियमः, १९५० (१९५० वर्षस्य मुम्बय्याः अधिनियमः ६)।

७. मुम्बय्याः परगणावतनस्य कुलकर्णीवतनस्य च उत्सादनं अधिनियमः, १९५० (१९५० वर्षस्य मुम्बय्याः अधिनियमः ६०)।

८. मध्यप्रदेशस्य साम्पत्तिकाधिकाराणां (सम्पदानां महालानां अन्यसङ्क्रान्त भूमीनां च) उत्सादनं अधिनियमः, १९५० (१९५० वर्षस्य मध्यप्रदेशस्य अधिनियमः १)।

९. मद्रासस्य सम्पदानां (उत्सादनं रैयतवाडी रूपे सम्परिवर्तनं च) अधिनियमः, १९४८ (१९४८ वर्षस्य मद्रासस्य अधिनियमः २६)।

१०. मद्रासस्य सम्पदानां (उत्सादनं रैयतवाडीरूपे सम्परिवर्तनं च) संशोधनं अधिनियमः, १९५० (१९५० वर्षस्य मद्रासस्य अधिनियमः १)।

११. उत्तरप्रदेशस्य जमीनदारिविनाशः भूमिव्यवस्था च अधिनियमः, १९५० (१९५१ वर्षस्य उत्तरप्रदेशस्य अधिनियमः १)।

१२. हैदराबादस्य (जागीराणां उत्सादनं) विनियमः १३५८फ (१३५८ फसलीवर्षस्य ६९)।

१३. हैदराबादस्य जागीराणां (परिवर्तनं) विनियमः १३५९फ (१३५९ फसली वर्षस्य २५)।

[2][१४. बिहारस्य विस्थापितजनानां पुनर्वासाय (भूमेः अर्जनं) अधिनियमः, १९५० (१९५० वर्षस्य बिहारस्य अधिनियमः ३८)।

१५. संयुक्तप्रान्तस्य शरणार्थिनां वासस्य भूमेः प्रापणं अधिनियमः, १९४८ (१९४८ वर्षस्य संयुक्तप्रान्तीयाधिनियमः २६)।

---

१. संविधानस्य (प्रथमं संशोधनं) अधिनियमः, १९५१ इत्यस्य १४-अनुभागेन एषा अनुसूची परिवर्धिता।

२. संविधानस्य (चतुर्थं संशोधनं) अधिनियमः, १९५५ इत्यस्य ५-अनुभागेन १४तः २० यावत् प्रविष्ट्यः परिवर्धिताः।

**नवमी अनुसूची**

१६. विस्थापितजनानां पुनर्वासाय (भूमेः अर्जनं) अधिनियमः, १९४८ (१९४८ वर्षस्य अधिनियमः ६०)।

१७. अनागतरक्षा (संशोधनं) अधिनियमः, १९५० (१९५० वर्षस्य अधिनियमः ४७ (इत्यस्य ४२-अनुभागेन यथा अन्तर्वेशितः अनागतरक्षाधिनियमः, १९३८ (१९३८ वर्षस्य अधिनियमः ४) इत्यस्य ५२ अ तः ५२ ऋ यावत् अनुभागाः।

१८. लोहमार्गसमवायानां कृते (आपातोपबन्धः) अधिनियमः, १९५१ (१९५१ वर्षस्य अधिनियमः ५१)।

१९. उद्योगानां (विकासः विनियमनं च) संशोधनं अधिनियमः, १९५३ (१९५३ वर्षषस्य नियम २६) इत्यस्य १३-अनुभागेन यथा अन्तर्वेशितः उद्योगानां (विकासः विनियमनं च) अधिनियमः १९५१ (१९५१वर्षस्य ६५ अधिनियमः) इत्यस्य ३ अ अध्यायः।

२०. पश्चिमीबङ्गालस्य १९५१ वर्षस्य २९-तमाधिनियमेन यथासंशोधितः १९४८ वर्षस्य पश्चिम-बङ्गालस्य भूमेः विकासः आयोजनं च अधिनियमः, १९४८ (१९४८ वर्षस्य पश्चिमबङ्गालस्य अधिनियमः २१)।]

[1][२१. आन्ध्रप्रदेशस्य अधिकतमकृषिभूमिधृतिसीमाधिनियमः, १९६१ (आन्ध्रप्रदेशस्य १९६१ वर्षस्य अधि-नियमः १०)।

२२. आन्ध्रप्रदेशस्य (तेलङ्गाण क्षेत्रस्य) अभिधृतेः कृषिभूमीनां च (विधिमान्यकरणं) अधिनियमः, १९६१ (१९६१ वर्षस्य आन्ध्रप्रदेशस्य अधिनियमः २१)।

२३. आन्ध्रप्रदेशस्य (तेलङ्गाणक्षेत्रस्य) एकाधिकारगतकृषिभूमेः कौलीकृषिभूमेश्च अनियमितपट्टानां प्रतिसंहरणं, सुकरनिर्धाणस्य उत्सादनं च अधिनियमः, १९६१ (१९६१ वर्षस्य आन्ध्रप्रदेशस्य अधिनियमः ३६)।

२४. असमराज्यस्य लोकस्वरूपाभिः धार्मिकपूर्तसंस्थाभिः धृतभूमीनां अर्जनम् अधिनियमः, १९४९ (१९४९ वर्षस्य असमराज्यस्य अधिनियमः ९)।

२५. बिहारस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९५४ (१९५४ वर्षस्य बिहारस्य अधिनियमः २०)।

२६. बिहारस्य भूमिसुधारणा (अधिकतमक्षेत्रसीमानिर्धारणं अधिशेषभूमीनां अर्जनं च) अधिनियमः, १९६१ (१९६२ वर्षस्य विहारस्य अधिनियमः १२) (यस्मिन् एतदधिनियमस्य २८-अनुभागः नान्तर्भवति)।

२७. मुम्बय्याः तालुकदारीभूधृतेः उत्सादनं (संशोधनं) अधिनियमः १९५४ (१९५५ वर्षस्य मुम्बय्याः अधिनियमः १)।

२८. मुम्बय्याः तालुकदारीभूधृतेः उत्सादनं (संशोधनं) अधिनियमः, १९५७ (१९५८ वर्षस्य मुम्बय्याः अधिनियमः १८)।

२९. मुम्बय्याः इनामानां [(कच्छ क्षेत्रे) उत्सादनं] अधिनियमः, १९५८ (१९५८ वर्षस्य मुम्बय्याः अधिनियमः ९८)।

---

१. संविधानस्य (सप्तदशं संशोधनं) अधिनियमः, १९६४ इत्यस्य ३-अनुभागेन २१ तः ६४ यावत् प्रविष्ट्यः परिवर्धिताः।

## नवमी अनुसूची

३०. मुम्बय्याः अभिधृतिः कृषिभूमिश्च (गुजरातसंशोधनं) अधिनियमः, १९६० (१९६० वर्षस्य गुजरातस्य अधिनियमः १६)।

३१. गुजरातस्य कृषिभूमीनां अधिकतमसीमाधिनियमः, १९६० (१९६१ वर्षस्य गुजरातस्य अधिनियमः २६)।

३२. सगवाड़ा-मेहवासी सम्पदां (साम्पत्तिकाधिकाराणां उत्सादनादीनि) विनियमः, १९६२ (१९६२ वर्षस्य गुजरातस्य विनियमः १)।

३३. गुजरातस्य शेषान्यसङ्क्रामणानां उत्सादनं अधिनियमः, १९६३ (१९६३ वर्षस्य गुजरातस्य अधिनियमः, ३३) यावत् एषः अधिनियमः २ अनुभागस्य (३) खण्डस्य (घ) उपखण्डे निर्दिष्टं अन्यसङ्क्रामणं विषयीकरोति तावत् पर्यन्तं विहाय।

३४. महाराष्ट्रस्य कृषिभूमेः (धृतीनां अधिकतमसीमा) अधिनियमः, १९६१ (१९६१ वर्षस्य महाराष्ट्रस्य अधिनियमः २७)।

३५. हैदराबादस्य अभिधृतेः कृषिभूमिनां च (पुनः अधिनियमनं, विधिमान्यकरणं अतिरिक्तसंशोधनं च) अधिनियमः, १९६१ (१९६१ वर्षस्य महाराष्ट्रस्य अधिनियमः ४५)।

३६. हैदराबादस्य अभिधृतेः कृषिभूमीनां अधिनियमः, १९५० (१९५० वर्षस्य हैदराबादस्य अधिनियमः २१)।

३७. जन्मीकरं सन्दायस्य (उत्सादनं) अधिनियमः, १९६० (१९६१ वर्षस्य केरलस्य अधिनियम ३)।

३८. केरलस्य भूमिकराधिनियमः, १९६१ (१९६१ वर्षस्य केरलस्य अधिनियमः १३)।

३९. केरलस्य भूमिसुधारणाधिनियमः, १९६३ (१९६४ वर्षस्य केरलस्य अधिनियमः ३)।

४०. मध्यप्रदेशस्य भूराजस्वसंहिता, १९५९ (१९५९ वर्षस्य मध्यप्रदेशस्य अधिनियमः २०)।

४१. मध्यप्रदेशस्य कृषिकभूधृतीनां अधिकतमसीमाः अधिनियमः, १९६० (१९६० वर्षस्य मध्यप्रदेशस्य अधिनियमः २०)।

४२. मद्रासस्य कृषिकराभिधरसंरक्षणं अधिनियमः, १९५५ (१९५५ वर्षस्य मद्रासस्य अधिनियमः २५)।

४३. मद्रासस्य कृषिकराभिधरैः (उचितभाटकसन्दायः) अधिनियमः, १९५६ (१९५६ वर्षस्य मद्रासस्य अधिनियमः २४)।

४४. मद्रासस्य कुडियिरुप्पु-अधिभोगिनां (निःसारणात् संरक्षणं) अधिनियमः, १९६१ (१९६१ वर्षस्य मद्रासस्य अधिनियमः, ३८)।

४५. मद्रासस्य लोकन्यासः (कृषिभूमीनां प्रशासनं विनियमनं च) अधिनियमः, १९६१ (१९६१ वर्षस्य मद्रासस्य अधिनियमः ५७)।

४६, मद्रासस्य भूमिसुधारणा (भूमौ अधिकतमसीमा नियतनं) अधिनियमः, १९६१ (१९६१ मद्रासस्य अधिनियमः ५८)।

४७. मैसूरस्य अभिधृतिः अधिनियमः, १९५२ (१९५२ वर्षस्य मैसूरस्य अधिनियमः १३)।

**नवमी अनुसूची**

४८. कोड्गु अभिधराः अधिनियमः, १९५७ (१९५७ वर्षस्य मैसूरस्य अधिनियमः १४) ।

४९. मैसूरस्य ग्रामपदोत्सादनं अधिनियमः १९६१ (१९६१ वर्षस्य मैसूरस्य अधिनियमः १४) ।

५०. हैदराबादस्य अभिधृतेः कृषिभूमिनां च (विधिमान्यकरणं) अधिनियमः, १९६१ (१९६१ वर्षस्य मैसूरस्य अधिनियमः ३६) ।

५१. मैसूरस्य भूमिसुधारणा अधिनियमः, १९६१ (१९६२ वर्षस्य मैसूरस्य अधिनियमः १०) ।

५२. ओडिश्शाराज्यस्य भूमिसुधारणा अधिनियमः, १९६० (१९६० वर्षस्य ओडिश्शा राज्यस्य अधिनियमः १६) ।

५३. ओडिश्शाराज्यस्य विलीनराज्यक्षेत्राणां (ग्रामोपदोत्सादनं) अधिनियमः, १९६३ (१९६३ वर्षस्य ओडिश्शाराज्यस्य अधिनियमः १०) ।

५४. पञ्जाबस्य भूधृतीनां सुरक्षा अधिनियमः, १९५३ (१९५३ वर्षस्य पञ्जाबस्य अधिनियमः १०) ।

५५. राजस्थानस्य अभिधृतिः अधिनियमः, १९५५ (१९५५ वर्षस्य राजस्थानस्य अधिनियमः ३) ।

५६. राजस्थानस्य जमीनदारी बिश्वेदारी इत्येतयोः उत्सादनं अधिनियमः, १९५९ (१९५९ वर्षस्य राजस्थानस्य अधिनियमः ८) ।

५७. "कुमायूं" इत्येतस्य उत्तराखण्डस्य च जमीनदारीविनाशः भूमिसुव्यवस्था च अधिनियमः, १९६० (१९६० वर्षस्य उत्तरप्रदेशस्य अधिनियमः १७) ।

५८. उत्तरप्रदेशस्य भूधृतिषु अधिकतमसीमारोपणं अधिनियमः, १९६० (१९६१ वर्षस्य उत्तरप्रदेशस्य अधिनियमः १) ।

५९. पश्चिमबङ्गालस्य सम्पदां अर्जनं अधिनियमः, १९५३ (१९५४ वर्षस्य पश्चिमबङ्गालस्य अधिनियमः १) ।

६०. पश्चिमबङ्गालस्य भूमिसुधारणा अधिनियमः, १९५५ (१९५६ वर्षस्य पश्चिमबङ्गालस्य अधिनियमः १०) ।

६१. दिल्लीराज्यस्य भूमिसुधारणा अधिनियमः, १९५४ (१९५४ वर्षस्य दिल्लीराज्यस्य अधिनियमः ८) ।

६२. दिल्लीराज्यस्य भूधृतिषु (अधिकतमसीमा) अधिनियमः, १९६० (१९६० वर्षस्य केन्द्रीयाधिनियमः २४) ।

६३. मणिपुरस्य भूराजस्वं भूमिसुधारणा च अधिनियमः, १९६० (१९६० वर्षस्य केन्द्रीयाधिनियमः ३३) ।

६४. त्रिपुराराज्यस्य भूराजस्वं भूमिसुधारणा च अधिनियमः, १९६० (१९६० वर्षस्य केन्द्रीयाधिनियमः ४३) ।]

[1][६५. केरलस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९६९ (१९६९ वर्षस्य केरलस्य अधिनियमः ३५) ।

---

१. संविधानस्य (नवविंशतितमं संशोधनं) अधिनियमः, १९७२, इत्यस्य २-अनुभागेन ६५-६६ प्रविष्टी परिवर्धिते ।

**नवमी अनुसूची**

६६. केरलस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९७१ (१९७१ वर्षस्य केरलस्य अधिनियमः २५)] ।

[1][६७. आन्ध्रप्रदेशस्य भूमिसुधारणा (कृषिभूधृतीनां अधिकतमसीमा) अधिनियमः (१९७३ वर्षस्य आन्ध्र-प्रदेशस्य अधिनियमः १)]

६८. बिहारस्य भूमिसुधारणा (अधिकतमसीमानिर्धारणं अधिशेषभूमीनां अर्जनं च) (संशोधनं) अधिनियमः, १९७२(१९७३ वर्षस्य बिहारस्य अधिनियमः १)।

६९. बिहारस्य भूमिसुधारणा (अधिकतमसीमा निर्धारणं अधिशेष भूमीनां अर्जनं च) (संशोधनं) अधिनियमः, १९७३(१९७३ वर्षस्य बिहारस्य अधिनियमः ९) ।

७०. बिहारस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९७२(१९७२ वर्षस्य बिहारस्य अधिनियमः ५)।

७१. गुजरातस्य कृषिभूमीनां अधिकतमसीमा (संशोधनं) अधिनियमः, १९७२ (१९७२ वर्षस्य गुजरातस्य अधिनियमः २) ।

७२. हरियाणाराज्यस्य भूधृतीनां अधिकतमसीमा अधिनियमः, १९७२ (१९७२ वर्षस्य हरियाणाराज्यस्य अधिनियमः २६) ।

७३. हिमाचलप्रदेशस्य भूधृतीनां अधिकतमसीमा अधिनियमः, १९७२ (१९७३ वर्षस्य हिमाचलप्रदेशस्य अधिनियमः १९) ।

७४. केरलस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९७२(१९७२ वर्षस्य केरलस्य अधिनियमः १७)।

७५. मध्यप्रदेशस्य कृषिकभूधृतीनां अधिकतमसीमाः (संशोधनं) अधिनियमः, १९७२ (१९७४ वर्षस्य मध्य-प्रदेशस्य अधिनियमः १२) ।

७६. मध्यप्रदेशस्य कृषिकभूधृतीनां अधिकतमसीमाः (द्वितीयं संशोधनं) अधिनियमः, १९७२ (१९७४ वर्षस्य मध्यप्रदेशस्य अधिनियमः १३) ।

७७. मैसूरस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९७३(१९७४ वर्षस्य कर्णाटकस्य अधिनियमः १) ।

७८. पञ्जाबस्य भूमिसुधारणा अधिनियमः, १९७२ (१९७३ वर्षस्य पञ्जाबस्य अधिनियमः १०) ।

७९. राजस्थानस्य कृषिभूधृतिषु अधिकतमसीमाधिरोपणं अधिनियमः, १९७३ (१९७३ वर्षस्य राजस्थानस्य अधिनियमः ११) ।

८०. गुडलूर-जन्मम् सम्पदां (उत्सादनं रैयतवार्यां सम्परिवर्तनं च) अधिनियमः, १९६९ (१९६९ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः २४) ।

८१. पश्चिमबङ्गालस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९७२ (१९७२ वर्षस्य पश्चिमबङ्गालस्य अधिनियमः १२) ।

---

१. संविधानस्य (चतुस्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७४ इत्यस्य २-अनुभागेन ६७तः ८६ यावत् प्रविष्टयः परिवर्धिताः ।

## नवमी अनुसूची

८२. पश्चिमबङ्गालस्य सम्पदां अर्जनं (संशोधनं) अधिनियमः, १९६४ (१९६४ वर्षस्य पश्चिमबङ्गालस्य अधिनियमः २२)।

८३. पश्चिमबङ्गालस्य सम्पदां अर्जनं (द्वितीयं संशोधनं) अधिनियमः, १९७३ (१९७३ वर्षस्य पश्चिमबङ्गालस्य अधिनियमः ३३)।

८४. मुम्बय्याः अभिधृतिः कृषिभूमिश्च (गुजरातसंशोधनं) अधिनियमः, १९७२ (१९७३ वर्षस्य गुजरातस्य अधिनियमः ५)।

८५. ओडिश्शाराज्यस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९७४ (१९७४ वर्षस्य ओडिश्शाराज्यस्य अधिनियमः ९)।

८६. त्रिपुराराज्यस्य भूराजस्वं भूमिसुधारणा च (द्वितीयं संशोधनं) अधिनियमः, १९७४ (१९७४ वर्षस्य त्रिपुराराज्यस्य अधिनियमः ७)।]

[1][८७. [2][ * * * * ]

८८. उद्योगानां (विकासः विनियमनं च) अधिनियमः, १९५१ (१९५१ वर्षस्य केन्द्रीयाधिनियमः ६५)।

८९. स्थावरसम्पत्तेः अधिग्रहणं अर्जनं च अधिनियमः, १९५२ (१९५२ वर्षस्य केन्द्रीयाधिनियमः ३०)।

९०. खनीनां खनिजानां च (विनियमनं विकासश्च) अधिनियमः, १९५७ (१९५७ वर्षस्य केन्द्रीयाधिनियमः ६७)।

९१. एकाधिकाराः तथा च अवरोधकव्यापारिकव्यवहाराः अधिनियमः, १९६९ (१९६९ वर्षस्य केन्द्रीयाधिनियमः ५४)।

[3][९२. * * * * ]

९३. अर्धदग्धाङ्गारखनिः (आपातोबन्धाः) अधिनियमः, १९७१ (१९७१ वर्षस्य केन्द्रीयाधिनियमः ६४)।

९४. अर्धदग्धाङ्गारखनीनां (राष्ट्रियकरणं) अधिनियमः, १९७२ (१९७२ वर्षस्य केन्द्रीयाधिनियमः ३६)।

९५. साधारणानागतरक्षा कार्यव्यापारस्य (राष्ट्रियकरणं) अधिनियमः, १९७२ (१९७२ वर्षस्य केन्द्रीयाधिनियमः ५७)।

९६. भारतीयताम्रनिगमः (उपक्रमस्यार्जनं) अधिनियमः, १९७२ (१९७२ वर्षस्य केन्द्रीयाधिनियमः ५८)।

९७. रुग्णानां वस्त्रोपक्रमाणां (प्रबन्धग्रहणं) अधिनियमः, १९७२ (१९७२ वर्षस्य केन्द्रीयाधिनियमः ७२)।

---

१. संविधानस्य (नवत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ५-अनुभागेन ८७तः १२४-यावत् प्रविष्ट्यः परिवर्धिताः।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ४४-अनुभागेन ८७-तमा प्रविष्टिः लोपिता (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण।

३. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन ९२-तमा प्रविष्टिः लोपिता (२०-६-१९७९ दिनाङ्कात् प्रवर्तमान-प्रभवावेण)।

**नवमी अनुसूची**

९८. अङ्गारखनीनां (प्रबन्धग्रहणं) अधिनियमः, १९७३ (१९७३ वर्षस्य केन्द्रीयाधिनियमः १५) ।

९९. अङ्गारखनीनां (राष्ट्रियकरणं) अधिनियमः, १९७३ (१९७३ वर्षस्य केन्द्रीयाधिनियमः २६) ।

१००. वैदेशिकमुद्राविनियमनं अधिनियमः, १९७३ ( १९७३ वर्षस्य केन्द्रीयाधिनियमः ४६) ।]

१०१. "आलकोक् एषडाउन् कम्पनी लिमिटेड" इत्येतस्य (उपक्रमार्जनं) अधिनियमः, १९७३ (१९७३ वर्षस्य केन्द्रीयाधिनियमः ५६) ।

१०२. अङ्गारखनीनां (संरक्षणं विकासश्च) अधिनियमः, १९७४(१९७४ वर्षस्य केन्द्रीयाधिनियमः २८) ।

१०३. अतिरिक्तोपलब्धीनां (अनिवर्यानिक्षेपः) अधिनियमः, १९७४ (१९७४ वर्षस्य केन्द्रीयाधिनियमः ३७) ।

१०४. वैदेशिकमुद्रासंरक्षणं तस्करतानिवारणं च अधिनियमः, १९७४ (१९७४ वर्षस्य केन्द्रीयाधिनियमः ५२) ।

१०५. रुग्णानां वस्त्रोपक्रमाणां (राष्ट्रियकरणं) अधिनियमः, १९७४ (१९७४ वर्षस्य केन्द्रीयाधिनियमः ५७) ।]

१०६. महाराष्ट्रस्य कृषिभूमीनां (धृतीनां अधिकतमसीमा) (संशोधनं) अधिनियमः, १९६४ (१९६५ वर्षस्य महाराष्ट्रस्य अधिनियमः १६) ।

१०७. महाराष्ट्रस्य कृषिभूमीनां (धृतीनां अधिकतमसीमा) (संशोधनं) अधिनियमः, १९६५ (१९६५ वर्षस्य महाराष्ट्रस्य अधिनियमः ३२) ।

१०८. महाराष्ट्रस्य कृषिभूमीनां (धृतीनां अधिकतमसीमा) (संशोधनं) अधिनियमः, १९६८ (१९६८ वर्षस्य महाराष्ट्रस्य अधिनियमः १६)।

१०९. महाराष्ट्रस्य कृषिभूमीनां (धृतीनां अधिकतमसीमा) (द्वितीयं संशोधनं) अधिनियमः, १९६८ (१९६८ वर्षस्य महाराष्ट्रस्य अधिनियमः ३३) ।

११०. महाराष्ट्रस्य कृषिभूमीनां (धृतीनां अ धकतमसीमा) (संशोधनं) अधिनियमः, १९६९ (१९६९ वर्षस्य महाराष्ट्रस्य अधिनियमः ३७) ।

१११. महाराष्ट्रस्य कृषिभूमीनां (धृतीनां अधिकतमसीमा) (द्वितीयं संशोधनं) अधिनियमः, १९६९ (१९६९ वर्षस्य महाराष्ट्रस्य अधिनियमः ३८) ।

११२. महाराष्ट्रस्य कृषिभूमीनां (धृतीनां अधिकतमसीमा) (संशोधनं) अधिनियमः, १९७० (१९७० वर्षस्य महाराष्ट्रस्य अधिनियमः २७) ।

११३. महाराष्ट्रस्य कृषिभूमीनां (धृतीनां अधिकतमसीमा) (संशोधनं) अधिनियमः, १९७२ (१९७२ वर्षस्य महाराष्ट्रस्य अधिनियमः १३) ।

११४. महाराष्ट्रस्य कृषिभूमीनां (धृतीनां अधिकतमसीमा) (संशोधनं) अधिनियमः, १९७३ (१९७३ वर्षस्य महाराष्ट्रस्य अधिनियमः ५०) ।

११५. ओडिश्शाराज्यस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९६५ (१९६५ वर्षस्य ओडिश्शाराज्यस्य अधिनियमः १३) ।

११६. ओडिश्शाराज्यस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९६६ (१९६७ वर्षस्य ओडिश्शाराज्यस्य अधिनियमः ८) ।

**नवमी अनुसूची**

११७. ओडिश्शाराज्यस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९६७ (१९६७ वर्षस्य ओडिश्शाराज्यस्य अधिनियमः १३)।

११८. ओडिश्शाराज्यस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९६९ (१९६९ वर्षस्य ओडिश्शाराज्यस्य अधिनियमः १३)।

११९. ओडिश्शाराज्यस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९७० (१९७० वर्षस्य ओडिश्शाराज्यस्य अधिनियमः १८)।

१२०. उत्तरप्रदेशस्य भूधृतिषु अधिकतमसीमारोपणं (संशोधनं) अधिनियमः, १९७२ (१९७३ वर्षस्य उत्तर-प्रदेशस्य अधिनियमः १८)।

१२१. उत्तरप्रदेशस्य भूधृतिषु अधिकतमसीमारोपणं (संशोधनं) अधिनियमः, १९७४ (१९७५ वर्षस्य उत्तर-प्रदेशस्य अधिनियमः २)।

१२२. त्रिपुराराज्यस्य भूराजस्वं भूमिसुधारणा च (तृतीयं संशोधनं) अधिनियमः, १९७५ (१९७५ वर्षस्य त्रिपुराराज्यस्य अधिनियमः ३)।

१२३. दादरा-नगरहवेलीक्षेत्रस्य भूमिसुधारणा विनियमः, १९७१ (१९७१ वर्षस्य विनियमः ३)।

१२४. दादरा-नगरहवेलीक्षेत्रस्य भूमिसुधारणा (संशोधनं) विनियमः, १९७३ (१९७३ वर्षस्य विनियमः ५)]।

[1][१२५. यन्त्रनोदितयानं (मोटरवेहिकलस) अधिनियमः, १९३९ (१९३९ वर्षस्य केन्द्रीयाधिनियमः ४) इत्यस्य ६६ अ अनुभागः ४अ अध्यायश्च।

१२६. आवश्यकवस्तूनां अधिनियमः, १९५५ (१९५५ वर्षस्य केन्द्रीयाधिनियमः १०)।

१२७. तस्कराणां, छलेन वैदेशिकमुद्रासाधकानां च (सम्पत्तिसमपहरणं) अधिनियमः, १९७६ (१९७६ वर्षस्य केन्द्रीयाधिनियमः १३)।

१२८. बन्धितश्रमपद्धतेः (उत्सादनं) अधिनियमः, १९७६ (१९७६ वर्षस्य केन्द्रीयाधिनियमः १९)।

१२९. वैदेशिकमुद्रासंरक्षणं, तस्करतानिवारणं च (संशोधनं) अधिनियमः, १९७६ (१९७६ वर्षस्य केन्द्रीयाधि-नियमः २०)।

[2][१३०. * * * * ]

१३१. उद्ग्रहभारितशर्करायाः मूल्यसमीकरणनिधिः अधिनियमः, १९७६ (१९७६ वर्षस्य केन्द्रीयाधिनियमः ३१)।

१३२. नगरभूमीनां (अधिकतमसीमा, विनियमनं च) अधिनियमः, १९७६ (१९७६ वर्षस्य केन्द्रीयाधिनियमः ३३)।

---

१. संविधानस्य (चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्यस्य ३-अनुभागेन १२५तः १८८ यावत् प्रविष्ट्यः परिवर्धिताः।

२. संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य ४४-अनुभागेन १३०-तमा प्रविष्टिः लोपिता (२०-६-१९७९ दिनाङ्कात् प्रवर्तमानप्रभावेण)।

**नवमी अनुसूची**

१३३. सङ्कलेखानां विभागीयकरणे (कार्मिकानां अन्तरणं) अधिनियमः, १९७६ (१९७६ वर्षस्य केन्द्रीयाधिनियमः ५९)।

१३४. असमराज्यस्य भूधृतीनां अधिकतमसीमानियतनं अधिनियमः, १९५६ (१९५७ वर्षस्य असमस्य अधिनियमः १)।

१३५. मुम्बय्याः अभिधृतिः, कृषिभूमिश्च (विदर्भक्षेत्रे) अधिनियमः १९५८ (१९५८ वर्षस्य मुम्बय्याः अधिनियमः ९९)।

१३६. गुजरातस्य व्यक्तीनां स्वत्वे स्थितवनानां (अर्जनं) अधिनियमः १९७२ (१९७३ वर्षस्य गुजरातस्य अधिनियमः १४)।

१३७. हरियाणाराज्यस्य भूधृतीनां अधिकतमसीमा (संशोधनं) अधिनियमः, १९७६ (१९७६ वर्षस्य हरियाणाराज्यस्य अधिनियमः १७)।

१३८. हिमाचलप्रदेशस्य अभिधृतिः भूमिसुधारणा च अधिनियमः, १९७२ (१९७४ वर्षस्य हिमाचलप्रदेशस्य अधिनियमः ८)।

१३९. हिमाचलप्रदेशस्य ग्रामसामान्यभूमीनां निधानं उपयोजनं च अधिनियमः, १९७४ (१९७४ वर्षस्य हिमाचलप्रदेशस्य अधिनियमः १८)।

१४०. कर्णाटकभूमिसुधारणा (द्वितीयं संशोधनं प्रकीर्णोपबन्धाश्च) अधिनियमः, १९७४ (१९७४ वर्षस्य कर्णाटकस्य अधिनियमः ३१)।

१४१. कर्णाटकस्य भूमिसुधारणा (द्वितीयं संशोधनं) अधिनियमः, १९७६ (१९७६ वर्षस्य कर्णाटकस्य अधिनियमः २७)।

१४२. केरलस्य निःसारणात् निवारणं अधिनियमः, १९६६ (१९६६ वर्षस्य केरलस्य अधिनियमः १२)।

१४३. "तिरुप्पुवारम्" सन्दायस्य (उत्सादनं) अधिनियमः, १९६९ (१९६९ वर्षस्य केरलस्य अधिनियमः १९)।

१४४. "श्रीपादम्" भूमीनां विमुक्तिः अधिनियमः, १९६९ (१९६९ वर्षस्य केरलस्य अधिनियमः २०)।

१४५. "श्रीपण्डारवक" भूमीनां (निधानं विमुक्तिश्च) अधिनियमः १९७१ (१९७१ वर्षस्य केरलस्य अधिनियमः २०)।

१४६. केरलस्य व्यक्तीनां स्वत्वे स्थितवनानां (निधानं विमुक्तिश्च) अधिनियमः, १९७१ (१९७१ वर्षस्य केरलस्य अधिनियमः २६)।

१४७. केरलस्य कृषिकर्मकाराः अधिनियमः, १९७४ (१९७४ वर्षस्य केरलस्य अधिनियमः १८)।

१४८. केरलस्य "काजू" कर्मशालानां (अर्जनं) अधिनियमः, १९७४ (१९७४ वर्षस्य केरलस्य अधिनियमः २९)।

१४९. केरलस्य चिट्ठी-अधिनियमः, १९७५ (१९७५ वर्षस्य केरलस्य अधिनियमः २३)।

१५०. केरलस्य अनुसूचित जनजातीनां (भूमीनां अन्तरणे निर्बन्धनं तथा च अन्य सङ्क्रान्तभूमीनां प्रत्यावर्तनं) अधिनियमः, १९७५ (१९७५ वर्षस्य केरलस्य अधिनियमः ३१)।

## नवमी अनुसूची

१५१. केरलस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९७६ (१९७६ वर्षस्य केरलस्य अधिनियमः १५) ।

१५२. "काणम्" अभिधृतेः उत्सादनं अधिनियमः, १९७६ (१९७६ वर्षस्य केरलस्य अधिनियमः १६) ।

१५३. मध्यप्रदेशस्य कृषिकधृतीनां अधिकतमसीमाः (संशोधनं) अधिनियमः, १९७४ (१९७४ वर्षस्य मध्यप्रदेशस्य अधिनियमः २०) ।

१५४. मध्यप्रदेशस्य कृषिकधृतीनां अधिकतमसीमाः (संशोधनं) अधिनियमः, १९७५ (१९७६ वर्षस्य मध्यप्रदेशस्य अधिनियमः २) ।

१५५. पश्चिमखानदेशस्य मेह्वासी सम्पत्सु (साम्पत्तिकाधिकारोत्सादनादीनि) विनियमः, १९६१ (१९६२ वर्षस्य महाराष्ट्रस्य विनियमः १) ।

१५६. महाराष्ट्रस्य अनुसूचित जनजातिभ्यः भूमीनां प्रत्यावर्तनं अधिनियमः, १९७४ (१९७५ वर्षस्य महाराष्ट्रस्य अधिनियमः १४) ।

१५७. महाराष्ट्रस्य कृषिभूमिनां (अधिकतमधृतिसीमायाः न्यूनीकरणं) (संशोधनं) च अधिनियमः १९७२ (१९७५ वर्षस्य महाराष्ट्रस्य अधिनियमः २१) ।

१५८. महाराष्ट्रस्य व्यक्तीनां स्वत्वे स्थितवनानां (अर्जनं) अधिनियमः, १९७५ (१९७५ वर्षस्य महाराष्ट्रस्य अधिनियमः २९) ।

१५९. महाराष्ट्रस्य कृषिभूमीनां (अधिकतमधृतिसीमायाः न्यूनीकरणं) (संशोधनं) च संशोधनाधिनियमः, १९७५ (१९७५ वर्षस्य महाराष्ट्रस्य अधिनियमः ४७) ।

१६०. महाराष्ट्रस्य कृषिभूमिनां (धृतीनां अधिकतमसीमा) (संशोधनं) अधिनियमः, १९७५ (१९७६ वर्षस्य महाराष्ट्रस्य अधिनियमः २) ।

१६१. ओडिश्शाराज्यस्य सम्पदां उत्सादनं अधिनियमः, १९५१ (१९५२ वर्षस्य ओडिश्शा राज्यस्य अधिनियमः १) ।

१६२. राज्यस्थाने उपनिवेशनं अधिनियमः, १९५४ (१९५४ वर्षस्य राजस्थानस्य अधिनियमः २७) ।

१६३. राजस्थानस्य भूमिसुधारणा तथा भूस्वामिनां सम्पदां अर्जनं अधिनियमः, १९६३ (१९६४ वर्षस्य राजस्थानस्य अधिनियमः ११) ।

१६४. राजस्थानस्य कृषिभूधृतिषु अधिकतमसीमाधिरोपणं (संशोधनं) अधिनियमः, १९७६ (१९७६ वर्षस्य राजस्थानस्य अधिनियमः ८) ।

१६५. राजस्थानस्य अभिधृतिः (संशोधनं) अधिनियमः, १९७६ (१९७६ वर्षस्य राजस्थानस्य अधिनियमः १२) ।

१६६. तमिलनाडुराज्यस्यस्य भूमि-सुधारणा (अधिकतमभूमिसीमायाः न्यूनीकरणं) अधिनियमः, १९७० (१९७० वर्षस्य तमिलनाडु राज्यस्य अधिनियमः १७) ।

१६७. तमिलनाडुराज्यस्य भूमिसुधारणा (अधिकतमभूमिसीमायाःनियतनं) संशोधनं अधिनियमः, १९७१ (१९७१ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः ४१) ।

## नवमी अनुसूची

१६८. तमिलनाडुराज्यस्य भूमिसुधारणा (अधिकतमभूमिसीमायाः नियतनं) संशोधनं अधिनियमः, १९७२ (१९७२ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः १०)।

१६९. तमिलनाडुराज्यस्य भूमिसुधारणा (अधिकतमभूमिसीमायाः नियतनं) द्वितीयं संशोधनं अधिनियमः, १९७२(१९७२ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः २०)।

१७०. तमिलनाडुराज्यस्य भूमिसुधारणा (अधिकतमभूमिसीमायाः नियत नं) तृतीयं संशोधनं अधिनियमः, १९७२(१९७२ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः ८७)।

१७१. तमिलनाडुराज्यस्य भूमिसुधारणा (अधिकतमभूमिसीमायाः नियतनं) चतुर्थसंशोधनं अधिनियमः, १९७२ (१९७२ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः ३९)।

१७२. तमिलनाडूराज्यस्य भूमिसुधारणा (अधिकतमभूमिसीमायाः नियतनं) षष्ठं संशोधनं अधिनियमः, १९७२ (१९७४ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः ७)

१७३. तमिलनाडुराज्यस्यभूमिसुधारणा (अधिकतमभूमिसीमायाः नियतनं) पञ्चमं संशोधनं अधिनियमः १९७२(१९७२ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः १०)।

१७४. तमिलनाडूराज्यस्य भूमिसुधारणा (अधिकतमभूमिसीमायाः नियतनं) संशोधनं अधिनियमः १९७४ (१९७४ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः १५)।

१७५. तमिलनाडुराज्यस्यभूमिसुधारणा (अधिकितमभूमिसीमायाः नियतनं) तृतीयं संशोधनं अधिनियमः, १९७४ (१९७४ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः ३०)।

१७६. तमिलनाडुराज्यस्य भूमिसुधारणा (अधिकतमभूमिसीमायाः नियतनं) द्वितीयं संशोधनं अधिनियमः, १९७४(१९७४ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः ३२)।

१७७. तमिलनाडुराज्यस्य भूमिसुधारणा (अधिकतमभूमिसीमायाः नियतनं) संशोधनं अधिनियमः, १९७५ (१९७५ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः ११)।

१७८. तमिलनाडुराज्यस्य भूमिसुधारणा (अधिकतमभूमिसीमायाः नियतनं) द्वितीयं संशोधनं अधिनियमः १९७५ (१९७५ वर्षस्य तमिलनाडुराज्यस्य अधिनियमः २१)।

१७९. उत्तरप्रदेशस्य भूमि विधीनां (संशोधनं) अधिनियमः, १९७१ (१९७१ वर्षस्य उत्तरप्रदेशस्य २१) तथा उत्तरप्रदेशस्य भूमिविधिनां (संशोधनं) अधिनियमः, १९७४ (१९७४ वर्षस्य उत्तरप्रदेशस्य ३४) इत्येताभ्यां उत्तरप्रदेशस्य जमीनदार्याः, विनाशः तथा भूमि व्यवस्था अधिनियमः, १९५१ (१९५१ वर्षस्य उत्तरप्रदेशस्य १ इत्येतस्मिन् कृतानि संशोधनानि।

१८०. उत्तरप्रदेशस्य भूधृतिषु अधिकतमसीमारोपणं (संशोधनं) अधिनियमः, १९७६ (१९७६ वर्षस्य उत्तर-प्रदेशस्य अधिनियमः २०)।

१८१. पश्चिमबङ्गालस्य भूमिसुधारणा (द्वितीयं संशोधनं) अधिनियमः, १९७२(१९७२ वर्षस्य पश्चिमबङ्गालस्य अधिनियमः २८)।

१८२. पश्चिमबङ्गालस्य अन्यसङ्क्रान्तभूमिप्रत्यावर्तनं अधिनियमः, १९७३ (१९७३ वर्षस्य पश्चिमबङ्गालस्य अधिनियमः २३)।

**नवमी अनुसूची**

१८३. पश्चिमबङ्गालस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९७४ (१९७४ वर्षस्य पश्चिमबङ्गालस्य अधिनियमः ३३)।

१८४. पश्चिमबङ्गालस्य भूमिसुधारणा (संशोधनं) अधिनियमः १९७५ (१९७५ वर्षस्य पश्चिबङ्गालस्य अधिनियमः २३)।

१८५. पश्चिमबङ्गालस्य भूमिसुधारणा (संशोधनं) अधिनियमः, १९७६ (१९७६ वर्षस्य पश्चिमबङ्गालस्य अधिनियमः १२)।

१८६. दिल्लीराज्यक्षेत्रस्य भूधृतिषु (अधिकतमसीमा) संशोधनं अधिनियमः, १९७६ (१९७६ वर्षस्य केन्द्रीयाधिनियमः १५)।

१८७. गोवा-दमण-दीवक्षेत्रस्य मुण्डकाराणां (निःसारणात् संरक्षणं) अधिनियमः, १९७५ (१९७६ वर्षस्य गोवा-दमण-दीवक्षेत्रस्य अधिनियमः १)।

१८८. पाण्डिचेरिक्षेत्रस्य भूमिसुधारणा (अधिकतमभूमिसीमायाः नियतनं) अधिनियमः, १९७३ (१९७४ वर्षस्य पाण्डिचेरिक्षेत्रस्य अधिनियमः ९)।

[1][१८९. असमस्य (अस्थायिरूपेण व्यवस्थापितक्षेत्राणि) अभिधृतिः अधिनियमः १९७१ (असमस्य १९७१ वर्ष २३)।

१९०. असमस्य (अस्थायिरूपेण व्यवस्थापितक्षेत्राणि) अभिधृतिः (संशोधनं) अधिनियमः १९७४ (असमस्य १९७४ वर्षस्य १८)।

१९१. बिहारस्य भूमिसुधारणा (अधिकतमसीमानिर्धारणं अतिरिक्तभूमेः अर्जनं च) (संशोधनं) (संशोधकः) अधिनियमः १९७४ (बिहारस्य १९७५ वर्षस्य १३)।

१९२. बिहारस्य भूमिसुधारणा (अधिकतमसीमानिर्धारणं अतिरिक्तभूमेः अर्जनं च) (संशोधनं) अधिनियमः १९७६ (बिहारस्य १९७६ वर्षस्य २२)

१९३. बिहारस्य भूमिसुधारणा (अधिकतमसीमानिर्धारणं अतिरिक्तभूमेः अर्जनं च) (संशोधनं) अधिनियमः, १९७८ (बिहारस्य १९७८ वर्षस्य ७)।

१९४. भूमेः अर्जनं (बिहारसंशोधनं) अधिनियमः, १९७९ (बिहारस्य १९८० वर्षस्य २)।

१९५. हरियाणाराजस्य भूधृतेः अधिकतमसीमा (संशोधनं) अधिनियमः, १९७७ (हरियाणाराज्यस्य १९७७ वर्षस्य १४)।

१९६. तमिलनाडुराज्यस्य भूमिसुधारणा (भूमेः अधिकतमसीमानिर्धारणं) संशोधनं अधिनियमः, १९७८ (तमिलनाडुराज्यस्य १९७८ वर्षस्य २५)।

१९७. तमिलनाडुराज्यस्य भूमिसुधारणा (भूमेः अधिकतमसीमाधारणं) संशोधनं अधिनियमः, १९७९ (तमिलनाडुराज्यस्य १९७९ वर्षस्य ११)।

---

१. संविधानस्य (सप्तचत्वारिंशत्तमं संशोधनं) अधिनियमः, १९८४ इत्यस्य २-अनुभागेन १८९तः २०२ यावत् प्रविष्ट्यः परिवर्धिताः।

## नवमी अनुसूची

१६८. उत्तरप्रदेशस्य जमीनदारी उत्स ादनविधिः (संशोधनं) अधिनियमः, १६७८ (उत्तरप्रदेशस्य १६७८ वर्षस्य १५)।

१६६. पश्चिमबङ्गालस्य अन्यसङ्क्रामितभूमेः प्रत्यावर्तनं (संशोधनं) अधिनियम, १६७८ (पश्चिमबङ्गालस्य १६७८ वर्षस्य ५४)।

२००. पश्चिमबङ्गालस्य अन्यसङ्क्रामित भूमेः प्रत्यावर्तनं (संशोधनं) अधिनियमः, १६८० (पश्चिमबङ्गालस्य १६८० वर्षस्य ५६)।

२०१. गोवा-दमण-दीवक्षेत्रस्य कृषि-अभिधृतिः अधिनियमः, १६६४ (गोवा-दममण-दीवक्षेत्रस्य १६६४ वर्षस्य ७)।

२०२. गोवा-दमण-दीवक्षेत्रस्य कृषिअभिधृतिः (पंचमं संशोधनं) अधिनियमः, १६७६ (गोवा-दमण-दीवक्षेत्रस्य १६७६ वर्षस्य १७)।]

**स्पष्टीकरणम्**—राजस्थानस्य अभिधृतिः अधिनियमः, १६५५ (१६५५ वर्षस्य राजस्थानस्य अधिनियमः ३) इत्यस्य अधीनं किमपि अर्जनं, यावन्मात्रं ३१अ-अनुच्छेदस्य (१) खण्डस्य द्वितीय-पारन्तुकस्य उल्लङ्घनेन कृतं भवेत् तावन्मात्रं शून्यं भवेत्।

## दशमी अनुसूची

[अ-भागः — सिक्किमस्य राज्यक्षेत्राणि

आ-भागः — सिक्किमस्य सङ्घेन सहयोजनस्य निबन्धनानि प्रतिबन्धनानि च]

संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य ५-अनुभागेन एषा अनुसूची निरसिता (२६-४-१९७५ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

## परिशिष्टम्—१

### [1]सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः, १९५४

(सां आ० ४८)

सांविधानस्य ३७०-तमानुच्छेदस्य (१) खण्डेन प्रदत्तनां शक्तीनां प्रयोगं कुर्वन् राष्ट्रपतिः, जम्मू-कश्मीर-राज्यस्य सहमत्या, निम्नलिखितं आदेशं करोति—

१. (१) एषः आदेशः संविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः, १९५४ इति उक्तः भवेत्।

(२) एषः १९५४ वर्षस्य मेमासस्य चतुर्दशे दिनाङ्के प्रवृत्तः भवेत्; ततः परं च सः सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः, १९५० इत्येनं अधिक्रमेत्।

२. [2][संविधानस्य उपबन्धाः १९६४-तमवर्षस्य जूनमासस्य २०-तमे दिनाङ्के यथाविद्यमानाः, तथा च संविधानस्य (एकोनविंशतितमं संशोधनं) अधिनियमः, १९६६ संविधानस्य (एकविंशतितमं संशोधनं) अधिनियमः, १९६७; संविधानस्य (त्रयोविंशतितमं संशोधनं) अधिनियमः, १९६९; इत्यस्य ५-अनुभागः; संविधानस्य (चतुर्विंशतितमं संशोधनं) अधिनियमः, १९७१; संविधानस्य (पञ्चविंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य २-अनुभागः; संविधानस्य (षड्विंशतितमं संशोधनं) अधिनियमः, १९७१; संविधानस्य (त्रिंशत्तमं संशोधनं) अधिनियमः, १९७२; संविधानस्य (एकत्रिंशत्तमं संशोधनं) अधिनियमः, १९७३ इत्यस्य २-अनुभागः; संविधानस्य (त्रयस्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७४ इत्यस्य २-अनुभागः; संविधानस्य (अष्टत्रिंशत्तमं, संशोधनं) अधिनियमः, १९७५ इत्यस्य २, ५, ६, ७ अनुभागाः; संविधानस्य (नवत्रिंशत्तमं संशोधनं) अधिनियमः १९७५ तथा संविधानस्य (चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७६ इत्येतैः उपबन्धैः यथासंशोधिताः संविधानस्य उपबन्धाः प्रथमेन, ३७०-तमेन च अनुच्छेदेन सह जम्मू-कश्मीरराज्यस्य सम्बन्धे येषां अपवादानां उपान्तरणानां च अधीनं अनुप्रयुक्ताः भवेयुः, ते यथानिम्नलिखिताः भवेयुः—]

(१) **प्रस्तावना**

(२) **भागः १**

३-तमे अनुच्छेदे निम्नलिखितः, अपरः पारन्तुकः परिवर्धितः भवेत्, तद्यथा—

---

१. विधि मंत्रालयस्य सां० नि०आ० १६१० क्रमाङ्कितया १४-५-१९५४ दिनाङ्कितया अधिसूचनया सह भारतस्य राज्यपत्रस्य असाधारणे अङ्के २-भागे, ३-अनुभागे ८२१ पृष्ठे प्रकटितः।

२. आद्याः शब्दाः अनुक्रमशः, सां० आ० ५६, सां० आ० ७४, सां० आ० ७६, सां० आ० ७९, सां० आ० ८९, सां० आ० ९१, सां० आ० ९४, सां० आ० ९८, सां० आ० १०३, सां० आ० १०४, सां० आ० १०५, तथा सां० आ० १०८ इत्येतैः आदेशैः संशोधिताः इदं रूपं प्राप्तवन्तः।

**परिशिष्टम्—१**

"अपरंच, जम्मू-कश्मीरराज्यस्य क्षेत्रं वर्धयितुं, ह्रासयितुं, वा तस्य नाम परिवर्तयितुं, सीमां परिवर्तयितुं वा उपबन्धनार्थं किमपि विधेयकं तद्राज्यस्य विधानमण्डलस्य सम्मतिं विना संसदि न पुरःस्थाप्येत ।"

(३) **भागः २**

(क) एषः भागः जम्मू-कश्मीरराज्यस्य सम्बन्धे १९५० वर्षस्य जान्युआरीमासस्य २६-दिनाङ्कात् अनुप्रयुक्तः अभूत् इति इव मन्येत ।

(ख) ७-तमे अनुच्छेदे निम्नलिखितः अपरः पारन्तुकः परिवर्धितः भवेत्, तद्यथा—

"अपरं च, एतदनुच्छेदगतं किमपि जम्मू-कश्मीरराज्यस्य तं स्थायिनिवासिनं न विषयीकुर्यात् यः पाकिस्ताने समाविष्टं राज्यक्षेत्रं एवं प्रव्रजितः भूत्वा, तद्राज्यस्य विधानमण्डलेन निर्मितस्य कस्यचिद् अपि विधेः प्राधिकारेण, तदधीनं वा दत्ताज्ञानुसारं तस्मिन् राज्ये पुनर्वासार्थं, स्थायिप्रत्यावर्तनार्थं वा तद्राज्यस्य क्षेत्रं प्रति निवृत्तः अस्ति; तथा च एतादृशः प्रत्येकं जनः भारतस्य नागरिकः इति मन्येत ।"

(४) **भागः ३**

(क) १३-तमे अनुच्छेदे संविधानस्य प्रारम्भं प्रति निर्देशः एतदादेशस्य प्रारम्भं प्रति निर्देशः अस्ति इति अर्थः ग्राह्यः ।

(ख) १५-तमस्य अनुच्छेदस्य (४) खण्डे अनुसूचितजनजातीः प्रति निर्देशः लोपितः भवेत् ।

(ग) १६-तमस्य अनुच्छेदस्य (३) खण्डे राज्यं प्रति निर्देशः जम्मू-कश्मीरराज्यं प्रति निर्देशं नान्तर्भावयति इति अर्थः ग्राह्यः ।

(घ) १९-तमे अनुच्छेदे एतदादेशस्य प्रारम्भात् [1][पञ्चविंशतिवर्षाणां] कालावध्यर्थं—

(प्रथमः) (३) खण्डे, (४) खण्डे च "हितानां अर्थे" इत्येताभ्यां शब्दाभ्यां अनन्तरं "राज्यस्य सुरक्षायाः अर्थे वा" इति शब्दाः अन्तर्वेशिताः भवेयुः;

(द्वितीयः) (५) खण्डे "कस्याः अपि अनुसूचितायाः जनजातेः हितानां संरक्षणाय" इत्येतेभ्यः शब्देभ्यः प्रति "अथवा राज्यस्य सुरक्षायाः हितानां अर्थे" इति शब्दाः संनिवेशिताः भवेयुः; तथा

(तृतीयः) निम्नलिखितः नूतनः खण्डश्च परिवर्धितः भवेत्, तद्यथा—

'(७) (२), (३), (४), (५) खण्डेषु स्थिताभ्यां "युक्तियुक्तानि निर्बन्धनानि" इति पदाभ्यां "समुचितविधानमण्डलं यादृशानि युक्तियुक्तानि मन्यते तादृशानि निर्बन्धनानि" अभिप्रेयन्ते इति इव अर्थः ग्राह्यः ।'

(ङ) २२-तमस्य अनुच्छेदस्य (४) खण्डे, (७) खण्डे च "संसद्" इति शब्दात् प्रति "तद्राज्यस्य विधानमण्डलं" इति शब्दाः संनिवेशिताः भवेयुः ।

---

१. ६९-सांविधानिकादेशेन "दशवर्षाणां" इत्येतस्मात् प्रति "विंशतिवर्षाणां" इत्येतत् संनिवेशितं आसीत्; ततः परं ९७-सांविधानिकादेशेन "विंशतिवर्षाणां" इत्येतस्मात् प्रति "पञ्चविंशतिवर्षाणां" इत्येतत् संनिवेशितम् ।

(च) ३१-तमे अनुच्छेदे (३), (४), (६)खण्डा: लोपिता: भवेयु:, तथा (५) खण्डात् प्रति निम्न-लिखित: खण्ड: संनिवेशित: भवेत्, तद्यथा—

"(५) (२) खण्डगतं किमपि न प्रभावयेत्—

(क) कस्यापि विद्यमानस्य विधे: उपबन्धान्; अथवा

(ख) अत: परं, राज्यं—

(प्रथम:) कस्यापि करस्य शास्ते: वा अधिरोपणार्थं, उद्ग्रहणार्थं वा;

(द्वितीय:) लोकस्वास्थ्यस्य संवर्धनार्थं; जीवनसम्बन्धे, सम्पत्तिसम्बन्धे च, भयस्य निवारणार्थं;

(तृतीय:) विधिना "निष्क्रान्ता सम्पत्ति:" इति उद्घोषिताया: सम्पत्ते: सम्बन्धे वा, यं कमपि विधिं निर्मिमेत तस्य उपबन्धान्"

(छ) ३१अ-तमे अनुच्छेदे, (१) खण्डस्य पारन्तुक: लोपित: भवेत्, तथा (२) खण्डस्य (क) उपखण्डात्

प्रति निम्नलिखित: उपखण्ड: संनिवेशित: भवेत्, तद्यथा—

'(क) "सम्पद्" इत्येतया अभिप्रेयते सा भूमि: या, कृषिकर्मप्रयोजनानां अथवा कृषि-कर्मसाधकप्रयोजनानां अर्थे, अथवा यवसक्षेत्रार्थे धृता अथवा भाटकेन प्रदत्ता अस्ति; तस्यां च अन्तर्भवन्ति—

(प्रथम:) एतादृश्यां भूमौ स्थितानि भवनस्थानानि अन्या: संरचनाश्च;

(द्वितीय:) एतादृश्यां भूमौ स्थिता: वृक्षा;

(तृतीय:) वन्यभूमि: तथा वृक्षावृता अनुर्वरभूमिश्च;

(चतुर्थ:) जलावृता भूमि: जलप्लवक्षेत्राणि च;

(पञ्चम:) जन्दराणां, घराटानां च स्थानानि;

(षष्ठ:) "जागीर" "इनाम" "मुआफी" अथवा "मुकर्ररी", इति नामभि: अनुदत्ता कापि भूमि:, एतादृशानि अन्यानि अनुदानानि च;

किन्तु तस्यां नान्तर्भवन्ति—

(प्रथम:) कस्मिन् अपि नगरे, नगरसीमाक्षेत्रे, "आबादी" ग्रामे वा स्थितस्य भवनस्य स्थलं, तादृशभवनेन, स्थलेन वा अनुलग्ना भूमिश्च;

(द्वितीय:) नगरस्थलरूपेण, ग्रामस्थलरूपेण वा धृता कापि भूमि;

(तृतीय:) नगरपालिकायां, अधिसूचितक्षेत्रे, कटकक्षेत्रे, नगरक्षेत्रे, अथवा यस्यार्थं नगरायोजनप्रबन्ध: अनुज्ञात: विद्यते तादृशे क्षेत्रे भवननिर्माणार्थं आरक्षिता भूमिश्च ।'

**परिशिष्टम्—१**

[1][ (ज) ३२-तमे अनुच्छेदे (३) खण्डः लोपितः भवेत् ]

(झ) ३५-तमे अनुच्छेदे—

(प्रथमः) संविधानस्य प्रारम्भं प्रति निर्देशाः एतदादेशस्य प्रारम्भं प्रति निर्देशाः सन्ति इति इव अर्थः ग्राह्यः ।

(द्वितीयः) (क) (प्रथमे) खण्डे "१६-तमानुच्छेदीय (३) खण्डस्य, ३२-तमानुच्छेदीय (३) खण्डस्य" इति अक्षरः, शब्दाः कोष्ठकाश्च लोपिताः भवेयुः,

(तृतीयः) (ख) खण्डात् परं निम्नलिखितः खण्डः परिवर्धितः भवेत्; तद्यथा—

"(ग) जम्मू-कश्मीरराज्यस्य विधानमण्डलेन सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः, १९५४ इत्यस्य प्रारम्भात् पूर्वं ततः परं वा निवारकनिरोधाय निर्मितः कोपि विधिः, सः एतद्भागस्य उपबन्धैः असङ्गतः अस्ति इति आधारेण शून्यः न भवेत्, किन्तु एतादृशः कोपि विधिः एतादृश्याः असङ्गतेः पर्यन्तं एतदादेशस्य प्रारम्भात् [2][पञ्चविंशति-वर्षाणां] समाप्तौ प्रभावात् विरतः भवेत्, एतादृश्याः समाप्तेः प्राक् कृतानां अकृतानां वा कृत्यानां सम्बन्धं विहाय ।"

(ञ) ३५-तमात् अनुच्छेदात् परं निम्नलिखितः अनुच्छेदः परिवर्धितः भवेत्; तद्यथा—

"**३५अ. स्थायिनिवासिभिः तेषां अधिकारैश्च सम्बद्धानां विधीनां व्यावृत्तिः**—एतत् संविधाने किमपि सत्यपि जम्मू-कश्मीरराज्ये प्रवृत्तः कोपि विद्यमानविधिः तथा अतः परं तद्राज्यस्य विधान-मण्डलेन निर्मितः विधिः—

(क) जम्मू-कश्मीरराज्यस्य ये स्थायिनिवासिनः जनवर्गाः सन्ति, भविष्यन्ति वा तान् परिभाषयन्,

(ख) (प्रथमः) राज्यशासनाधीनं नियोजनस्य;

(द्वितीयः) राज्ये स्थावरसम्पतेः अर्जनस्य;

(तृतीयः) राज्ये स्थिरीभवनस्य;

(चतुर्थः) राज्यस्य शासनं यादृशं उपबन्धयेत् तादृशस्य शिष्यवृत्यधिकारस्य तथा तादृशरूपाणां अन्यसाहाय्यानां,

विषये एतादृशेभ्यः स्थायिनिवासिभ्यः कान् अपि असामान्याधिकारान् विशेषाधिकारान् वा प्रददन्, अथवा अन्येषु जनेषु कानि अपि निर्बन्धनानि आरोपयन् कोपि विधिः शून्यः न भवेत् एतदाधारेण यत् सः अस्य भागस्य केनापि उपबन्धेन भारतस्ति नागरिकेभ्यः प्रदत्तैः कैः अपि अधिकारैः असङ्गतः अस्ति अथवा तान् कान् अपि अपहरति, अल्पीकरोति वा इति ।"

---

१. ८९-सांविधानिकादेशेन "(ज)" खण्डात् प्रति एषः खण्डः संनिवेशितः ।

२. ६९-सांविधानिकादेशेन "दशवर्षाणां" इत्येतस्मात् प्रति "विंशतिवर्षाणां" इत्येतत् संनिवेशितं आसीत्, ततः परं ९७-सांविधानिकादेशेन "विंशतिवर्षाणां इत्येतस्मात् प्रति "पञ्चविंशतिवर्षाणां" इत्येतत् संनिवेशि-तम ।

**परिशिष्टम्—१**

(५) **भाग : ५**

[1][ (क) ५५-तमानुच्छेदस्य प्रयोजनानां अर्थे जम्मू-कश्मीरराज्यस्य जनसङ्ख्या त्रिषष्टिलक्षमिता अस्ति इति मन्येत।

(ख) ८१-तमे अनुच्छेदे (२),(३) खण्डाभ्यां प्रति निम्नलिखितौ खण्डौ संनिवेशितौ भवेताम्, तद्यथा—
"(२) (१) खण्डस्य (क) उपखण्डस्य प्रयोजनानां अर्थे—

(क) राज्याय लोकसभायां षट्स्थानानि आवण्टितानि भवेयुः;

(ख) परिसीमनाधिनियमः, १९७२ इत्यस्य अधीनं घटितेन परिसीमनायोगेन, यां सः योग्यां मन्येत तादृश्याः प्रक्रियायाः अनुसारं, राज्यं एकसदस्यीयेषु निर्वाचनक्षेत्रेषु विभाजितं भवेत्;

(ग) यावत्पर्यन्तं क्रियात्मकं भवेत्, तावत्पर्यन्तं निर्वाचनक्षेत्राणि भौगोलिकरूपेण संहतानि क्षेत्राणि भवेयुः, तथा तेषां परिसीमने भौतिकलक्षणानि, प्रशासनीयैककानां विद्यमानाः सीमाः, सञ्चारसौकर्याणि, सार्वजनिकसुविधाश्च संलक्षितानि भवेयुः; तथा

(घ) येषु निर्वाचनक्षेत्रेषु राज्यं विभक्तं भवेत् तेषु पाकिस्तानधृतं क्षेत्रं सामाविष्टं न भवेत् ।

(३) परिसीमनाधिनियमः, १९७२ इत्यस्य अधीनं संसदीयनिर्वाचनक्षेत्राणां परिसीमनसम्बन्धे परिसीमनायोगस्य अन्तिमादेशस्य अन्तिमादेशानां वा भारतस्य राजपत्रे प्रकाशनदिनाङ्के विद्यमान-लोकसभासदनस्य यावत् विघटनं न भवेत्, तावत् (२) खण्डगतं किमपि लोकसभायां राज्यस्य प्रति-निधित्वं न प्रभावयेत् ।

(४) (क) परिसीमनायोगः राज्यस्य सम्बन्धे आत्मनः कर्तव्यतासु साहाय्यप्रदानार्थं, लोकसभायां राज्यस्य प्रतिनिधित्वधारिणः पञ्चजनान् आत्मना सहयोजितान् कुर्यात् ।

(ख) राज्यात् एवं सहयोजनीयाः जनाः लोकसभाध्यक्षेण सदनस्य रचनां यथोचितं संलक्ष्य, नामनिर्देशिताः भवेयुः ।

(ग) (ख) खण्डाधीनं कर्तव्यानि प्रथमनामनिर्देशनानि लोकसभाध्यक्षेण सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) द्वितीयं संशोधनं आदेशः, १९७४ इत्यस्य प्रारम्भात् मासद्वयाभ्यन्तरे क्रियेरन् ।

(घ) केषांचित् अपि सहयोजितसदस्यानां मतदाने अथवा परिसीमनायोगस्य निर्णयं हस्ताङ्कित-करणे अधिकारः न भवेत् ।

(ङ) यदि मृत्युना, त्यागपत्रेण वा, कस्यचित् सहयोजितस्य सदस्यस्य पदं रिक्तं भवति तर्हि तत्पदं लोकसभाध्यक्षेण यावत्व्यवहारशक्यं भवेत् तावत्शीघ्रं, तथा (क) खण्डस्य, (ख) खण्डस्य च अधीनं, पूरितं भवेत् ।"]

[2][ (ग) १३३-तमे अनुच्छेदे (१) खण्डात् परं निम्नलिखितः खण्डः अन्तर्वेशितः भवेत्, तद्यथा—

---

१. ९८-सांविधानिकादेशेन (क), (ख) खण्डाभ्यां प्रति एतौ खण्डौ संनिवेशितौ ।

२. ९८-सांविधानिकादेशेन अन्तर्वेशितः ।

**परिशिष्टम्—१**

'(१ अ) संविधानस्य (त्रिंशत्तमं संशोधनं) अधिनियमः, १९७२ इत्यस्य ३-अनुभागस्य उपबन्धाः एतदुपान्तरणस्य अधीनं जम्मू-कश्मीरराज्ये तथा अनुप्रयुक्ताः भवेयुः यथा एतस्मिन् "एषः अधिनियमः", "एतस्य अधिनियमस्य प्रारम्भः", "एषः अधिनियमः पारितः न आसीत्" तथा "एतेन अधिनियमेन यथा-संशोधितं" इत्येतानि प्रति निर्देशाः यथाक्रमं "सांविधानिकः (जम्मू-कश्मीर सम्बन्धे अनुप्रयोगः) द्वितीयं संशोधनं आदेशः, १९७४", "उक्तादेशस्य प्रारम्भः", "उक्तादेशः कृतः न भवेत्" तथा "उक्तादेशस्य प्रारम्भात् परं यथास्थितं" इत्येतानि प्रति निर्देशाः सन्ति, इति अर्थः गृहीतः भवेत् ।]

[1][(घ)] १३४-तमे अनुच्छेदे (२) खण्डे "संसद्" शब्दात् परं "राज्यस्य विधानमण्डलेन अभ्यर्थनायां कृतायां" इति शब्दाः अन्तर्वेशिताः भवेयुः ।]

[1][[ङ)] १३५-तमानुच्छेदः [2][ * * * *] १३९-तमानुच्छेदश्च लोपितौ भवेताम् ।

[3][ * * *

[4][(५ अ) भाग : ६

[5][(क) १५३ तः २१७ यावत् अनुच्छेदाः २१९ तमानुच्छेदः २२१ तमानुच्छेदः, २२३, २२४, २२४अ तथा २२५ तमानुच्छेदाः तथा च २२७तः २३७ यावत् अनुच्छेदाः लोपिताः भवेयुः ।]

(ख) २२०-तमानुच्छेदे "संविधान्स्य प्रारम्भं" प्रति निर्देशाः सांविधानिकः (जम्मू-कश्मीर सम्बन्धे अनुप्रयोगः) संशोधनं आदेशः, १९६० इत्येतत् प्रति निर्देशाः सन्ति इति अर्थः ग्राह्यः ।

[6][(ग) २२२-तमानुच्छेदे (१) खण्डात् परं निम्नलिखितः नूतनः खण्डः अन्तर्वेशितः भवेत्, तद्यथा—

"(१ अ) जम्मू-कश्मीरस्य उच्चन्यायालयात् तस्मिन् उच्चन्यायालये वा प्रत्येकं स्थानान्तरणं राज्यपालेन सह परमर्शात् परं क्रियेत" ।]]

(६) भागः ११

[7][(क) २४६-तमानुच्छेदे (१) खण्डगतेभ्यः "(२),(३) खण्डे" इत्येतेभ्यः, कोष्ठकाभ्यां अङ्काभ्यां शब्दात् च प्रति "(२) खण्डे" इति कोष्ठकं, अङ्कः, शब्दश्च संनिवेशतानि भवेयुः; तथा (२)खण्डे "(३) खण्डे किमपि सत्यपि" इति कोष्टकं, अङ्कः शब्दाश्च, तथा (३),(४) खण्डौ पूर्णौ, लोपितानि भवेयुः]

---

१. ९८-सांविधानिकादेशेन (ग), (घ) खण्डौ (घ), (ङ) इति पुनरङ्कितौ ।

२. ६०-सांविधानिकादेशेन "१३६" इत्येषः क्रमाङ्कः लोपितः ।

३. ५६-सांविधानिकादेशेन (च), (छ) खण्डौ लोपितौ ।

४. ६०-सांविधानिकादेशेन अन्तर्वेशितः (२६-१-१९६० दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

५. ८९-सांविधानिकादेशेन (क) खण्डात् प्रति एषः खण्डः संनिवेशितः ।

६. ७४-सांविधानिकादेशेन (ग) खण्डात् प्रति एषः खण्डः संनिवेशितः (२४-११-१९६५ दिनाङ्कात् प्रवर्तमान-प्रभावेण) ।

७. ६६-सांविधानिकादेशेन (क) खण्डात् प्रति एषः खण्डः संनिवेशितः ।

**परिशिष्टम्—१**

[1][[2][(ख) २४८-तमानुच्छेदात् प्रति निम्नलिखितः अनुच्छेदः संनिवेशितः भवेत्, तद्यथा—

"२४८. **अवशिष्टाः विधानशक्तयः**—

(क) भारतस्य पूर्णप्रभुतायाः क्षेत्रीयायाः अखण्डतायाश्च अपलापः, प्रश्नगतकरणं, विदारणं च, अथवा भारतराज्यक्षेत्रस्य कस्यचिद् भागस्य परिविरतेः, अथवा भारतराज्यक्षेत्रस्य कस्यचिद् भागस्य सङ्घात् पृथग्भावस्य संसाधनं, अथवा भारतस्य राष्ट्रध्वजस्य भारतस्य राष्ट्रगीतस्य, संविधानस्य वा अवमानकरणं इत्येतानि उद्दिश्य निर्देशितानां क्रियाकलापानां निरोधस्य सम्बन्धे ;

(ख) (प्रथमः) समुद्रमार्गेण, वायुमार्गेण वा विदेशयात्रायां;

(द्वितीयः) आन्तरिकवायुमार्गयात्रायां;

(तृतीयः) धनादेशान्, स्वरलेखनं, दूरलेखनं च, अन्तर्भावयत्सु प्रेषणीयवस्तुषु च,

कराणां सम्बन्धे, कमपि विधिं निर्मातुं संसदः अनन्यप्रयोज्या शक्तिः अस्ति ।"]

(खख) २४९-तमानुच्छेदः लोपितः भवेत् ।"]

(ग) २५०-तमानुच्छेदे—"राज्यसूच्यां प्रगणितानां विषयाणां अन्यतमं कमपि" इत्येतेभ्यः शब्देभ्यः प्रति, "सङ्घसूच्यां अप्रगणितानां विषयाणां अन्यतमं कमपि" इत्येते शब्दाः संनिवेशिताः भवेयुः ।

(घ) २५१ तमानुच्छेदे—"२४९, २५०-तमानुच्छेदेगतं" इति अङ्केभ्यः शब्दात् च प्रति २५०-तमानुच्छेदेगतं" इति अङ्काः शब्दश्च संनिवेशिताः भवेयुः तथा "संविधानस्य अधीनं" इति शब्दौ लोपितौ भवेताम्; तथा "उक्तानुच्छेदयोः अन्यतरस्य अधीनं" इति शब्देभ्यः प्रति "उक्तानुच्छेदस्य अधीनं" इत्येतौ शब्दौ संनिवेशतौ भवेताम् ।

(ङ) २५३-तमानुच्छेदे निम्नलिखितः पारन्तुकः परिवर्धितः भवेत्, तद्यथा—

"परन्तु सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः, १९५४ इत्यस्य प्रारम्भात् परं जम्मू-कश्मीरराज्यस्य व्यवस्थां प्रभावयन् कोपि निर्णयः तद्राज्यस्य सम्मतिं विना, भारतशासनेन न क्रियेत ।"

[3][ * * * * ]

[4][(च)] २५५तमानुच्छेदः लोपितः भवेत् ।

---

१. ८५-सांविधानिकादेशेन (ख) खण्डात् प्रति एते खण्डाः संनिवेशिताः ।

२. ९३-सांविधानिकादेशेन (ख) खण्डात् प्रति एतौ खण्डौ संनिवेशितौ ।

३. ९९-सांविधानिकादेशेन (च) खण्डः लोपितः ।

४. उपर्युक्तादेशेन (छ) खण्डः '(च)', खण्डः इति पुनरङ्कितः ।

**परिशिष्टम्—१**

[१][(छ)] २५६-तमानुच्छेदः तदनुच्छेदस्य (१) खण्डः इति पुनः क्रमाङ्कितः भवेत् तथा तस्मिन् निम्नलिखितः नूतनः खण्डः परिवर्धितः भवेत् तद्यथा—

"(२) जम्मू-कश्मीरराज्यं स्वकार्यपालिकाशक्ति एवं प्रयोजयेत् येन संविधानस्य अधीनं तद्राज्यस्य सम्बन्धस्य कर्तव्यानां, कार्यभाराणां च सङ्घेन निर्वहणं सुकरं भवेत्, विशेषतश्च तद्राज्यं, यदि सङ्घेन अपेक्ष्येत तर्हि सङ्घस्य अर्थे, सङ्घस्य धनव्ययद्वारा च सम्पत्तेः अर्जनं, अधिग्रहणं वा कुर्यात्; तथा यदि तत्सम्पत्तिः राज्यस्य स्वत्वे स्थिता विद्यते तर्हि सङ्घाय एतादृशैः निबन्धनैः अन्तरिता भवेत्, येषु सहमतिः भवेत् तथा च सहमत्याः अभावे यथा भारतस्य मुख्यन्यायमूर्तिना नियुक्तेन मध्यस्थेन निर्णीतानि भवेयुः तथा।"

[२][ * * * * ]

[३][(ज)] २६१-तमानुच्छेदस्य (२) खण्डे "संसदा प्रणीतस्य" इति शब्दौ लोपितौ भवेताम्।

ः १२

[४][ * * * * ]

[५][(क)] २६७-तमानुच्छेदस्य (२) खण्डः, २७३ अनुच्छेदः, २८३-तमानुच्छेदस्य (२) खण्डः [६][तथा २९०-तमानुच्छेदश्च] लोपिताः भवेयुः।

[५][(ख)] २६६, २८२, २८४, २९८, २९९ तथा ३००तमानुच्छेदेषु राज्यं प्रति राज्यानां वा प्रति निर्देशाः जम्मू-कश्मीरराज्यं प्रति निर्देशान् नान्तर्भावयन्ति इति इव अर्थः ग्राह्यः।

[५][(ग)] २७७, २९५-तमानुच्छेदयोः, संविधानस्य प्रारम्भं प्रति निर्देशाः अस्यादेशस्य प्रारम्भं प्रति निर्देशाः सन्ति इति इव अर्थः ग्राह्यः।

(८) **भागः १३**

[७][ * * * ] ३०३-तमानुच्छेदस्य (१) खण्डे "सप्तमानुसूच्याः कस्यामपिसूच्यां व्यापार-वाणिज्य-सम्बन्धिन्याः कस्याः अपि प्रविष्टे आधारेण" इति शब्दाः लोपिताः भवेयुः।

[७][ * * * * ]

---

१. ६६-सांविधानिकादेशेन '(ज)' खण्डः '(छ)' खण्डः इति पुनरङ्कितः।

२. ५६-सांविधानिकादेशेन (झ) खण्डः लोपितः।

३. उपर्युक्तादेशेन (ञ) खण्डः, '(झ)' खण्डः इति क्रमाङ्कितः पुनश्च ६६-सांविधानिकादेशेन '(ज)' खण्डः इति क्रमाङ्कितः।

४. ५५-सांविधानिकादेशेन अन्तर्वेशितौ (क), (ख) खण्डौ ५६-सांविधानिकादेशेन लोपितौ।

५. ५५-सांविधानिकादेशेन '(क)'. '(ख)', '(ग)' खण्डाः क्रमशः '(ग)', '(घ)', '(ङ)' इति अङ्किताः आसन् ते च ५६-सांविधानिकादेशेन क्रमशः '(क)', '(ख)', '(ग)' इति पुनरङ्किताः।

६. ९४-सांविधानिकादेशेन "तथा २९०-२९१ अनुच्छेदौ" इत्येतस्मात् प्रति एतत् संनिवेशितम्।

७. ५६-सांविधानिकादेशेन कोष्ठकं, '(क)' इति अक्षरं च, (ख) खण्डश्च, लोपितानि।

**परिशिष्टम्—१**

(९) **भागः १४**

[1][३१२-तमानुच्छेदे "राज्यानां" इति शब्दात्परं (जम्मू-कश्मीरराज्यं अन्तर्भावयतां) इति कोष्ठकं शब्दाश्च अन्तर्वेशिताः भवेयुः ।]

[2][(१०) **भागः १५**

(क) ३२४-तमानुच्छेदस्य (१) खण्डे संविधानं प्रति निर्देशः, जम्मू-कश्मीरराज्यस्य विधानमण्डलस्य अन्यतरे सदने निर्वाचनस्य सम्बन्धे, जम्मू-कश्मीरराज्यस्य संविधानं प्रति निर्देशः अस्ति इति अर्थः ग्राह्यः ।

[3][(ख) ३२५, ३२६, ३२७ तथा ३२९-तमानुच्छेदेषु राज्यं प्रति निर्देशः जम्मू-कश्मीरराज्यं प्रति निर्देशं नान्तर्भावयति इति अर्थः ग्राह्यः ।

(ग) ३२८-तमानुच्छेदः लोपितः भवेत् ।

(घ) ३२९-तमानुच्छेदे "३२८-तमानुच्छेदस्य वा" इति अङ्काः शब्दौ च लोपिताः भवेयुः । ]

[4][(ङ) ३२९अ-तमानुच्छेदे (४), (५) खण्डौ लोपितौ भवेताम् ।]

(११) **भागः १६**

(क) ३३०-तमानुच्छेदे "अनुसूचितजातीः" प्रति निर्देशाः लोपिता भवेयुः ।

(ख) ३३१, ३३२, ३३३, ३३६, ३३७, ३३९ तथा ३४२ तमानुच्छेदाः लोपिताः भवेयुः ।

(ग) ३३४ तथा ३३५-तमानुच्छेदयोः राज्यं प्रति राज्यानां वा प्रति निर्देशाः, जम्मू-कश्मीरराज्यं प्रति निर्देशान् नान्तर्भावयन्ति इति अर्थः ग्राह्यः ।

(१२) **भागः १७**

एतद्भागस्य उपबन्धाः यावत् ते—

(प्रथमः) सङ्घस्य राजभाषां,

(द्वितीयः) एकराज्यस्य च अन्यराज्यस्य च मध्ये तथा राज्यस्य च सङ्घस्य च मध्ये पत्रव्यवहारार्थं राजभाषां,

(तृतीयः) उच्चतमन्यायालयस्य कार्यवहनभाषां च,

विषयीकुर्वन्ति तावत् पर्यन्तं एवं अनुप्रयुक्तानि भवेयुः ।

(१३) **भागः १८**

(क) ३५२-तमानुच्छेदे निम्नलिखितः नूतनः खण्डः परिवर्धितः भवेत्, तद्यथा—

---

१. ५६-संविधानिकादेशेन पूर्वकृतात् उपान्तरणात् प्रति एतत् संनिवेशितम् ।

२. ६०-सांविधानिकादेशेन (१०) उपप्रच्छेदं प्रति एषः उपप्रच्छेदः संनिवेशितः (२६-१-१९६० दिनाङ्कात् प्रवर्त्तमान प्रभावेण)।

३. ७५-सांविधानिकादेशेन (ख), (ग) खण्डाभ्यां प्रति एतौ खण्डौः संनिवेशितौः ।

४. १०५-सांविधानिकादेशेन अन्तर्वेशितम् ।

**परिशिष्टम्—१**

[1][(६)] आभ्यान्तर्याः अशान्त्याः अथवा संनिहितभयस्य आधारेणकृता कापि आपातस्य उद्घोषणा जम्मू-कश्मीरराज्यस्य सम्बन्धे (३५४-तमानुच्छेदस्य सम्बन्धं विहाय) तदा एव प्रभावकरी भवेत् [2][यदा—

(क) तद्राज्यस्य अनुरोधेन सहमत्या वा एव कृता भवेत्; अथवा

(ख) यत्र सा एवं कृता न भवति तत्र, सा राष्ट्रपतिना ततः परं तद्राज्यस्य शासनस्य अनुरोधेन सहमत्या वा प्रवर्तिता भवेत्,

नान्यथा।]

[3][(ख) ३५६-तमानुच्छेदस्य (१) खण्डे एतत् संविधानस्य उपबन्धान् प्रति, उपबन्धं वा प्रति, निर्देशाः जम्मू-कश्मीरराज्यस्य सम्बन्धे जम्मू-कश्मीरराज्यस्य संविधानस्य उपबन्धान् प्रति उपबन्धं वा प्रति, निर्देशाः सन्ति इति इव अर्थः ग्राह्यः।

(ग) ३६०-तमानुच्छेदः लोपितः भवेत्।]

(१४) **भागः १६**

[4][ * * * * ]

[5][(क)] [6][३६५-तमानुच्छेदः] लोपितः भवेत्।

[7][ * * * * ]

[5][(ख)] ३६७-तमानुच्छेदे निम्नलिखितः खण्डः परिवर्धितः भवेत्, तद्यथा—

"(४) जम्मू-कश्मीरराज्यस्य विषये यथानुप्रयुज्यमानस्य एतस्य संविधानस्य प्रयोजनानां अर्थे—

(क) एतत्संविधानं प्रति अथवा तस्य उपबन्धान् प्रति निर्देशाः तद्राज्यस्य सम्बन्धे यथानुप्रयुक्तं संविधानम् प्रति, तस्य उपबन्धान् वा प्रति निर्देशाः सन्ति इति इव अर्थः ग्राह्यः;

[8][(कक)] तद्राज्यस्य तदानीं पदधारिण्या मन्त्रिपरिषदा परामृश्य कार्यं कुर्वन्तं 'सदर-ई-रियासत्' इति रूपेण तद्राज्यस्य विधानसभया पुरः प्रशंसितं राष्ट्रपतिना अभिमतं जनं प्रति निर्देशाः जम्मू-कश्मीरराज्यस्य राज्यपालं प्रति निर्देशाः इति इव अर्थः ग्राह्यः;

---

१. १०४-सांविधानिकादेशेन '(४)' इत्येतस्मात् प्रति एतत् संनिवेशितम्।

२. १००-सांविधानिकादेशेन केभ्यश्चित् शब्देभ्यः प्रति एतत् संनिवेशितम्।

३. ७१-सांविधानिकादेशेन (ख) खण्डात् प्रति एतौ खण्डौ संनिवेशितौ।

४. ७४-सांविधानिकादेशेन (क) खण्डः लोपितः।

५. उपर्युक्तादेशेन '(ख)', '(ग)' खण्डौ '(क)', '(ख)" इति पुनरङ्कितौ।

६. ६४-सांविधानिकादेशेन "३६२-३६५-तमानुच्छेदौ" इत्येतस्मात् प्रति एतत् संनिवेशितम्।

७. ५६-सांविधानिकादेशेन मूलखण्डः (ग) लोपितः।

८. ७४-सांविधानिकादेशेन (ख) खण्डात् प्रति एतौ खण्डौ संनिशितौ।

परिशिष्टम्—१

(ख) तद्राज्यस्य शासनं प्रति निर्देशाः, तद्राज्यस्य मन्त्रिपरिषदा परामृश्य कार्यं कुर्वन्तं जम्मू-कश्मीरस्य राज्यपालं प्रति निर्देशान् अन्तर्भावयन्तः सन्ति इति अर्थः ग्राह्यः—

परन्तु १९६५ वर्षस्य एप्रिलमासस्य दशमदिनाङ्कात् पूर्वगतस्य कस्यापि कालावधेः सम्बन्धे एतादृशाः निर्देशाः तद्राज्यस्य मन्त्रिपरिषदा परामृश्य कार्यं कुर्वन्तं 'सदर-ई-रियासत्' इत्येनं प्रति निर्देशान् अन्तर्भावयन्तः निर्देशाः सन्ति इति अर्थः ग्राह्यः ; ]

(ग) उच्चन्यायालयं प्रति निर्देशाः जम्मू-कश्मीरराज्यस्य उच्चन्यायालयं प्रति निर्देशान् अन्तर्भावयेयुः;

[1][ * * * * ]

[2][(घ)] एतद्राज्यस्य स्थायिनिवासिनः प्रति निर्देशानां अर्थे ते जनाः ग्राह्याः ये सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः, १९५४ इत्यस्य प्रारम्भात् पूर्वं तस्मिन् राज्ये प्रवर्तमानानां विधीनां अधीनं तद्राज्यस्य प्रजाजनरूपेण मान्यताप्राप्ताः आसन्, अथवा ये राज्यस्य विधानमण्डलेन निर्मितेन विधिना तद्राज्यस्य स्थायिनिवासिरूपेण मान्यताप्राप्ता सन्ति; तथा च

[3][(ङ) राज्यपालं प्रति निर्देशाः जम्मू-कश्मीरराज्यस्य राज्यपालं प्रति निर्देशान् अन्तर्भावयेयुः —

परन्तु १९६५ वर्षस्य एप्रिलमासस्य दशमदिनाङ्कात् पूर्वगतस्य कस्यापि कालावधेः सम्बन्धे एतादृशाः निर्देशाः राष्ट्रपतिना जम्मू-कश्मीरस्य 'सदर-ई-रियासत्' इति मान्यतादत्तं जनं प्रति निर्देशाः सन्ति, तथा च 'सदर-ई-रियासत्' इत्येतस्य शक्तीनां प्रयोगे क्षमः अस्ति इति राष्ट्रपतिना मान्यतादत्तं कमपि जनं प्रति निर्देशान् अन्तर्भावयन्तः निर्देशाः सन्ति इति अर्थः ग्राह्यः ।]"

(१५) भागः २०

[4][(क)] [5][३६८-तमानुच्छेदस्य (२) खण्डे] निम्नलिखितः पारन्तुकः परिवर्धितः भवेत्, तद्यथा—

"अपरं च, एतादृशं संशोधनं जम्मू-कश्मीरराज्यस्य सम्बन्धे तावत् न प्रभवेत् यावत् ३७०-तमानुच्छेदस्य (१) खण्डाधीनं राष्ट्रपतेः आदेशेन नानुप्रयुज्येत ।"

[6][(ख) ३६८-तमानुच्छेदस्य (३) खण्डात्परं निम्नलिखितः खण्डः परिवर्धितः भवेत्, तद्यथा—

१. ५६-सांविधानिकादेशेन (घ) खण्डः लोपितः ।

२. उपर्युक्तादेशेन '(ङ)' खण्डः, '(घ)' खण्डः इति पुनरङ्कितः ।

३. ७४-सांविधानिकादेशेन (ङ) खण्डात् प्रति संनिवेशितः ।

४. १०१-सांविधानिकादेशेन (क) खण्डः इति अङ्कितः ।

५. ९१-सांविधानिकादेशेन "३६८-तमानुच्छेदे" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

६. १०१-सांविधानिकादेशेन एतत् अन्तर्वेशितम् ।

**परिशिष्टम्—१**

"(४) (क) राज्यपालस्य नियुक्तेः, शक्तीनां, कर्तव्यानां, कृत्यानां, उपलब्धीनां, भक्तानां विशेषाधिकाराणां, विमुक्तीनां; अथवा

(ख) निर्वाचनायोगेन निर्वाचनानां अधीक्षणं, निदेशः, नियन्त्रणं च, निर्वाचननामावल्यां विना विभेदं अन्तर्निवेशनाय पात्रता, प्राप्तवयस्कमताधिकारः, विधानपरिषदः संरचना च इति ये जम्मू-कश्मीरसंविधानस्य १३८, १३९, १४०, तथा च ५०-अनुभागेषु निर्दिष्टाः विषयाः सन्ति,

तेषां सम्बन्धे जम्मू-कश्मीरसंविधानस्य कस्मिन् अपि उपबन्धे तस्य प्रवृत्तौ वा कमपि परिवर्तनं अपेक्षमाणः जम्मू-कश्मीरराज्यस्य विधानमण्डलेन निर्मितः कोपि विधिः, राष्ट्रपतेः विचारणार्थं संरक्षितः सन् यावत् तस्य अनुमतिं न लभेत, तावत् न प्रवृत्तः भवेत्"] ।

(१६) **भागः २१**

(क) ३६९, ३७१, [1][३७१अ], [2][३७२अ], ३७३-तमानुच्छेदाः, ३७४-तमानुच्छेदस्य (१), (२), (३) तथा (५) खण्डाः, [3][३७६तः ३७८अ यावत् अनुच्छेदाः तथा ३९२ अनुच्छेदः] लोपिताः भवेयुः ।

(ख) ३७२-तमानुच्छेदे—

(प्रथमः) (२), (३) खण्डौ लोपितौ भवेताम्;

(द्वितीयः) भारतस्य राज्यक्षेत्रे प्रवृत्तान् विधीन् प्रति निर्देशाः 'हिदायत', 'ऐलान', 'इश्तिहार', 'परिपत्रं', 'रोबकार', 'इर्शाद', 'याददाश्त', राज्यपरिषदः सङ्कल्पाः, संविधानपरिषदः सङ्कल्पाः जम्मू-कश्मीरराज्यस्य राज्यक्षेत्रे विधिप्रभावधराणि अन्यानि लिखितानि च, इत्येतानि प्रति निर्देशान् अन्तर्भावयेयुः; तथा

(तृतीयः) संविधानस्य प्रारम्भं प्रति निर्देशाः एतदादेशस्य प्रारम्भं प्रति निर्देशाः सन्ति इति अर्थः ग्राह्यः ।

(ग) ३७४-तमानुच्छेदस्य (४) खण्डे राज्यस्य प्रधानपरिषद् रूपेण कार्यं कुर्वन्तं प्राधिकरणं प्रति निर्देशः जम्मू-कश्मीरराज्यस्य संविधानाधिनियमः, १९९६ सम्वत्सरीयः इत्यस्य अधीनं घटितां मन्त्रणामण्डलीं प्रति निर्देशः अस्ति इति अर्थः ग्राह्यः; तथा च संविधानस्य प्रारम्भं प्रति निर्देशाः एतदादेशस्य प्रारम्भं प्रति निर्देशाः सन्ति इति अर्थः ग्राह्यः ।

(१७) **भागः २२**

३९४ तथा ३९५-तमानुच्छेदौ लोपितौ भवेताम् ।

(१८) **प्रथमा अनुसूची**

---

१. ७४-सांविधानिकादेशेन एतत् अन्तर्वेशितम् ।

२. ५६-सांविधानिकादेशेन एतत् अन्तर्वेशितम् ।

३. ५६-सांविधानिकादेशेन "३७६ तः ३९२ यावत् अनुच्छेदेभ्यः" प्रति एतत् संनिवेशितम् ।

परिशिष्टम्—१

(१९) **द्वितीया अनुसूची**

[1][ * * * * ]

(२०) **तृतीया अनुसूची**

५, ६, ७ तथा ८ प्ररूपाणि लोपितानि भवेयुः ।

(२१) **चतुर्थी अनुसूची**

[2][(२२) **सप्तमी अनुसूची**

(क) सङ्घसूच्यां—

(प्रथमः) ३-प्रविष्टेः प्रति "३ कटकक्षेत्राणां प्रशासनम्" इति प्रविष्टिः संनिवेशिता भवेत्;

[3][(द्वितीयः) ८, ९, [4][तथा ३४] [5][ * * * ] प्रविष्ट्यः, ७९ प्रविष्टिः तथा ८१ प्रविष्ट्यां "आन्ताराज्यिकं प्रव्रजनं" इति शब्दौ च, लोपिताः भवेयुः; ]

[6][ * * * *]

[7][(तृतीयः) ७२ प्रविष्ट्यां "राज्यानि" प्रति निर्देशस्य तथा अर्थः ग्राह्यः यथा तत्—

(क) तद्राज्यस्य कतरस्मिन् अपि विधानमण्डलस्य सदने सञ्जातं निर्वाचनं यया प्रश्नगतं कृतं तस्यां निर्वाचनयाचिकायां जम्मू-कश्मीरराज्यस्य उच्चन्यायालयस्य कस्यापि निर्णयस्य आदेशस्य वा विरुद्धं उच्चतमन्यायालयस्य पुरतः पुनर्विचारप्रार्थनासम्बन्धे जम्मू-कश्मीरराज्यं प्रति निर्देशं अन्तर्भावयति;

(ख) अन्यविषयाणां सम्बन्धे तद्राज्यं प्रति निर्देशं न अन्तर्भावयति]; [8][तथा]

[9][(चतुर्थः) ९७ प्रविष्टेः प्रति निम्नलिखिता प्रविष्टिः संनिवेशिता भवेत्, तद्यथा—

"९७. भारतस्य पूर्णप्रभुतायाः, क्षेत्रीयायाःअखण्डतायाश्च अपलापः, प्रश्नगतकरणं, विदारणं च अथवा भारतराज्यक्षेत्रस्य कस्यचिद् भागस्य परिविरतेः, अथवा भारतराज्यक्षेत्रस्य कस्यचिद् भागस्य सङ्घात् पृथग्भावस्य संसाधनं, अथवा भारतस्य राष्ट्रध्वजस्य, भारतस्य राष्ट्रगीतस्य, संवि-

---

१. ५६-सांविधानिकादेशेन ६ प्रच्छेद-सम्बन्धि उपान्तरणं लोपितम् ।

२. ६६-सांविधानिकादेशेन (२२) उपप्रच्छेदः प्रति एषः उपप्रच्छेदः संनिवेशितः ।

३. ८५-सांविधानिकादेशेन (द्वितीय) विषयात् प्रति एषः संनिवेशितः ।

४. ९२-सांविधानिकादेशेन "३४ तथा ६०" इत्येतस्मात् प्रति एतत् संनिवेशितम् ।

५. ९५-सांविधानिकादेशेन '६७-प्रविष्ट्यां "अभिलेखाश्च" इत्येतत्' लोपितम् ।

६. ७४-सांविधानिकादेशेन मूलविषयः (तृतीया) लोपितः ।

७. ८३-सांविधानिकादेशेन (तृतीयात्) विषयात् प्रति एषः संनिवेशितः ।

८. ८५-सांविधानिकादेशेन अन्तर्वेशितः ।

९. ९३-सांविधानिकादेशेन (चतुर्थ) विषयात् प्रति एषः विषयः संनिवेशितः ।

**परिशिष्टम्—१**

धानस्य वा अवमानकरणं इत्येतानि उद्दिश्य निदेशितानां क्रियाकलापानां निरोधः; तथाच समुद्रमार्गेण वायुमार्गेण वा विदेशयात्रायां, आन्तरिकवायुमार्गयात्रायां, तथा धनादेशान्, स्वरलेखनं, दूरलेखनं च अन्तर्भावयत्सु प्रेषणीयवस्तुषु कराः।"]

(ख) राज्यसूची लोपिता भवेत्।

[1][(ग) समवर्तिन्यां सूच्यां—

[2][(प्रथमः) १-प्रविष्टेः प्रति निम्नलिखिता प्रविष्टिः संनिवेशिताः भवेत्, तद्यथा—

"१. दण्डविधिः (प्रथमानुसूच्यां विनिर्दिष्टैः कैश्चिदपि विषयैः सम्बद्धानां विधीनां विरुद्धान् अपराधान् विहाय, तथा च असैनिकशक्तेः साहाय्यार्थं, नौसेनायाः, स्थलसेनायाः, वायुसेनायाः तथा च सङ्घस्य अन्यस्य कस्यचिद् अपि सशस्त्रबलस्य उपयोगं विहाय) तावत् पर्यन्तं यावत् एतादृशः विधिः अस्यां सूच्यां विनिर्दिष्टैः कैश्चिदपि विषयैः सम्बद्धानां विधीनां विरुद्धान् अपराधान् विषयीकरोति।"];

[3][(प्रथमः) (क) २-प्रविष्टेः प्रति— "२. दण्डप्रक्रिया, तावत्पर्यन्तं यावत् सा कस्मिन् अपि विदेशे राजनयिकैः, वाणिज्यदूतिकैः वा अधिकारिभिः शपथानां ग्राहणं, शपथपत्राणां च अनुप्रमाणितीकरणं विषयीकरोति" इति प्रविष्टिः संनिवेशिता भवेत्;

(प्रथमः) (ख) १२-प्रविष्टेः प्रति "१२. साक्ष्यं शपथाश्च, तावत् पर्यन्तं यावत् तानि कस्मिन् अपि विदेशे राजनयिकैः वाणिज्यदूतिकैः वा अधिकारिभिः शपथानां ग्राहणं, शपथपत्राणां अनुप्रमाणितीकरणं च विषयीकरोति" इति प्रविष्टिः संनिवेशिता भवेत्।

(प्रथमः) (ग) १३-प्रविष्टेः प्रति "१३. व्यवहारप्रक्रिया तावत् पर्यन्तं यावत् सा कस्मिन् अपि विदेशे राजनयिकैः वाणिज्यदूतिकैः वा अधिकारिभिः शपथानां ग्राहणं, शपथपत्राणां अनुप्रमाणितीकरणं च विषयीकरोति", इति प्रविष्टिः संनिवेशिता भवेत्; ]

[4][ * * * * ]

[5][ [6][(द्वितीयः)] ३०-प्रविष्टेः प्रति "३०. जन्ममरणसम्बन्धिसङ्ख्यानं तावत् पर्यन्तं यावत्

---

१. ६६-सांविधानिकादेशेन (ग) खण्डात् प्रति एषः खण्डः संनिवेशितः।

२. ७०-सांविधानिकादेशेन (प्रथम) विषयात् प्रति एषः विषयः संनिवेशितः।

३. ६४-सांविधानिकादेशेन अन्तर्वेशितः।

४. ७४-सांविधानिकादेशेन (द्वितीयः), (तृतीयः) च विषयौ लोपितौ।

५. ७०-सांविधानिकादेशेन अन्तर्वेशितः।

६. ७४-सांविधानिकादेशेन (चतुर्थ) विषयः "(द्वितीयः) विषयः" इति पुनरङ्कितः।

तत् जन्मानि मृत्यून् च विषयीकरोति यस्मिन् अन्तर्भवति जन्मनां मृत्यूनां च पञ्जीकरणम्"; इति प्रविष्टिः संनिवेशिता भवेत्; ]

[1][ * * * * ]

[2][ (तृतीयः) ३-प्रविष्टिः, ५ तः १० यावत् (उभे अन्तर्भावयन्त्यः) प्रविष्ट्यः, १४, १५, १७, २०, २१, २७, २८, २९, ३१, ३२, ३७, ३८, ४१ तथा ४४ प्रविष्ट्यः लोपिताः भवेयुः।

: ४२-प्रविष्टेः प्रति "४२-सम्पत्तेः अर्जनं, अधिग्रहणं च तावत्पर्यन्तं यावत् तत् १ सूच्याः ६७-प्रविष्ट्यां अथवा ३ सूच्याः ४०-प्रविष्ट्यां समावेशितायाः सम्पत्तेः अथवा कस्याः अपि कलामहत्वमय्याः सौन्दर्यमहत्वमय्याः वा मानवीयकलाकृतेः अर्जनं सम्बन्धयति" इति प्रविष्टिः संनिवेशिता भवेत्, तथा च]

[3][ (चतुर्थः) ४५-प्रविष्ट्यां "द्वितीय सूच्यां तृतीय सूच्यां वा इति शब्देभ्यः प्रति "अस्यां सूच्यां" इति शब्दौ संनिवेशितौ भवेताम्।]

(२३) **अष्टमी अनुसूची**

[4][ (२४) **नवमी अनुसूची**

[5][ (क) ६४-प्रविष्ट्याः परं निम्नलिखिताः प्रविष्ट्यः परिवर्धिताः भवेयुः, तद्यथा—

[6][ ६४अ] जम्मू-कश्मीरराज्यस्य "कुथ" अधिनियमः (१९७८ संवत्सरस्य १)

[6][ ६४आ] जम्मू-कश्मीरस्य अभिधृतिः अधिनियमः (१९८० संवत्सरस्य १०)

[6][ ६४-इ] जम्मू-कश्मीरस्य भूमेः अन्यसङ्क्रामणं अधिनियमः (१९९४ संवत्सरस्य ५)

[7][ * * * * ]

[8][ ६४ई] जम्मू-कश्मीरस्य विपुलभूसम्पदां उत्सादनं अधिनियमः, (२००७-संवत्सरस्य १७)

[8][ ६४उ] जागीराणां तथा अन्य-भूराजस्व-समनुदेशनादीनां च प्रत्याहरणं सम्बन्धी, १९५१ वर्षस्य ६-एच् क्रमाङ्कितः, १०-३-१९५१ दिनाङ्कितः आदेशः,

---

१. ७२-सांविधानिकादेशेन (पञ्चमः), (षष्ठः) विषयौ लोपितौ।

२. ९५-सांविधानिकादेशेन (तृतीयात्) विषयात् प्रति एषः संनिवेशितः।

३. ७४-सांविधानिकादेशेन (षष्ठः) विषयः "(चतुर्थः)" इति पुनः क्रमाङ्कितः।

४. उपर्युक्तादेशेन (२४) उपप्रच्छेदं प्रति एषः उपप्रच्छेदः संनिवेशितः।

५. १०५-सांविधानिकादेशेन पुनःअक्षराङ्कितः।

६. ९८-सांविधानिकादेशेन पुनः क्रमाङ्कितः।

७. १०६-सांविधानिकादेशेन लोपितः।

८. उपर्युक्तादेशेन पुनरक्षराङ्कितः।

**परिशिष्टम्—१**

[1][ ६४ऊ] जम्मू-कश्मीरस्य बन्धकीकृतसम्पत्तीनां प्रत्यास्थापनाधिनियमः, १९७६ (१९७६ वर्षस्य अधिनियमः १४)

[ ६४ऋ जम्मू-कश्मीरस्य ऋणीनां अनुतोषः अधिनियमः, १९७६ (१९७६ वर्षस्य अधिनियमः १५) ]

[2][ (ख) संविधानस्य (नवत्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्येतेन अन्तर्वेशिताः ८७-तः १२४ यावत् प्रविष्ट्यः क्रमशः ६५ तः १०२ यावत् क्रमाङ्किताः भवेयुः ।]

[3][ (ग) १२५ तः १८८ यावत् प्रविष्ट्यः क्रमशः १०३ तः १६६ यावत् क्रमाङ्किताः भवेयुः ।]

---

१. १०६-सांविधानिकादेशेन अन्तर्वेशितः ।

२. १०५-सांविधानिकादेशेन अन्तर्वेशितः ।

३. १०८-सांविधानिकादेशेन अन्तर्वेशितः (३१-१२-१९७७ दिनाङ्कात् प्रवर्तमानप्रभावेण) ।

## परिशिष्टम्—२

### येषां अपवादानां उपान्तरणानां च अधीनं संविधानं जम्मू-कश्मीरराज्ये अनुप्रयुज्यते तानि निर्दिश्य संविधानस्य विद्यमानपाठस्य पुनः कथनम्

**टिप्पणी**—येषां अपवादोपान्तरणानां च अधीनं संविधानम् जम्मू-कश्मीरराज्ये अनुप्रयुज्यते तानि सांविधानिक: (जम्मू-कश्मीरसम्बन्धे अनुप्रयोग:) आदेश:, १९५४ इत्यस्मिन् उपबन्धितानि सन्ति अथवा संविधानस्य यानि संशोधनानि जम्मू-कश्मीरसम्बन्धे अनुप्रयोगाक्षमाणि सन्ति तेषां पारिणामिकानि सन्ति । यानि अपवादोपान्तरणानि व्यवहारे महत्त्वमयानि विद्यन्ते तानि सर्वाणि एतस्मिन् पुनः कथने अन्तर्निवेशितानि सन्ति । किन्तु एतत् केवलं शीघ्रावलोकनसौकर्याय अस्ति । यथावत् स्थितिं निश्चेतुं तु सांविधानिक: (जम्मू-कश्मीरसम्बन्धे अनुप्रयोग:) आदेश:, १९५४ इत्येष: तथाच २० जून, १९६४ दिनाङ्के यथाविद्यमानस्य तदादेशस्य २-खण्डे उल्लिखितै: तद्दिनात् उत्तरवर्तिसंशोधनैश्च यथासंशोधितस्य संविधानस्य पाठ: अवलोकनीय: ।

(१) **प्रस्तावना**

(क) प्रथमप्रच्छेदे "समाजवादिनं सम्प्रदायनिरपेक्षं" इत्येतत् लोप्येत ।

(ख) उपान्त्यप्रच्छेदे "अखण्डता च" इत्येतत् लोप्येत ।

(२) **भाग: १**

अनुच्छेद: ३—(क) निम्नलिखित: अपर: पारन्तुक: परिवर्ध्येत; तद्यथा—

"अपरं च, जम्मू-कश्मीरराज्यस्य क्षेत्रं वर्धयितुं, ह्रासयितुं, वा तस्य नाम परिवर्तयितुं, सीमां परिवर्तयितुं वा उपबन्धनार्थं किमपि विधेयकं तद्राज्यस्य सम्मतिं विना संसदि न पुर:स्थाप्येत" ।

(ख) स्पष्टीकरणं—१, स्पष्टीकरणं—२ च लोप्येताम् ।

(३) **भाग: २**

(क) एष: भाग: जम्मू-कश्मीरराज्यस्य सम्बन्धे १९५०-वर्षस्य जान्युआरीमासस्य २६-दिनाङ्कात् अनुप्रयुक्त: अभूत् इति इव मन्येत ।

(ख) अनुच्छेद: ७—निम्नलिखित: अपर: पारन्तुक: परिवर्ध्येत; तद्यथा—

"अपरं च, एतदनुच्छेदगतं किमपि जम्मू-कश्मीरराज्यस्य तं स्थायिनिवासिनं न विषयीकुर्यात्, य: पाकिस्ताने समाविष्टं राज्यक्षेत्रं एवं प्रव्रजित: भूत्वा तद्राज्यस्य विधानमण्डलेन निर्मितस्य कस्यचिद् अपि विधे: प्राधिकारेण, तदधीनं वा दत्ताज्ञानुसारं तस्मिन् राज्ये पुनर्वासार्थं, स्थायिप्रत्यावर्तनार्थं वा तद्राज्यस्य क्षेत्रं प्रति निवृत्त: अस्ति; तथाच एतादृश: प्रत्येकं जन: भारतस्य नागरिक: इति मन्येत ।"

(४) **भाग: ३**

(क) अनुच्छेद: १३—संविधानस्य प्रारम्भं प्रति निर्देश: सांविधानिक: (जम्मू-कश्मीरसम्बन्धे अनुप्रयोग:) आदेश: १९५४ इत्यस्य प्रारम्भं प्रति अर्थात् १९५४ वर्षस्य मेमासस्य १४ दिनाङ्कं प्रति निर्देश: अस्ति इति अर्थ: ग्राह्य: ।

(ख) अनुच्छेद: १५—(४) खण्डे अनुसूचितजनजाती: प्रति निर्देश: लोप्येत ।

**परिशिष्टम्—२**

(ग) अनुच्छेदः १६—(३)खण्डे राज्यं प्रति निर्देशः, जम्मू-कश्मीरराज्यं प्रति निर्देशं नान्तर्भावयति इति अर्थः ग्राह्यः।

(घ) अनुच्छेदः १९.

(अ) (१) खण्डे—

(प्रथमः) (ङ) उपखण्डस्य अन्ते 'तथा' इति लोप्येत;

(द्वितीयः) (ङ) उपखण्डात्परं निम्नलिखितः खण्डः अन्तर्वेश्येत, तद्यथा—

"(च) सम्पत्तेः अर्जने, धारणे, व्ययने च; तथा"

(आ) (५) खण्डे "(घ) उपखण्डे, (ङ) उपखण्डे" इत्येतस्मात् प्रति "(घ) उपखण्डे, (ङ) उपखण्डे, (च) उपखण्डे" इत्येतत् संनिवेश्येत ।

(ङ) अनुच्छेदः २२—(४) खण्डे (७) खण्डे च "संसद्" इत्येतस्मात् प्रति "तद्राज्यस्य विधानमण्डलं" इति संनिवेश्येत।

(च) अनुच्छेदः ३०—(१अ) खण्डः लोप्येत ।

(छ) ३०-तमानुच्छेदात्परं निम्नलिखितं अन्तर्वेश्येत, तद्यथा—

"**सम्पत्तेः अधिकारः**

३१—**सम्पत्तेः अनिवार्यं अर्जनं**—(१) कोपि जनः विधिप्राधिकारं अन्तरेण सम्पत्तेः विनाकृतः न भवेत् ।

(२) कापि सम्पत्तिः अनिवार्यतया अर्जिता अधिगृहीता वा न भवेत् लोकप्रयोजनात् भिन्नेन कारणेन, तद्विधेः प्राधिकाराद्विना च यः विधिः तेन निश्चितराशेः प्रतिकरदानेन अथवा तस्मिन् विनिर्दिष्टसिद्धन्तानुसारं तस्मिन् विनिर्दिष्टरीत्यनुसारं च अवधारितराशेः दानेन सम्पत्तेः अर्जनाय अधिग्रहणाय वा उपबन्धयति तथा एवं निश्चितः अवधारितः वा राशिः यथेष्टं न अस्ति अथवा एतादृशः सम्पूर्णः राशिः तस्य कोपि भागः वा धनमुद्रादानात् इतररूपेण दातव्यः अस्ति इति आधारेण एतादृशः कोपि विधिः कस्मिंश्चित् अपि न्यायालये प्रश्नगतः न क्रियेत—

परन्तु ३०-तमानुछेदस्य (१)खण्डे विनिर्दिष्टायाः अल्पसङ्ख्यकवर्गेण स्थापितायाः प्रशासितायाश्च शैक्षणिकसंस्थायाः सम्पत्तेः अनिवार्यतया अर्जनार्थं उपबन्धं कुर्वतः विधेः निर्माणं कुर्वद् राज्यं एतत् सुनिश्चितं कुर्यात् यद् एतादृशेन विधिना निश्चितः तदधीनं अवधारितः वा राशिः एतावान् अस्ति यत् सः एतत्खण्डेन प्रत्याभूतं अधिकारं निर्बन्धितं, निराकृतं वा न करोति ।

(२अ) यत्र विधिः सम्पत्तेः स्वाम्यस्य, धृत्यधिकारस्य वा राज्याय अथवा राज्येन स्वाम्ये धृताय नियन्त्रिताय वा निगमाय अन्तरणार्थं न उपबन्धयति तत्र सः विधिः यद्यपि कमपि जनं तस्य सम्पत्तेः विरहितं करोति तथापि सः सम्पतेः अनिवार्यतया अर्जनाय अधिग्रहणाय वा उपबन्धयति इति न अभिप्रेयेत ।

**परिशिष्टम्—२**

(२आ) (२) खण्डे निर्दिष्टं एतादृशं कमपि विधिं, १९-तमानुच्छेदस्य (१) खण्डस्य (च) उपखण्डे गतं किमपि न प्रभावयेत्।

*  *  *  *  *

(५) (२) खण्डगतं किमपि न प्रभावयेत्—

(क) कस्यापि विद्यमानविधेः उपबन्धान्; अथवा

(ख) अतः परं, राज्यं

(प्रथमः) कस्यापि करस्य शास्तेः वा अधिरोपणार्थं, उद्ग्रहणार्थं वा;

(द्वितीयः) लोकस्वास्थ्यस्य संवर्धनार्थं; जीवनसम्बन्धे, सम्पत्तिसम्बन्धे, च भयस्य निवारणार्थं;

(तृतीयः) विधिना निष्क्रान्ता सम्पत्तिः इति उद्घोषितायाः सम्पत्तेः सम्बन्धे;

यं कमपि विधिं निर्मिमेत, तस्य उपबन्धान्।"

*  *  *  *  *

(ज) ३१-अनुच्छेदात्परं निम्नलिखितं उपशीर्षकं लोप्येत; तद्यथा—

**"केषांचित् विधीनां व्यावृत्तिः"**

(झ) अनुच्छेदः ३१ अ—

(अ) (१) खण्डे—

(प्रथमः) "१४-तमानुच्छेदेन, १९-तमानुच्छेदेन वा" इत्येतस्मात् प्रति "१४-तमानुच्छेदेन, १९-तमानुच्छेदेन, ३१-तमानुच्छेदेन वा" इति संनिवेश्येन,

(द्वितीयः) (१) खण्डस्य पारन्तुकः लोप्येत;

(तृतीयः) द्वितीये पारन्तुके "अपरं च" इत्येताभ्यां शब्दाभ्यां प्रति "परन्तु" सन्निवेश्येत।

(आ) (२) खण्डे (क) उपखण्डात् प्रति निम्नलिखितः उपखण्डः सन्निवेश्येत, तद्यथा—

'(क) "सम्पद्" इत्येतया अभिप्रेयते सा भूमिः या कृषिकर्मप्रयोजनानां अथवा कृषिकर्मसाधक प्रयोजनानां अर्थे, अथवा यवसक्षेत्रार्थे धृता अथवा भाटकेन प्रदत्ता अस्ति; तस्यां च अन्तर्भवन्ति—

(प्रथमः) एतादृश्यां भूमौ स्थितानि भवनस्थानानि अन्याः संरचनाश्च;

(द्वितीयः) एतादृश्यां भूमौ स्थिताः वृक्षाः;

(तृतीयः) वन्यभूमिः तथा वृक्षावृता अनुर्वरभूमिश्च;

(चतुर्थः) जलावृता भूमिः, जलप्लवक्षेत्राणिच;

(पञ्चमः) जन्दराणां, घराटानां च स्थानानि;

(षष्ठः) "जागीर', "इनाम" "मुआफी" अथवा "मुकर्ररी" इति नामभिः अनुदत्ता कापि भूमिः, एतादृशानि अन्यानि अनुदानानि च;

किन्तु तस्यां नान्तर्भवन्ति।

**परिशिष्टम्—२**

(प्रथमः) कस्मिन् अपि नगरे, नगरसीमाक्षेत्रे; 'आबादी' ग्रामे वा स्थितस्य भवनस्य स्थलं, तादृशभवनेन, स्थलेन वा अनुलग्ना भूमिश्च;

(द्वितीयः) नगरस्थलरूपेण, ग्रामस्थलरूपेण वा धृता कापि भूमिः;

(तृतीयः) नगरपालिकायां, अधिसूचितक्षेत्रे, कटकक्षेत्रे, नगरक्षेत्रे अथवा यस्यार्थं नगरायोजनप्रबन्धः अनुज्ञातः विद्यते तादृशे क्षेत्रे भवननिर्माणार्थं आरक्षिता भूमिश्च।'

(ञ) अनुच्छेदः ३१इ—

एतदनुच्छेदः जम्मू-कश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्यते।

(ट) अनुच्छेदः ३२—(३)खण्डः लोप्येत।

(ठ) अनुच्छेदः ३५—

(अ) संविधानस्य प्रारम्भं प्रति निर्देशाः सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः, १९५४ (सा० आ०४८) इत्यस्य प्रारम्भं प्रति अर्थात् १९५४ वर्षस्य मेमासस्य १४ दिनाङ्कम् प्रति निर्देशाः सन्ति इति इव अर्थः ग्राह्यः;

(आ) (क) (प्रथमे) खण्डे "१६-तमानुच्छेदीय (३)खण्डस्य, ३२-तमानुच्छेदस्य (३) खण्डस्य" इत्येतत् लोप्येत;

(इ) (ख)खण्डात् परं निम्नलिखितः खण्डः परिवर्ध्येत, तद्यथा—

"(ग) जम्मू-कश्मीरराज्यस्य विधानमण्डलेन सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः, १९५४ इत्यस्य प्रारम्भात् पूर्वं ततः परं वा निवारकनिरोधाय निर्मितः कोपि विधिः सः एतद्भागस्य उपबन्धैः असङ्गतः अस्ति इति आधारेण शून्यः न भवेत्; किन्तु एतादृशः कोपि विधिः एतादृश्याः असङ्गतेः पर्यन्तं एतदादेशस्य प्रारम्भात् पञ्चविंशतिवर्षाणां समाप्तौ प्रभावात् विरतः भवेत्, एतादृश्याः समाप्तेः प्राक् कृतानां अकृतानां वा कृत्यानां सम्बन्धं विहाय।"

(ड) ३५-तमानुच्छेदात्परं निम्नलिखितः अनुच्छेदः परिवर्ध्येत, तद्यथा—

"३५अ. **स्थायिनिवासिभिः तेषां अधिकारैश्च सम्बद्धानां विधीनां व्यावृत्तिः —**

एतत्संविधाने किमपि सत्यपि जम्मू-कश्मीरराज्ये प्रवृत्तः कोपि विद्यमानविधिः तथा अतः परं तद्राज्यस्य विधानमण्डलेन निर्मितः विधिः—

(क) जम्मू-कश्मीरराज्यस्य ये स्थायिनिवासिनः जनवर्गाः सन्ति, भविष्यन्ति वा तान् परिभाषयन्;

(ख) (प्रथमः) राज्यशासनाधीनं नियोजनस्य;

(द्वितीयः) राज्ये स्थावरसम्पत्तेः अर्जनस्य;

(तृतीयः) राज्ये स्थिरीभवनस्य;

**परिशिष्टम्—२**

(चतुर्थः) राज्यस्य शासनं यादृशं उपबन्धयेत् तादृशस्य शिष्यवृत्यधिकारस्य तथा तादृशरूपाणां अन्यसाहाय्यानां,

विषये, एतादृशेभ्यः स्थायिनिवासिभ्यः कान् अपि असामान्याधिकारान्, विशेषाधिकारान् वा प्रददन्, अथवा अन्येषु जनेषु कानि अपि निर्बन्धनानि आरोपयन्, कोपि विधिः शून्यः न भवेत् एतदाधारेण यत् सः अस्य भागस्य केनापि उपबन्धेन भारतनागरिकेभ्यः प्रदत्तैः कैः अपि अधिकारैः असङ्गतः अस्ति अथवा तान् कान् अपि अपहरति अल्पीकरोति वा इति ।"

(५) भागः ४

एषः भागः जम्मू-कश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्यते ।

(६) भागः ४अ

एषः भागः जम्मू-कश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्यते ।

(७) भागः ५

(क) अनुच्छेदः ५५—

(अ) एतदनुच्छेदस्य प्रयोजनानां अर्थे जम्मू-कश्मीरराज्यस्य जनसङ्ख्या त्रिषष्टिलक्षमिता अस्ति इति मन्येत ।

(आ) स्पष्टीकरणे पारन्तुकः लोप्येत ।

(ख) अनुच्छेदः ८१—

(२), (३) खण्डाभ्यां प्रति निम्नलिखितौ खण्डौ सन्निवेश्येताम्, तद्यथा—

"(२) (१) खण्डस्य (क) उपखण्डस्य प्रयोजनानां अर्थे—

(क) राज्याय लोकसभायां षट्स्थानानि आवण्टितानि भवेयुः;

(ख) परिसीमनाधिनियमः, १९७२ इत्यस्य अधीनं घटितेन परिसीमनायोगेन, यां सः योग्यां मन्येत तादृश्याः प्रक्रियायाः अनुसारं, राज्यं एकसदस्यीयेषु निर्वाचनक्षेत्रेषु विभाजितं भवेत्;

(ग) यावत्पर्यन्त क्रियात्मकं भवेत् तावत् पर्यन्तं निर्वाचनक्षेत्राणि भौगोलिकरूपेण संहतानि क्षेत्राणि भवेयुः, तथा तेषां परिसीमने भौतिकलक्षणानि प्रशासनीयैककानां विद्यमानाः सीमाः, सञ्चारसौकर्याणि, सार्वजनिकसुविधाश्च संलक्षितानि भवेयुः ;

(घ) येषु निर्वाचनक्षेत्रेषु राज्यं विभक्तं भवेत् तेषु पाकिस्तानधृतं क्षेत्रं समाविष्टं न भवेत् ।

(३) परिसीमनाधिनियमः, १९७२ इत्यस्य अधीनं संसदीयनिर्वाचनक्षेत्राणां परिसीमनसम्बन्धे परिसीमानायोगस्य अन्तिमादेशस्य, अन्तिमादेशानां वा भारतस्य राजपत्रे प्रकाशनदिनाङ्के विद्यमानलोकसभासदनस्य यावद् विघटनं न भवेत्, तावत् (२) खण्डगतं किमपि लोकसभायां राज्यस्य प्रतिनिधित्वं न प्रभावयेत् ।

**परिशिष्टम्—२**

(४) (क) परिसीमनायोगः राज्यस्य सम्बन्धे आत्मनः कर्तव्यतासु साहाय्यप्रदानार्थं लोकसभायां राज्यस्य प्रतिनिधित्वधारिणः पञ्चजनान् आत्मना सहयोजितान् कुर्यात् ।

(ख) राज्यात् एवं संयोजनीयाः जनाः लोकसभाध्यक्षेण सदनस्य रचनां यथोचितं संलक्ष्य, नामनिर्देशिताः भवेयुः ।

(ग) (ख) खण्डाधीनं कर्तव्यानि प्रथमनामनिर्देशनानि लोकसभाध्यक्षेण सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) द्वितीयं संशोधनं आदेशः, १९७४ इत्यस्य प्रारम्भात् मासद्वयाभ्यन्तरे क्रियेरन्;

(घ) केषांचित् अपि सहयोजितसदस्यानां मतदाने अथवा परिसीमनायोगस्य निर्णयं हस्ताङ्कितकरणे अधिकारः न भवेत्;

(ङ) यदि मृत्युना, त्यागपत्रेण वा, कस्यचित् सहयोजितस्य सदस्यस्य पदं रिक्तं भवति तर्हि तत् पदं लोकसभाध्यक्षेण यावत् व्यवहारशक्यं भवेत् तावत् शीघ्रं, तथा (क) खण्डस्य, (ख) खण्डस्य च अधीनं, पूरितं भवेत् ।"

(ग) अनुच्छेदः ८२—

द्वितीयः पारन्तुकः तृतीयः पारन्तुकश्च लोप्येताम् ।

(घ) अनुच्छेदः १०५—

(३) खण्डे "ते भवेयुः ये तत्सदनस्य तस्य सदस्यानां समितीनां च संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्य १५-अनुभागस्य प्रवर्तनात् अव्यवहितपूर्वं आसन्" इत्येतस्मात् प्रति "ते भवेयुः ये अस्य संविधानस्य प्रारम्भे 'यूनाइटेड किङ्डम्" इत्यस्य संसदः लोकसदनस्य, तत्सदनस्य सदस्यानां, समितीनां च आसन्" इत्येतत् संनिवेश्येत ।

(ङ) १३२-तमानुच्छेदात् प्रति निम्नलिखितः अनुच्छेदः संनिवेश्येत, तद्यथा—

'१३२. **केषुचित् अभियोगेषु वादेषु च उच्चन्यायालयेभ्यः प्राप्तासु पुनर्विचारप्रार्थनासु उच्चतमन्यायालयस्य पुनर्विचारप्रार्थनासम्बन्धिनी अधिकारिता**—

(१) भारतराज्यक्षेत्रे कस्यापि उच्चन्यायालयस्य व्यावहारिक्यां, आपराधिक्यां, अन्यस्यां वा कार्यप्रवृत्तौ कस्यापि निर्णयस्य, आज्ञप्तेः, अन्तिमादेशस्य वा निमित्तेन पुनर्विचारणाय प्रार्थना उच्चतमन्यायालये भवेत्, यदि सः उच्चन्यायालयः प्रमाणयति यत् सः वादः अस्य संविधानस्य निर्वचने कमपि सारवन्तं प्रश्नं अन्तर्गृह्णाति ।

(२) यत्र उच्चन्यायालयेन एतादृशं प्रमाणपत्रं दातुं प्रत्याख्यातं अस्ति, तत्र उच्चतमन्यायालयः यदि समाहितः भवति यत् सः वादः सारवन्तं विधिप्रश्नं अन्तर्गृह्णाति तर्हि एतादृशस्य निर्णयस्य आज्ञप्तेः अन्तिमादेशस्य वा निमित्तेन पुनर्विचारप्रार्थनायां विशेषानुमतिं अनुदद्यात् ।

(३) यत्र एतादृशं प्रमाणपत्रं दत्तं, एतादृशी अनुमतिः अनुदत्ता वा तत्र तद्वादस्यः कोपि पक्षः उच्चतमन्यायालयं, कोपि एतादृशः पूर्वोक्तसदृशः प्रश्नः असम्यक्तया निर्णीतः इत्याधारेण उच्चतमन्यायालयस्य अनुमत्या एतादृशेन अन्येन आधारेण च पुनर्विचारार्थं प्रार्थयेत् ।

**परिशिष्टम्—२**

**स्पष्टीकरणम्**—एतदनुच्छेदेस्य कृते 'अन्तिमादेशस्य' इति कथनं तस्य वादपदस्य विनिश्चायकं आदेशं अन्तर्भावयति यद् वादपदं यदि पुनर्विचारं प्रार्थयितुः अनुग्राहकत्वेन विनिश्चतं भवेत् तर्हि तस्य वादस्य अन्तिमव्यवस्थादानाय पर्याप्तं भवेत् ।'

(च) अनुच्छेदः १३३—

(अ) (१) खण्डे "१३४अ अनुच्छेदस्य अधीनम्" इत्येतत् लोप्येत ।

(आ) (१) खण्डानन्तरं निम्नलिखितः खण्डः अन्तर्वेश्येत, तद्यथा—

'(१अ) संविधानस्य (त्रिंशत्तमं संशोधनं) अधिनियमः, १९७२ इत्यस्य ३-अनुभागस्य उपबन्धाः एतदुपान्तरणस्य अधीनं अनुप्रयुज्येरन् यत् एतस्मिन् एषः अधिनियमः" "एतस्य अधिनियमस्य प्रारम्भः", "एष अधिनियमः पारितः न आसीत्" तथा 'एतेन अधिनियमेन यथासंशोधितं" इत्येतानि प्रति निर्देशाः यथाक्रमं "सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) द्वितीयं संशोधनम् आदेशः, १९७४", "उक्तादेशस्य प्रारम्भः", "उक्तादेशः कृतः न भवेत्" तथा "उक्तादेशस्य प्रारम्भात् परं यथास्थितं" इत्येतानि प्रति निर्देशाः सन्ति, इति अर्थः गृहीतः भवेत् ।'

(छ) अनुच्छेदः १३४—

(अ) (१) खण्डस्य (ग) उपखण्डे "१३४अ अनुच्छेदाधीनं" इति लोप्येत ।

(आ) (२) खण्डे "संसद्" इति शब्दात् परं "राज्यस्य विधानमण्डलेन अभ्यर्थनायां कृतायां" इति शब्दाः अन्तर्वेश्येयुः ।

(ज) १३४अ, १३५, १३६, तथा १३९अ इत्येते अनुच्छेदाः जम्मू-कश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्यन्ते ।

(झ) अनुच्छेदः १४५—(१) खण्डे (गग) खण्डः लोप्येत ।

(ञ) अनुच्छेदः १५०—"यादृशेन रूपेण भारतस्य नियन्त्रकमहालेखापरीक्षकेण परामृश्य राष्ट्रपतिः विदधीत" इत्येतस्मात् प्रति "यादृशेन रूपेण भारतस्य नियन्त्रकमहालेखापरीक्षकः राष्ट्रपतेः अनुमोदनेन विदधीत" इत्येतत् संनिवेश्येत ।

(ट) भागः ६

(क) १५३ तः २१७ यावत् अनुच्छेदाः, २१९-तमानुच्छेदः, २२१ तमानुच्छेदः, २२३, २२४, २२४अ तथा२२५-तमानुच्छेदाः, तथा च २२७ तः, २३३ यावत् अनुच्छेदाः तथा च २३४ तः २३७ यावत् अनुच्छेदाः लोप्येरन् ।

**परिशिष्टम्—२**

(ख) अनुच्छेदः २२०—संविधानस्य प्रारम्भं प्रति निर्देशाः सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) संशोधनम् आदेशः, १९६० इत्यस्य प्रारम्भं प्रति, अर्थात् १९६० वर्षस्य जान्युआरी मासस्य २६-दिनाङ्कं प्रति निर्देशाः सन्ति इति अर्थः ग्राह्यः ।

(ग) अनुच्छेदः २२२—(१) खण्डात् परं निम्नलिखितः नूतनः खण्डः अन्तर्वेश्येत, तद्यथा—

"(१अ) जम्मू-कश्मीरस्य उच्चन्यायालयात् तस्मिन् उच्चन्यायालये वा प्रत्येकं स्थानान्तरणं राज्यपालेन सह परामर्शात् परं क्रियेत ।"

(घ) अनुच्छेदः २२६—

(अ) (२) खण्डः (१अ) खण्डः इति पुनःक्रमाङ्कितः क्रियेत ।

(आ) (३) खण्डः लोप्येत ।

(इ) (४) खण्डः (२) खण्डः इति पुनः क्रमाङ्कितः क्रियेत तथा एवं पुनः क्रमाङ्किते (२) खण्डे "एतेन अनुच्छेदेन" इत्येतस्मात् प्रति "(१) खण्डेन अथवा (१अ) खण्डेन" इत्येतत् संनिवेश्येत ।

**(९) भागः ८**

एषः भागः जम्मू-कश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्यते

**(१०) भागः १०**

एषः भागः जम्मू-कश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्यते ।

**(११) भागः ११**

(क) अनुछेदः २४६—

(अ) (१) खण्डे "(२) (३) खण्डे" इत्येतस्मात् प्रति "(२) खण्डे" इत्येतत् संनिवेश्येत ।

(आ) (२) खण्डे "(३) खण्डे किमपि सत्यपि" इत्येतत् लोप्येत ।

(इ) (३),(४) खण्डौ लोप्येताम् ।

(ख) २४८-तमानुच्छेदात् प्रति निम्नलिखितः अनुच्छेदः संनिवेश्येत, तद्यथा—

"२४८. **अवशिष्टाः विधानशक्तयः**—

(क) भारतस्य पूर्णप्रभुतायाः क्षेत्रीयायाःअखण्डतायाश्च अपलापं, प्रश्नगतकरणं, विदारणं च अथवा भारतराज्यक्षेत्रस्य कस्यचिद् भागस्य परिविरतेः, अथवा भारतराज्यक्षेत्रस्य कस्यचिद् भागस्य सङ्घात् पृथग्भावस्य संसाधनं, अथवा भारतस्य राष्ट्रध्वजस्य, भारतस्य राष्ट्रगीतस्य, संविधानस्य वा अवमानकरणं इत्येतानि उद्दिश्य निर्देशितानां क्रियाकलापानां निरोधस्य सम्बन्धे; तथा

(ख) (प्रथमः) समुद्रमार्गेण, वायुमार्गेण वा विदेशयात्रायां;

(द्वितीयः) आन्तरिकवायुमार्गयात्रायां;

(तृतीयः) धनादेशान्, स्वरलेखनं, दूरलेखनं च अन्तर्भावयत्सु प्रेषणीयवस्तुषु च,

**परिशिष्टम्—२**

कराणां सम्बन्धे, कमपि विधिं निर्मातुं संसदः अनन्यप्रयोज्या शक्तिः अस्ति ।"

(ग) अनुच्छेदः २४९ लोप्येत ।

(घ) अनुच्छेदः २५०—"राज्यसूच्यां प्रगणितानां विषयाणां अन्यतमं कमपि" इत्येतेभ्यः शब्देभ्यः प्रति "सङ्घसूच्यां अप्रगणितानां विषयाणां अन्यतमं कमपि" इत्येते शब्दाः संनिवेश्येरन् ।

(ङ) अनुच्छेदः २५१—

(अ) "२४९, २५०-तमानुच्छेदगतं" इत्येतस्मात् प्रति "२५०-तमानुच्छेदगतं" इत्येतत् संनिवेश्येत ।

(आ) "संविधानस्य अधीनं" इत्येतत् लोप्येत ।

(इ) "उक्तानुच्छेदयोः अन्यतरस्य अधीनं" इत्येतस्मात् प्रति "उक्तानुच्छेदस्य अधीनं" इत्येतत् संनिवेश्येत ।

(च) अनुच्छेदः २५३—निम्नलिखितः पारन्तुकः परिवर्ध्येत, तद्यथा—

"परन्तु सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः, १९५४ इत्यस्य प्रारम्भात् परं जम्मू-कश्मीरराज्यस्य व्यवस्थां प्रभावयन् कोपि निर्णयः तद्राज्यस्य सम्मतिं विना, भारतशासनेन न क्रियेत ।"

(छ) अनुच्छेदः २५५ लोप्येत ।

(ज) अनुच्छेदः २५६—एषः अनुच्छेदः, तस्य "(१) खण्डः" इति पुनः क्रमाङ्कितः क्रियेत तथा तस्मिन् निम्नलिखितः नूतनः खण्डः परिवर्ध्येत, तद्यथा—

"(२) जम्मू-कश्मीरराज्यं स्वकार्यपालिकाशक्तिं एवं प्रयोजयेत् येन संविधानस्य अधीनं तद्राज्यस्य सम्बन्धे स्वकर्तव्यानां, कार्यभाराणां च सङ्घेन निर्वहणं सुकरं भवेत्, विशेषतश्च तद्राज्यं, यदि सङ्घेन अपेक्ष्येत तर्हि सङ्घस्य अर्थे, सङ्घस्य धनव्ययद्वारा च सम्पत्तेः अर्जनं, अधिग्रहणं वा कुर्यात्; तथा यदि तत्सम्पत्तिः राज्यस्य स्वत्वे स्थिता विद्यते तर्हि सङ्घाय एतादृशैः निबन्धनैः अन्तरिता भवेत्, येषु सहमतिः भवेत् तथा च सहमत्याः अभावे यथा भारतस्य मुख्यन्यायमूर्तिना नियुक्तेन माध्यस्थेन निर्णीतानि भवेयुः तथा ।"

(झ) अनुच्छेदः २६१—(२) खण्डे "संसदा प्रणीतस्य" इति लोप्येत ।

(१२) **भागः १२**

(क) अनुच्छेदाः २६६, २८२, २८४, २९८, २९९ तथा ३०० इत्येतेषु अनुच्छेदेषु राज्यं प्रति राज्यानां प्रति वा निर्देशाः जम्मू-कश्मीरराज्यं प्रति निर्देशान् नान्तर्भावयन्ति इति इव अर्थः ग्राह्यः ।

**परिशिष्टम्—२**

(ख) २६७-तमानुच्छेदस्य (२) खण्डः, २७३-तमानुच्छेदः, २८३-तमानुच्छेदस्य (२) खण्डः तथा २९०-तमानुच्छेदश्च लोप्येरन् ।

(ग) अनुच्छेदौ २७७ तथा २९५—एतयोः अनुच्छेदयोः संविधानस्य प्रारम्भं प्रति निर्देशाः सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः, १९५४ इत्यस्य प्रारम्भं प्रति अर्थात् १९५४ वर्षस्य मेमासस्य १४ दिनाङ्कं प्रति निर्देशाः सन्ति इति इव अर्थः ग्राह्यः ।

(घ) "**अध्यायः ४—सम्पत्तेः अधिकारः**" इति उपशीर्षकं" तथा अनुच्छेदः ३००अ लोप्येयताम् ।

(१३) **भागः १३**

३०३-तमानुच्छेदस्य (१) खण्डे "सप्तमानुसूच्याः कस्यामपिसूच्यां व्यापारवाणिज्यसम्बन्धिन्याः कस्याः अपि प्रविष्टेः आधारेण" इत्येतत् लोप्येत ।

(१४) **भागः १४**

अस्मित् भागे, ३१२-तमानुच्छेदं विहाय, अन्यत्र राज्यं प्रति निर्देशः जम्मू-कश्मीरराज्यं नान्तर्भावयति ।

(१५) **भागः १४क**

एषः भागः जम्मू-कश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्यते ।

(१६) **भागः १५**

(क) अनुच्छेदः ३२४—(क) (१) खण्डे संविधानं प्रति निर्देशः जम्मू-कश्मीरराज्यस्य विधानमण्डलस्य अन्यतरे सदने निर्वाचनस्य सम्बन्धे, जम्मू-कश्मीरराज्यस्य संविधानं प्रति निर्देशः अस्ति इति अर्थः ग्राह्यः ।

(ख) अनुच्छेदाः ३२५, ३२६ तथा ३२७—एतेषु अनुच्छेदेषु राज्यं प्रति निर्देशाः जम्मू-कश्मीर-राज्यं प्रति निर्देशान् नान्तर्भावयतिन्त इति अर्थः ग्राह्यः ।

(ग) ३२८-तमानुच्छेदः लोप्येत ।

(घ) अनुच्छेदः ३२९—

(अ) किमपि राज्यं प्रति निर्देशः जम्मू-कश्मीर राज्यं प्रति निर्देशं नान्तर्भावयति इति अर्थः ग्राह्यः ।

(आ) "३२८-तमानुच्छेदस्य वा" इत्येतत् लोप्येत ।

(१७) **भागः १६**

(क) अनुच्छेदः ३३०—

(अ) अनुसूचितजातीः प्रति निर्देशाः लोप्येरन् ।

(आ) स्पष्टीकरणं लोप्येत ।

(ख) ३३१, ३३२, ३३३, ३३६, ३३७, ३३९ तथा ३४२-तमानुच्छेदाः लोप्येरन् ।

(ग) अनुच्छेदौ ३३४ तथा ३३५—राज्यं प्रति राज्यानां वा प्रति निर्देशाः जम्मू-कश्मीरराज्यं प्रति निर्देशान् नान्तर्भावयन्ति इति अर्थः ग्राह्यः ।

परिशिष्टम्—२

(१८) भागः १७

एतद् भागस्य उपबन्धाः यावत् ते—

(प्रथमः) सङ्घस्य राजभाषां,

(द्वितीयः) एकराज्यस्य च अन्यराज्यस्य च मध्ये तथा राज्यस्य च सङ्घस्य च मध्ये पत्रव्यवहारार्थं राजभाषां,

(तृतीयः) उच्चतमन्यायालयस्य कार्यवहनभाषां च,
विषयीकुर्वन्ति तावत् पर्यन्तं एव जम्मू-कश्मीरराज्यं प्रति अनुप्रयुक्तानि भवेयुः ।

(१९) भागः १८

(क) ३५२-तमानुच्छेदात् प्रति निम्नलिखितः अनुच्छेदः संनिवेश्येत, तद्यथा—

"३५२ आपातस्य उद्घोषणा—(१) यदि राष्ट्रपतिः समाहितः भवति यद् घोरः आपातः विद्यते यतः हि युद्धेन बाह्याक्रमणेन वा आभ्यान्तर्या अशान्त्या वा भारतस्यः तद्राज्यक्षेत्रस्य कस्यापि भागस्य वा सुरक्षा सङ्कटापन्ना अस्ति तर्हि स उद्घोषणा द्वारा तदाशयस्य घोषणां कर्तुं क्षमते ।

(२) (१) खण्डाधीनं कृता उद्घोषणा—

(क) उत्तरवर्तिन्या उद्घोषणया प्रतिसंहृता भवितुं क्षमते;

(ख) संसदः प्रत्येकसदनस्य पुरतः स्थापिता भवेत्;

(ग) मासद्वयस्य कालावधेः पूर्वं संसदः उभाभ्यां सदनाभ्यां सङ्कल्पद्वारा यदि नानुमोदिता भवेत् तर्हि सा तत्कालावधेः समाप्तौ प्रवर्तनात् प्रविरमेत्—

परन्तु यदि एतादृशी कापि उद्घोषणा तदानीं क्रियते यदा लोकसभा विघटिता वर्तते अथवा लोक सभायाः विघटनं अस्य खण्डस्य (ग) उपखण्डे निर्दिष्टस्य मासद्वयस्य कालावधेः अभ्यन्तरे भवति तथा यदि उद्घोषणायाः अनुमोदकः सङ्कल्पः राज्यसभया पारितः भवति, किन्तु एतादृश्याः उद्घोषणायाः सम्बन्धे कोपि सङ्कल्पः लोकसभया एतादृशस्य कालावधेः समाप्तेः प्राक् न पारितः भवति, तर्हि सा उद्घोषणा तस्मात् दिनाङ्कात् यस्मिन् लोकसभा तस्याः पुनर्घटनानन्तरं प्रथमवारं उपविशति, त्रिशद्दिनानां समाप्तौ प्रवर्तनात् प्रविरमेत् यदि तादृशस्य त्रिशद्दिनानां कालावधेः समाप्तेः पूर्वं उद्-घोषणायाः अनुमोदकः सङ्कल्पः लोकसभया अपि पारितः न भवति ।

(३) यदि राष्ट्रपतिः समाहितः भवति यद् युद्धस्य, बाह्याक्रमणस्य वा आभ्यन्तर्याः अशान्त्याः वा सङ्कटं सन्निहितं वर्तते, तर्हि युद्धस्य कस्यापि एतादृशस्य आक्रमणस्य अशान्त्याः वा वास्तविक्याः घटनायाः पूर्वं, भारतस्य, अथवा भारतस्य राज्यक्षेत्रस्य कस्यापि भागस्य सुरक्षा एवं सङ्कटापन्ना वर्तते इति घोषयन्तीं आपातस्य उद्घोषणां कर्तुं क्षमते ।

(४) एतदनुच्छेदेन राष्ट्रपतये प्रदत्ता शक्तिः, युद्धस्य, बाह्याक्रमणस्य आभ्यन्तर्याः अशान्तेः अथवा युद्धस्य, बाह्याक्रमणस्य, आभ्यन्तर्याः अशान्तेः वा सन्निहितसङ्कटस्य वा इत्येतैः विभिन्नैः

**परिशिष्टम्—२**

आधारैः विभिन्नाः उद्घोषणाः कर्तुं शक्तिं अन्तर्भावयति यद्यपि (१) खण्डस्य अधीनं कापि उद्घोषणा पूर्वं प्रवृत्ता स्यात् न वा, अथवा प्रवर्तमाना स्यात् न वा ।

(५) एतत्संविधाने किमपि सत्यपि—

(क) (१) खण्डे, तथा (३) खण्डे उल्लिखितं राष्ट्रपतेः समाधानं अन्तिमं निश्चायकं च भवेत्, तथा च तत् कस्मिन् अपि न्यायालये केनापि आधारेण वा प्रश्नगतं न क्रियेत ।

(ख) (२) खण्डस्य उपबन्धानां अधीनं,

(प्रथमः) (१) खण्डे वर्णिताशयेन राष्ट्रपतिना उद्घोषणा द्वारा कृतायाः घोषणायाः; अथवा

(द्वितीयः) उद्घोषणायाः अविरतप्रवृत्तेः ;

विधिमान्यता विषये कमपि प्रश्नं केनापि आधारेण ग्रहीतुं न उच्चतमन्यायालयस्य न वा अन्यस्य कस्यापि न्यायालयस्य अधिकारिता भवेत् ।

(६) केवलं आभ्यन्तर्याः अशान्त्याः, तस्याः सन्निहितसङ्कटस्य वा कारणात् कृता आपातोद्घोषणा, (३५४-तमानुच्छेदस्य सम्बन्धं विहाय) जम्मू-कश्मीरराज्यस्य सम्बन्धे तदा एव प्रवृत्ता भवेत् यदा--

(क) सा तद्राज्य शासनस्य अभ्यर्थनया सहमत्या वा कृता भवेत्, अथवा

(ख) यत्र सा एवं न कृता भवेत् तत्र सा ततः परं तस्मिन् राज्ये राष्ट्रपतिना तद्राज्य-शासनस्य अभ्यर्थनया सहमत्या वा प्रवर्तिता भवेत् ।"

(ख) अनुच्छेदः ३५३—पारन्तुकः लोप्येत ।

(ग) अनुच्छेदः ३५६—

(अ) (१) खण्डे एतत् संविधानस्य उपबन्धान् प्रति, उपबन्धं वा प्रति, निर्देशः जम्मू-कश्मीर-राज्यस्य सम्बन्धे जम्मू-कश्मीरराज्यस्य संविधानस्य उपबन्धान् प्रति उपबन्धं वा प्रति, निर्देशान् अन्तर्भावयति इति अर्थः ग्राह्यः ।

(आ) (४) खण्डे आद्यभागात् प्रति निम्नलिखितः भागः संनिवेश्येत, तद्यथा—

"एवं अनुमोदिता उद्घोषणा, यदि प्रतिसंहृता न भवेत् तदा (३) खण्डाधीनं उद्घोषणायाः अनुमोदकयोः सङ्कल्पयोः द्वितीयस्य सङ्कल्पस्य पारणस्य दिनाङ्कात् षण्णां मासानां कालावधेः समाप्तौ प्रवर्तनात् प्रविरमेत्"।

(इ) (५) खण्डात् प्रति निम्नलिखितः खण्डः सन्निवेश्येत, तद्यथा—

"(५) एतत्संविधाने किमपि सत्यपि (१) खण्डे उल्लिखितं राष्ट्रपतेः समाधानं अन्तिमं निश्चायकं च भवेत् तथा च तत् कस्मिन् अपि न्यायालये केनापि आधारेण प्रश्नगतं न क्रियेत। "

**परिशिष्टम्—२**

(घ) अनुच्छेदः ३५७—(२) खण्डात् प्रति निम्नलिखितः खण्डः संनिवेश्येत, तद्यथा—

"(३) राज्यविधानमण्डलस्य शक्तेः प्रयोगे संसदा राष्ट्रपतिना वा (१) खण्डस्य (क) उपखण्डे विनिर्दिष्टेन प्राधिकारिणा वा, निर्मितः कोपि विधिः यं ३५६-तमानुच्छेदस्य अधीनं कृतायाः उद्घोषणायाः अभावे संसद् राष्ट्रपतिः वा तादृशः अन्यः प्राधिकारी वा निर्मातुं क्षमः न भवेत्, उद्घोषणायाः प्रवर्तनात् विरामस्य अनन्तरं एकस्य वर्षस्य कालावधेः समाप्तौ, अक्षमतायाः मात्रां यावत्, उक्तकालावधेः समाप्तेः पूर्वं कृतान् अकृतान् वा विषयान् वर्जयित्वा, प्रभावात् प्रविरमेत्, यदि एवं प्रभावात् प्रविरताः उपबन्धाः समुचितविधानमण्डलस्य अधिनियमेन ततः पूर्वं एव निरस्ताः अथवा उपान्तरणैः सहिताः विरहिताः वा अधिनियमिताः न भवेयुः।"

(ङ) ३५८-तमानुच्छेदात् प्रति निम्नलिखितः अनुच्छेदः संनिवेश्येत, तद्यथा—

"३५८. **आपात काले १९-तमानुच्छेदस्य उपबन्धानां निलम्बनम्**—

यावत् आपातस्य उद्घोषणा प्रवर्तमाना अस्ति तावत, १९-तमानुच्छेदगतं किमपि तृतीय-भागे यथापरिभाषितस्य राज्यस्य कस्यापि विधेः निर्माणस्य अथवा कस्याः अपि कार्यपालिका-क्रियायाः निर्वहणस्य शक्तिं, यं (विधिं) निर्मातुं यां (क्रियां) निर्वोढुं वा तद्राज्यं तद्भागा-न्तर्गतानां उपबन्धानां अभावे क्षमं भवेत्, निर्बन्धितां न कुर्यात्; किन्तु एवं निर्मितः कोपि विधि-यावत्शीघ्रं उद्घोषणा प्रवर्तनात् प्रविरमति, तावत् शीघ्रं अक्षमतायाः मात्रां यावत् प्रभावः रहितः भवेत्, विधेः एवं प्रवर्तनप्रविरामात् पूर्वं कृतान् अकृतान् वा विषयान् वर्जयित्वा।"

(च) अनुच्छेदः ३५९—

(अ) (१) खण्डे "२०-तमं, २१-तमं च अनुच्छेदं विहाय" इत्येतत् लोप्येत।

(आ) (१ अ) खण्डे

(प्रथमः) "(२०-तमं, २१-तमं अनुच्छेदं विहाय)" इत्येतत् लोप्येत;

(द्वितीयः) पारन्तुकः लोप्येत;

(इ) (१ आ) खण्डः लोप्येत।

(ई) (२) खण्डे पारन्तुकः लोप्येत।

(छ) अनुच्छेदः ३६० लोप्येत।

(२०) **भागः १९**—

(क) अनुच्छेदः ३६१ अ—एषः अनुच्छेदः जम्मू-कश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्यते।

(ख) अनुच्छेदः ३६५ लोप्येत।

(ग) अनुच्छेदः ३६७—

(३) खण्डात्परं निम्नलिखितः खण्डः परिवर्ध्येत, तद्यथा—

"(४) जम्मू-कश्मीर राज्यस्य विषये यथानुप्रयुज्यमानस्य संविधानस्य प्रयोजनानां अर्थे—

**परिशिष्टम्—२**

(क) एतत्संविधानं प्रति तस्य उपबन्धान् वा प्रति निर्देशाः तद्राज्यस्य सम्बन्धे यथानुप्रयुक्तं संविधानं प्रति, तस्य उपबन्धान् वा प्रति निर्देशाः सन्ति इति अर्थः ग्राह्यः;

(कक) तद्राज्यस्य तदानीं पदधारिण्या मन्त्रिपरिषदा परामृश्य कार्यं कुर्वन्तं 'सदर-ई-रियासत् इति रूपेण तद्राज्यस्य विधानसभया पुरः प्रशंसितं राष्ट्रपतिना अभिमतं जनं प्रति निर्देशाः जम्मू-कश्मीरराज्यस्य राज्यपालं प्रतिनिर्देशाः इति इव अर्थः ग्राह्यः;

(ख) तद्राज्यस्य शासनं प्रति निर्देशाः तद्राज्यस्य मन्त्रिपरिषदा परामृश्य कार्यं कुर्वन्तं जम्मू-कम्मीरस्य राज्यपालं प्रति निर्देशान् अन्तर्भावयन्तः सन्ति इति अर्थः ग्राह्यः—

परन्तु १९६५ वर्षस्य एप्रिलमासस्य दशमदिनाङ्कात् पूर्वगतस्य कस्यापि कालावधेः सम्बन्धे एतादृशाः निर्देशाः तद्राज्यस्य मन्त्रिपरिषदा परामृश्य कार्यकुर्वन्तं 'सदर-ई-रियासत्' इत्येनं प्रति निर्देशान् अन्तर्भावयन्तः निर्देशाः सन्ति इति अर्थः ग्राह्यः;

(ग) उच्चन्यायालयं प्रति निर्देशाः जम्मू-कम्मीरराज्यस्य उच्चन्यायालयं प्रति निर्देशान् अन्तर्भावयेयुः;

(घ) एतद्राज्यस्य स्थायिनिवासिनः प्रति निर्देशानां अर्थे ते जनाः ग्राह्याः ये सांविधानिकः (जम्मु-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः, १९५४ इत्यस्य प्रारम्भात्. पूर्वं तस्मिन् राज्ये प्रवर्तमानानां विधीनां अधीनं तद्राज्यस्य प्रजाजनरूपेण मान्यताप्राप्ताः आसन् अथवा ये राज्यस्य विधानमण्डलेन निर्मितेन विधिना तद्राज्यस्य स्थायिनिवासिरूपेण मान्यताप्राप्ताः सन्ति; तथा च

(ङ) राज्यपालं प्रति निर्देशाः जम्मू-कश्मीरराज्यस्य राज्यपालं प्रति निर्देशान् अन्तर्भावयेयुः—

परन्तु १९६५ वर्षस्य एप्रिलमासस्य दशमदिनाङ्कात् पूर्वगतस्य कस्यापि कालावधेः सम्बन्धे एतादृशाः निर्देशाः राष्ट्रपतिना जम्मू-कश्मीरस्य 'सदर-ई-रियासत्' इति मान्यतादत्तं जनं प्रति निर्देशाः सन्ति तथा च 'सदर-ई-रियासत्' इत्येतस्य शक्तीनां प्रयोगे क्षमः अस्ति इति राष्ट्रपतिना मान्यतादत्तं कमपि जनं प्रति निर्देशान् अन्तर्भावयन्तः निर्देशाः सन्ति इति अर्थः ग्राह्यः।"

(२१) **भागः** २०

अनुच्छेद ३६८—

(क) (२) खण्डे निम्नलिखितः पारन्तुकः परिवर्ध्येत, तद्यथा—

"अपरंच, एतादृशं संशोधनं जम्मू-कश्मीरराज्यस्य सम्बन्धे तावत् न प्रभवेत्, यावत् ३७०-तमानुच्छेदस्य (१) खण्डाधीनं राष्ट्रपतेः आदेशेन नानुप्रयुज्येत।"

(ख) (४) खण्डः (५) खण्डश्च लोप्येयाताम्; तथा

**परिशिष्टम्—२**

(३) खण्डात्परं निम्नलिखितः खण्डः परिवर्ध्येत, तद्यथा—

"(४) (क) राज्यपालस्य नियुक्तेः, शक्तीनां, कर्त्तव्यानां, कृत्यानां, उपलब्धीनां, भक्तानां, विशेषाधिकाराणां, विमुक्तीनां; अथवा

(ख) निर्वाचनायोगेन निर्वाचनानां अधीक्षणं, निदेशः, नियन्त्रणं च, निर्वाचननामावल्यां विनाविभेदं अन्तर्निवेशास्य पात्रता,प्राप्त वयस्कमताधिकारः, विधानपरिषदः संरचना च इति ये जम्मू-कश्मीरसंविधानस्य १३८, १३९, १४० तथा च ५०-अनुभागेषु निर्दिष्टाः विषयाः सन्ति,

तेषां सम्बन्धे जम्मू-कश्मीरराज्यस्य संविधानस्य कस्मिन् अपि उपबन्धे, तस्य प्रवृत्तौ वा कमपि परिवर्तनं अपेक्षमाणः जम्मू-कश्मीरराज्यस्य विधानमण्डलेन निर्मितः कोपि विधिः राष्ट्रपतेः विचाणार्थं संरक्षितः सन् यावत् तस्य अनुमतिं न लभेत तावत् न प्रवृत्तः भवेत् ।"

(२२) **भागः २१**

(क) ३६९, ३७१, ३७१अ, ३७२अ, ३७३ तथा ३७६तः ३७८अ यावत् तथा ३९२ अनुच्छेदाः लोप्येरन् ।

(ख) अनुच्छेदः ३७४—

(अ) (२) तथा (३) खण्डौ लोप्येयाताम्;

(आ) भारतस्य राज्यक्षेत्रे प्रवृत्तान् विधीन् प्रति निर्देशाः "हिदायत", "ऐलान", "इश्तिहार", "परिपत्रं", "रोवकार", "इर्शाद", "याददाश्त" राज्यपरिषदः सङ्कल्पाः, संविधानपरिषदः सङ्कल्पाः, जम्मू-कश्मीरराज्यस्य राज्यक्षेत्रे विधिप्रभावधराणि अन्यानि लिखितानि च इत्येतानि प्रति निर्देशान् अन्तर्भावयेयुः; तथा

(इ) सविधानस्य प्रारम्भं प्रति निर्देशाः सांविधानिकः (जम्मू-कश्मीरराज्ये अनुप्रयोगः) आदेशः, १९५४ इत्यस्य प्रारम्भं प्रति, अर्थात् १९५४ वर्षस्य मेमासस्य १४ दिनाङ्कं प्रति निर्देशाः, सन्ति इति अर्थः ग्राह्यः ।

(ग) अनुच्छेदः ३८४—

(अ) (१), (२), (३) तथा (५) खण्डाः लोप्येरन् ।

(आ) (४) खण्डे राज्यस्य प्रधानपरिषद्रूपेण कार्यं कुर्वन्तं प्राधिकरणं प्रति निर्देशः जम्मू-कश्मीरराज्यस्य संविधानाधिनियमः, १९७६ संवत्सरीयः इत्यस्य अधीनं घटितां मन्त्रणामण्डलीं प्रति निर्देशः अस्ति इति अर्थः ग्राह्यः; तथा च संविधानस्य प्रारम्भं प्रति निर्देशाः सांविधानिकः (जम्मू-कश्मीर-सम्बन्धे अनुप्रयोगः) आदेशः, १९५४ इत्यस्य प्रारम्भं प्रति अर्थात् १९५४ वर्षस्य मेमासस्य १४ दिनाङ्कं प्रति निर्देशाः सन्ति इति अर्थः ग्राह्यः ।

(२३) **भागः २२—**

३९४ तथा ३९५ तमानुच्छेदौ लोप्येयाताम् ।

**परिशिष्टम्—२**

(२४) **तृतीया अनुसूची**—

५, ६, ७ तथा ८ प्ररूपाणि लोप्येरन् ।

(२५) **पञ्चमी अनुसूची** --

एषा अनुसूची जम्मू-कश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्यते ।

(२६) **षष्ठी अनुसूची**—

एषा अनुसूची जम्मू-कश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्यते ।

(२७) **सप्तमी अनुसूची**—

(क) सूची-१—सङ्घसूची—

(अ) २ अ-प्रविष्टिः लोप्येत;

(आ) ३-प्रविष्टेः प्रति निम्नलिखिता प्रविष्टिः संनिवेश्येत, तद्यथा—
"३. कटकक्षेत्राणां प्रशासनम्"

(इ) ८, ९, ३४ तथा ७९ प्रविष्ट्यः लोप्येरन्;

(ई) ७२-प्रविष्टियां राज्यानां प्रति निर्देशस्य तथा अर्थः ग्राह्यः यथा इव—

(प्रथमः) तद्राज्यस्य कतरस्मिन् अपि विधानमण्डलस्य सदने सञ्जातं निर्वाचनं यया प्रश्नगतं कृतं तस्यां निर्वाचनयाचिकायां जम्मू-कश्मीरराज्यस्य उच्चन्यायालयस्य कस्यापि निर्णयस्य आदेशस्य वा विरुद्धं उच्चतमन्यायालयस्य पुरतः पुनर्विचारप्रार्थनासम्बन्धे जम्मू-कश्मीरराज्यं प्रति निर्देशं अन्तर्भावयति;

(द्वितीयः) अन्यविषययाणां सम्बन्धे तद्राज्यं प्रति निर्देशं नान्तर्भावयति;

(उ) ८१-प्रविष्टियां "आन्ताराज्यिकं प्रव्रजनम्" इत्येतत् लोप्येत;

(ऊ) ९७-प्रविष्ट्याः प्रति निम्नलिखिता प्रविष्टिः संनिवेश्येत, तद्यथा—

"९७. भारतस्य पूर्णप्रभुतायाः, क्षेत्रीयायाः अखण्डतायाश्च अपलापः, प्रश्नगतकरणं, विदारणं च अथवा भारतराज्यक्षेत्रस्य कस्यचिद् भागस्य परिविरतेः अथवा भारतराज्य-क्षेत्रस्य कस्यचिद् भागस्य सङ्घात् पृथग्भावस्य संसाधनं; अथवा भारतस्य राष्ट्रध्वजस्य, भारतस्य राष्ट्रगीतस्य संविधानस्य वा अवमानकरणं इत्येतानि उद्दिश्य निदेशितानां क्रिया-कलापानां निरोधः, तथा च समुद्रमार्गेण, वायुमार्गेण वा, वैदेशिकयात्रायां, आन्तरिकवायु-मार्गयात्रायां, तथा धनादेशान्, स्वरलेखनं, दूरलेखनं च अन्तर्भावयत्सु प्रेषणीयवस्तुषु कराः ।"

(ख) सूची-२—राज्यसूची-२ लोप्येत ।

(ग) सूची ३—समवर्तिनी सूची—

(अ) १-प्रविष्ट्याः प्रति निम्नलिखिता प्रविष्टिः संनिवेश्येत, तद्यथा—

**परिशिष्टम्—२**

"१. दण्डविधिः (प्रथमानुसूच्यां विनिर्दिष्टैःकैश्चिदपि विषयैः सम्बद्धानां विधीनां विरुद्धान् अपराधान् विहाय, तथा च असैनिकशक्तेः साहाय्यार्थं नौसेनायाः, स्थलसेनायाः वायुसेनायाः तथा च सङ्घस्य अन्यस्य कस्यचिदपि सशस्त्रबलस्य च उपयोगं विहाय) तावत् पर्यन्तं यावत् एतादृशः विधिः अस्यां सूच्यां विनिर्दिष्टैः कैश्चिदपि विषयैः सम्बद्धानां विधीनां विरुद्धान् अपराधान् विषयीकरोति";

(आ) २-प्रविष्ट्याः प्रति निम्नलिखिता प्रविष्टिः संनिवेश्यत, तद्यथा—

"२. दण्डप्रक्रिया, तावत्पर्यन्तं यावत् सा कस्मिन् अपि विदेशे राजनयिकैः, वाणिज्यदूतिकैः वा अधिकारिभिः शपथानां ग्राहणं, शपथपत्राणां च अनुप्रमाणितीकरणं विषयीकरोति।"

(इ) ३ प्रविष्टिः, ५ तः १० यावत् (उभे अन्तर्भवतः) प्रविष्ट्यः, १४, १५, १७, २०, २१, २७, २८, २९, ३१, ३२, ३७, ३८, ४१ तथा ४४ प्रविष्ट्यश्च लोप्येरन्

(ई) ११ अ, १७ अ, १७ आ, २० अ तथा ३३ अ प्रविष्ट्यः जम्मू-कश्मीरराज्यस्य सम्बन्धे नानुप्रयुज्यन्ते।

(उ) १२-प्रविष्ट्याः प्रति निम्नलिखिता प्रविष्टिः संनिवेश्येत, तद्यथा—

"१२. साक्ष्यं, शपथाश्च, तावतपर्यन्तं यावत् तानि कस्मिन् अपि विदेशे राजनयिकैः वाणिज्यदूतिकैः वा अधिकारिभिः शपथानां ग्राहणं, शपथपत्राणां च अनुप्रमाणितीकरणं विषयीकरोति।"

(ऊ) १३-प्रविष्ट्याः प्रति निम्नलिखिता प्रविष्टिः संनिवेश्येत, तद्यथा—

"१३. व्यवहारप्रक्रिया, तावत् पर्यन्तं यावत् सा कस्मिन् अपि विदेशे राजनयिकैः वाणिज्यदूतिकैः वा अधिकारिभिः शपथानां ग्राहणं, शपथपत्राणां अनुप्रमाणितीकरणं च विषयीकरोति।"

(ए) २५-प्रविष्ट्याः प्रति निम्नलिखिता प्रविष्टि; संनिवेश्येत, तद्यथा—

"२५. श्रमिकाणां व्यवसायसम्बन्धि शिल्पसम्बन्धि प्रशिक्षणं च।"

(ऐ) ३०-प्रविष्ट्याः प्रति निम्नलिखिता प्रविष्टिः संनिवेश्येत, तद्यथा—

"३०. जन्म-मरण-सम्बन्धिसङ्ख्यानं तावत् पर्यन्तं यावत् तत् जन्मानि मृत्यून् च विषयीकरोति, यस्मिन् अन्तर्भवति जन्मनां मृत्यूनां च पञ्जीकरणम्।

(ओ) ४२-प्रविष्ट्याः प्रति निम्नलिखिता प्रविष्टिः संनिवेश्येत, तद्यथा—

"४२. सम्पत्तेः अर्जनं, अधिग्रहणं च तावत् पर्यन्तं यावत् तत् १-सूच्याः ६७-प्रविष्ट्यां अथवा ३-सूच्याः ४०-प्रविष्ट्यां समावेशितायाः सम्पत्तेः अथवा कस्याः अपि कलामहत्वमय्याः सौन्दर्यमहत्वमय्याः वा मानवीयकलाकृतेः अर्जनं सम्बन्धयति।"

(औ) ४५-प्रविष्टियां "२-सूची वा ३-सूची" इत्येतस्मात् प्रति "एषा सूची" इत्येतत् संनिवेश्येत।

(२८) **नवमी अनुसूची**

(क) ६४-प्रविष्टेः परं निम्नलिखिताः प्रविष्ट्यः परिवर्ध्येत, तद्यथा—

**परिशिष्टम्—२**

"६४अ—जम्मू-कश्मीरराज्यस्य "कुथ" अधिनियमः (१९७८-संवत्सरस्य १);

६४आ—जम्मू-कश्मीरस्य अभिधृतिः अधिनियमः (१९८०-संवत्सरस्य २);

६४इ—जम्मू-कश्मीरस्य भूमेः अन्यसङ्क्राणं अधिनियमः (१९९४-संवत्सरस्य ५);

६४-ई—जम्मू-कश्मीरस्य विपुलभूसम्पदां उत्सादनस्य अधिनियमः (२००७-संवत्सरस्य १७);

६४उ—जागीराणां तथा अन्यभूराजस्वसमनुदेशनादीनां च प्रत्याहरणसम्बन्धी १९५१ वर्षस्य ६ एच क्रमाङ्कितः १०-३-१९५१ दिनाङ्कितः आदेशः;

६४ऊ—जम्मू-कश्मीरस्य वन्धीकृतसम्पत्तीनां प्रत्यास्थापनाधिनियमः, १९७६ (१९७६ वर्षस्य अधिनियमः १४);

६४ऋ—जम्मू-कश्मीरस्य ऋणीनां अनुतोषस्य अधिनियमः, १९७६ (१९७६ वर्षस्य अधिनियमः १५);

(ख) ६५तः ८६-यावत् प्रविष्ट्यः जम्मू-कश्मीरराज्यसम्बन्धे नानुप्रयुज्यन्ते ।

(ग) ८६-प्रविष्टेः परं निम्नलिखिता प्रविष्टिः अन्तर्वेश्येत, तद्यथा—

"८७. लोकप्रतिनिधित्वाधिनियमः १९५१ (१९५१ वर्षस्य केन्द्रीयाधिनियमः ४३); लोकप्रतिनिधित्वस्य (संशोधनं) अधिनियमः, १९७४ (१९७४ वर्षस्य केन्द्रीयाधिनियमः ५८); निर्वाचनविधीनां (संशोधनं) अधिनियमः, १९७५ (१९७५ वर्षस्य केन्द्रीयाधिनियमः ४०)";

(घ) ९१-प्रविष्टेः परं निम्नलिखिता प्रविष्टिः अन्तर्वेश्येत, तद्यथा—

"९२. आन्तरिकसुरक्षाधिनियमः १९७१ (१९७१ वर्षस्य केन्द्रीयाधिनियमः २६)"

(ङ) १२९-प्रविष्टेः परं निम्नलिखिता प्रविष्टिः अन्तर्वेश्येत, तद्यथा—

"१३०. आक्षेपणीयविषयाणां प्रकाशनस्य निरोधः अधिनियमः, १९७६ (१९७६ वर्षस्य केन्द्रीयाधिनियमः २७)।"

(च) ८७, ९२ तथा १३० प्रविष्टीनां यथोपरि निर्दिष्टं अस्ति तथा अन्तर्वेशात् परं ८७तः १८८ यावत् प्रविष्ट्यः क्रमशः ६५तः १६६ यावत् इति पुनः क्रमाङ्किताः क्रियेरन् ।

## परिशिष्टिम्—३

### संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्मात् उद्धरणानि

*　　*　　*　　*

१. संक्षिप्तं नाम प्रारम्भश्च (१) *　　*　　*　　*

(२) एषः अधिनियमः तस्मात् दिनाङ्कात् प्रवर्तमानः भवेत् यं केन्द्रीयशासनं राजपत्रे अधिसूचनया नियतेत, तथा एतदधिनियमस्य विभिन्नानं उपबन्धानां कृते विभिन्नाः दिनाङ्काः नियतनक्षमाः ।

*　　*　　*　　*

३. २२-अनुच्छेदस्य संशोधनम्—

(क) (४) खण्डात् प्रति निम्नलिखितः खण्डः संनिवेशितः भवेत्, तद्यथा—

(४) निवारकनिरोधाय उपबन्धयन् कोपि विधिः कस्यापि जनस्य निरोधं मासद्वयकालावधेः परं तावत् न प्राधिकृतं कुर्यात्, यावत् समुचितोच्चन्यायालयस्य मुख्यन्यायमूर्तिनः पुरःप्रशंसनानुसारं घटितया मन्त्रणा-मण्डल्या उक्तमासद्वयावधेः समाप्तेः प्राक् एतस्याः मते तादृशनिरोधाय पर्याप्तं कारणं अस्ति इति प्रतिवेदनं दत्तं न भवति—

परन्तु मन्त्रणामण्डली एकेन अध्यक्षेण तथा न्यूनात् न्यूनं द्वाभ्यां अन्यसदस्याभ्यां सम्भूय भवेत् तथा अध्यक्षः समुचितस्य उच्चन्यायालयस्य सेवारतः न्यायाधीशः भवेत् तथा अन्यसदस्याः कस्यचिद् अपि उच्च-न्यायालयस्य सेवारताः, सेवानिवृत्ताः वा न्यायाधीशाः भवेयुः—

अपरं च, एतत्खण्डगतं किमपि कस्यापि जनस्य निरोधं तादृशस्य कालावधेः परं न प्राधिकृतं कुर्यात् यादृशः (७) खण्डस्य (क) उपखण्डस्य अधीनं संसदा निर्मितेन विधिना विहितः भवेत् ।

**स्पष्टीकरणम्**—एतस्मिन् खण्डे "समुचितोच्चन्यायालयः" इत्येतेन अभिप्रेयते—

(१) भारतशासनेन अथवा एतत्शासनस्य अधीनस्थेन केनापि अधिकारिणा प्राधिकारिणा वा कृतस्य निरोधादेशस्य अनुसरणे निरुद्धस्य जनस्य विषये— दिल्लीसङ्घराज्यक्षेत्रस्य उच्चन्यायालयः;

(२) सङ्घराज्यक्षेत्रात् भिन्नस्य कस्यापिराज्यस्य शासनेन कृतस्य निरोधादेशस्य अनुसरणे निरुद्धस्य जनस्य विषये—तद्राज्यस्य उच्चन्यायालयः; तथा

(३) कस्यापि सङ्घराज्यक्षेत्रस्य प्रशासकस्य अधीनस्थेन केनापि अधिकारिणा, प्राधिकारिणा वा कृतस्य निरोधादेशस्य अनुसरणे निरुद्धस्य जनस्य विषये—सः उच्चन्यायालयः यः संसदा एतत् सम्बन्धे निर्मितेन विधिना तदधीनं वा विनिर्दिष्टः भवेत् ।

(ख) (७) उपखण्डे :

(१) (क) उपखण्डः लोपितः भवेत्,

(२) (ख) उपखण्डः (क) उपखण्डरूपेण पुनः अक्षराङ्कितः भवेत्, तथा

(३) (ग) उपखण्डः (ख) उपखण्डरूपेण पुनः अक्षराङ्कितः भवेत् तथा एवं पुनः अक्षराङ्किते उपखण्डे "(४) खण्डीय (क) उपखण्डाधीनं" इति शब्देभ्यः, कोष्ठकाभ्यां, अङ्कात् च प्रति "(४) खण्डाधीनं" इति शब्दः कोष्ठकः अङ्कश्च संनिवेशिताः भवेयुः ।

*　　*　　*　　*

## परिशिष्टम्—४

## संविधानस्य (एकोनपञ्चाशत्तमं संशोधधं) अधिनियमः, १९८४

### भारतस्य संविधानस्य पुनः संशोधनाय अधिनियमः

भारतगणराज्यस्य पञ्चत्रिंशत्तमे वर्षे संसदा एतद् अधिनियमितं भवेत्, तद्यथा :—

१. **सङ्क्षिप्तं नाम, प्रारम्भश्च**—(१) एषः अधिनियमः संविधानस्य (एकोनपञ्चाशत्तमं संशोधनं) अधिनियमः, १९८४ उक्तः भवेत्।

(२) एषः अधिनियमः तस्मात् दिनाङ्कात् प्रवर्तमानः भवेत् यं केन्द्रीयशासनं राजपत्रे अधिसूचनया नियतेत।

२. **२४४-तमानुच्छेदस्य संशोधनम्**—संविधानस्य २४४-तमानुच्छेदे (१) खण्डे "मेघालयराज्यात्" इत्येतत्प्रति "मेघालयराज्यात्, त्रिपुराराज्यात्" इति संनिवेशितं भवेत्।

३. **पञ्चमानुसूच्याः संशोधनम्**—संविधानस्य पञ्चमानुसूच्यां "मेघालयराज्यं"—इत्येतत्प्रति "मेघालय-राज्यं, त्रिपुराराज्यं" इति संनिवेशितं भवेत्।

४. **षष्ठानुसूच्याः संशोधनम्**—संविधानस्य षष्ठानुसूच्यां—

(क) शीर्षके "मेघालयराज्ये" इत्येतत्प्रति "मेघालयराज्ये, त्रिपुराराज्ये" इति संनिवेशितं भवेत्;

(ख) १ प्रच्छेदस्य (१) उपप्रच्छेदे, "१, २ भागानां" इत्येतयो शब्दाङ्कयोः प्रति "१, २, २क भागानां" इत्येते शब्दाक्षराङ्काः संनिवेशिताः भवेयुः।

(ग) १२ अ प्रच्छेदात् परं निम्नलिखितः प्रच्छेदः अन्तर्वेशितः भवेत्; तद्यथा—

"**१२अअ—संसदः त्रिपुराराज्यस्य विधानमण्डलस्य च अधिनियमानां त्रिपुरराज्यस्य स्वशासिमण्डले स्वशासि-प्रदेशेषु च अनुप्रयोगः**—एतत्संविधाने किमपि सत्यपि,—

(क) एतदनुसूच्याः ३ प्रच्छेदस्य (१) उपप्रच्छेदे विनिर्दिष्टस्य कस्यापि विषयस्य सम्बन्धे त्रिपुराराज्यस्य मण्डलपरिषदा कयाचित् प्रादेशिकपरिषदा वा निर्मितस्य विधेः कोपि उपबन्धः अथवा एतदनुसूच्याः ८ प्रच्छेदस्य, १० प्रच्छेदस्य वा अधीनं तद्राज्यस्य मण्डलपरिषदा, कयाचित् प्रादेशिकपरिषदा वा निर्मितस्य कस्यापि विनियमस्य कोपि उपबन्धः यदि एतद्विषयस्य सम्बन्धे त्रिपुराराज्यस्य विधानमण्डलेन निर्मितस्य विधेः कस्यापि उपबन्धस्य विरोधी अस्ति, तर्हि यथायथं मण्डलपरिषदा, प्रादेशिकपरिषदा वा, त्रिपुराराज्यस्य विधानमण्डलेन विधिः निर्मितः भवति तत्पूर्वं, तत्पश्चात् वा, निर्मितः विधिः यमः विनि वा, यावत् पर्यन्तं सः विरोधी अस्ति तावत् पर्यन्तं शून्यः भवेत्,; त्रिपुराराज्यस्य विधानमण्डलेन निर्मितः विधिश्च तत्र अभिभावी भवेत्;

(ख) राष्ट्रपतिः संसदः कस्यापि अधिनियमस्य सम्बन्धे अधिसूचनया निदेष्टुं क्षमते, यत् सः त्रिपुरराज्यस्य कतमस्मिन् स्वशासिमण्डले, स्वाशसिप्रदेशे वा नानुप्रयुज्येत अथवा एतादृशे मण्डले, प्रदेशे वा तस्य कतमस्मिन् भागे वा तादृशैः अपवादैः उपान्तरणैः वा सह अनुप्रयुज्येत यादृशानि सः अधिसूचनायां विनिर्दिशेत्; तथा एतादृशः कोपि निदेशः तथा दीयेत यथा भूतलक्षिप्रभावेण कार्यकरः भवेत्।"

(घ) १७ प्रच्छेदे स्थानद्वये यत्र "मेघालयराज्यस्य" इति विद्यते तत्र तदनन्तरं "त्रिपुराराज्यस्य" इति अन्त-र्वेशितं भवेत्;

**परिशिष्टम्—४**

(ङ) २० प्रच्छेदे—

(प्रथमः) (१) उपप्रच्छेदं—

(अ) "प्रथमभागे, द्वितीयभागे" इति पाठात् परं "द्वितीय अ-भागे" इति पाठः अन्तर्वेशितः भवेत्;

(आ) "मेघालयराज्यस्य" इत्येतत् परं "त्रिपुराराज्यस्य" इति अन्तर्वेशितं भवेत् ।

(द्वितीयः) (२) उपप्रच्छेदे, "निम्नलिखितसारिण्यां" इत्येतत्प्रति "निम्नलिखितसारिण्यां प्रथमभागे, द्वितीयभागे, तृतीयभागे वा" इति संनिवेशितं भवेत् ।

(तृतीयः) (२) उपप्रच्छेदात् परं निम्नलिखितः उपप्रच्छेदः अन्तर्वेशितः भवेत्; तद्यथा—

(३) निम्नलिखितसारिण्यां द्वितीय-अ-भागे "त्रिपुराराज्यजनजातिक्षेत्रमण्डलं" प्रति निर्देशस्य तथा अर्थः ग्राह्यः यथा सः त्रिपुराराज्यजनजातिक्षेत्राणां स्वशासिमण्डलपरिषद् अधिनियमः, १९७९ इत्यस्य प्रथमानुसूच्यां विनिर्दिष्टं जनजातियुक्तं क्षेत्रं प्रति निर्देशः अस्ति ।

**(च)** सारिण्यां स्वप्रविष्टिभिः सहितस्य द्वितीयभागस्य परं निम्नलिखितः भागः अन्तर्वेशितः भवेत्; तद्यथा—

द्वितीयः-अ-भागः

त्रिपुराराज्यजनजातिक्षेत्रमण्डलम् ।

## परिशिष्टम्—५

## संविधानस्य (एकपञ्चाशत्तमं संशोधनं) अधिनियमः, १९८४*

### भारतस्य संविधानस्य पुनः संशोधनाय अधिनियमः

भारतगणराज्यस्य पञ्चत्रिंशत्तमे वर्षे संसदा एतत् अधिनियमियतं भवेत्, तद्यथा :—

१. **सङ्क्षिप्तं नाम, प्रारम्भश्च**—(१) एषः अधिनियमः संविधानस्य (एकपञ्चाशत्तमं संशोधनं) अधिनियमः, १९८४ उक्तः भवेत् ।

(२) एषः अधिनियमः तस्मात् दिनाङ्कात् प्रवर्तमानः भवेत् यं केन्द्रीयशासनं राजपत्रे अधिसूचनया नियतेत ।

२. **३३०-तमानुच्छेदस्य संशोधनम्**—(१) संविधानस्य ३३०-तमस्य अनुच्छेदस्य (१) खण्डे, (ख) उपखण्डात् प्रति एषः उपखण्डः संनिवेशितः भवेत्; तद्यथा—

"(ख) असमस्य स्वशासिमण्डलेषु अनुसूचित जनजातीः वर्जयित्वा अन्यासां अनुसूचितजनजातीनां कृते; तथाच"

(२) (१) उपखण्डेन कृतेन संविधानस्य ३३०-तमानुच्छेदस्य संशोधनेन लोकसभायां प्रतिनिधित्वे तावत् कोपि प्रभावः न भवेत् यावत् अधिनियमस्य प्रारम्भसमये विद्यमानायाः लोकसभायाः विघटनं न भवति ।

३. **३३२-तमानुच्छेदस्य संशोधनम्**—(१) संविधानस्य ३३२-तमे अनुच्छेदे (१) खण्डे "असमस्य जनजातिक्षेत्राणां,नागालैंडस्य, मेघालयस्य च अनुसूचितजनजातीः वर्जयित्वा" इति एतस्मात् प्रति "असमस्य स्वशासिमण्डलेषु अनुसूचितजनजातीः वर्जयित्वा" इति सन्निवेशितः भवेत् ।

(२) संविधानस्य ३३२-तमानुच्छेदस्य (१) उपखण्डे कृतं संशोधनं नागालैंडराज्यस्य विधानसभायाः मेघालयराज्यस्य विधानसभायाश्च प्रतिनिधित्वे तावत् प्रभावं न आपादयेत् यावत् अस्य अधिनियमस्य प्रारम्भसमये विद्यमानायाः नागालैंडराज्यस्य विधानसभायाः तथाच मेघालयराज्यस्य विधानसभायाः विघटनं न भवेत् ।

---

*एषः अधिनियमः संसदः सदनाभ्यां पारितोपि राज्यविधानमण्डलैः अनुसमर्थनं राष्ट्रपतेश्चानुमतिं अपेक्षते ।

# परिशिष्टम्—६

## संविधानस्य (द्विपञ्चाशत्तमं संशोधनं) अधिनियमः १९८५
## भारतस्य संविधानस्य पुनः संशोधनाय अधिनियमः

भारतगणराज्यस्य षट्त्रिंशत्तमे वर्षे संसदा एतद् अधिनियमितं भवेत्, तद्यथा—

१. **सङ्क्षिप्तं नाम, प्रारम्भश्च**—(१) एषः अधिनियमः संविधानस्य (द्विपञ्चाशत्तमं संशोधनं) अधिनियमः, १९८५ उक्तः भवेत् ।

(२) एषः अधिनियमः तस्मात् दिनाङ्कात्* प्रवर्त्तमानः भवेत् यं केन्द्रीयशासनं राजपत्रे अधिसूचनया नियतेत ।

२. **१०१-तमानुच्छेदस्य संशोधनम्**—संविधानस्य १०१-तमानुच्छेदस्य (३) खण्डस्य (क) उपखण्डे "१०२-तमानुच्छेदस्य (१) खण्डे" इत्येतेभ्यः शब्दाङ्ककोष्ठकेभ्यः प्रति "१०२-तमानुच्छेदस्य (१) खण्डे, (२) खण्डे वा" इति शब्दाङ्ककोष्ठकाः संनिवेशिताः भवेयुः ।

३. **१०२-तमानुच्छेदस्य संशोधनम्**—संविधानस्य १०२-तमानुच्छेदे—

(क) "(२) कोपि जनः भारतशासनस्य कस्यापि राज्यशासनस्य वा अधीनं लाभस्य पदं धारयति इति एतदनुच्छेदस्य प्रयोजनानां अर्थे" इति शब्दाङ्ककोष्ठकेभ्यः प्रति "**स्पष्टीकरणम्**—कोपि जनः भारतशासनस्य कस्यापि राज्यशासनस्य वा अधीनं लाभस्य पदं धारयति इति एतत्खण्डस्य प्रयोजनानां अर्थे" इति शब्दाङ्ककोष्ठकाः संनिवेशिताः भवेयुः ।

(ख) एतदनुच्छेदान्ते निम्नलिखितः खण्डः अन्तर्वेशितः भवेत्; तद्यथा—

"(२) कोपि जनः संसदः अन्यतरत्सदनस्य सदस्यत्वाय निरर्हः भवेत् यदि सः दशमानुसूच्याः अधीनं एवं निरर्हः भवति ।"

४. **१९०-तमानुच्छेदस्य संशोधनम्**—संविधानस्य १९०-तमानुच्छेदस्य (३) खण्डस्य (क) उपखण्डे "१९१-तमानुच्छेदस्य (१) खण्डे" इत्येतेभ्यः शब्दाङ्ककोष्ठकेभ्यः प्रति "१९१-तमानुच्छेदस्य (१) खण्डे, (२) खण्डे वा" इति शब्दाङ्ककोष्ठकाः संनिवेशिताः भवेयुः ।

५. **१९१-तमानुच्छेदस्य संशोधनम्**—संविधानस्य १९१-तमानुच्छेदे—

(क) "(२) कोपि जनः भारतशासनस्य, प्रथमानुसूच्यां विनिर्दिष्टस्य कस्यापि राज्यशासनस्य वा, अधीनं लाभस्य पदं धारयति इति एतदनुच्छेदस्य प्रयोजनानां अर्थे" इति शब्दाङ्ककोष्ठकेभ्यः प्रति "**स्पष्टीकरणम्**—कोपि जनः भारतशासनस्य, प्रथमानुसूच्यां विनिर्दिष्टस्य कस्यापि राज्यशासनस्य वा, अधीनं लाभस्य पदं धारयति इति एतत्खण्डस्य प्रयोजनानां अर्थे" इति शब्दाङ्ककोष्ठकाः संनिवेशिताः भवेयुः ।

(ख) एतदनुच्छेदान्ते निम्नलिखितः खण्डः अन्तर्वेशितः भवेत्; तद्यथा—

"(२) कोपि जनः राज्यस्य विधानसभायाः विधानपरिषदः वा सदस्यत्वाय निरर्हः भवेत् यदि सः दशमानुसूच्याः अधीनं एवं निरर्हः भवति ।"

६. **दशमानुसूच्याः परिवर्धनम्**—संविधानस्य नवमानुसूच्याः परं निम्नलिखिता अनुसूची परिवर्धिता भवेत्, तद्यथा—

---

* १-३-१९८५ दिनाङ्कात् प्रवर्तमानः ।

परिशिष्टम्—६

'दशमी अनुसूची

[अनुच्छेदौ १०२(२), १९१(२) च]

## दलपरिवर्तनस्य आधारेण निरर्हताविषयकाः उपबन्धाः

१. **निर्वचनानि**—एतस्यां अनुसूच्यां प्रसङ्गेन अन्यथा अपेक्षितं चेत् न भवति—

(क) "सदनं" इत्येतेन संसदः अन्यतरत्सदनं, राज्यस्य यथायथं विधानसभा, विधानमण्डलस्य अन्यतरत् सदनं वा अभिप्रेयते;

(ख) सदनस्य कस्यचित् सदस्यस्य विषये, यः यथायथं २-प्रच्छेदस्य, ३-प्रच्छेदस्य, ४-प्रच्छेदस्य वा उपबन्धानां अनुरोधेन कस्यचिद्राजनीतिकदलस्य सदस्यः वर्तते, "विधानमण्डलदलः" इत्येतेन अभिप्रेयते तत्सदनस्य तादृशानां सर्वेषां सदस्यानां समूहः यादृशाः उक्तोपबन्धानां अनुरोधेन तदानीं उक्तस्य राजनीतिक-दलस्य सदस्याः वर्तन्ते;

(ग) सदनस्य कस्यचित् सदस्यस्य विषये "आद्यः राजनीतिकदलः" इत्येतेन सः राजनीतिकदलः अभिप्रेयते यस्य सः २-प्रच्छेदस्य (१) उप-प्रच्छेदस्य प्रयोजनानां अर्थे सदस्यः वर्तते;

(घ) "प्रच्छेदः" इत्येतेन अस्याः अनुसूच्याः प्रच्छेदः अभिप्रेयते ।

२. **दलपरिवर्तनस्य आधारेण निरर्हता**— (१) ३-प्रच्छेदस्य, ४-प्रच्छेदस्य, ५-प्रच्छेदस्य च उपबन्धानां अधीनं सदनस्य कोपि सदस्यः, यः कस्यचिद्राजनीतिकदलस्य सदस्यः वर्तते, सदनस्य सदस्यत्वाय निरर्हः भवेत्—

(क) यदि सः, यस्य दलस्य सदस्यः वर्तते, तस्य सदस्यत्वं स्वेच्छया त्यजति; अथवा

(ख) यदि सः, यस्य दलस्य सदस्यः वर्तते, तेन अथवा तेन तन्निमित्तं प्राधिकृतेन केनचित् जनेन, प्राधिकारिणा वा प्रदत्तस्य निदेशस्य विरुद्धं, तादृशस्य राजनीतिकदलस्य, जनस्य, प्राधिकारिणः वा पूर्वानुज्ञां विना, तस्मिन् सदने मतं ददाति, मतदानात् विरतः वा भवति; तथा च तादृशं मतदानं, मतदानात् विरतिर्वा तेन दलेन, जनेन, प्राधिकारिणा वा, तयोः अन्यतरस्यां दशायां, तादृशमतदानदिनात्, मतदानविरतेः दिनात् वा पञ्चदशदिनकालावधौ न क्षम्यते ।

**स्पष्टीकरणम्**—एतत्प्रच्छेदस्य प्रयोजनानां अर्थे –

(क) सदनस्य कस्यचिदपि निर्वाचितसदस्यस्य विषये एतत् मन्येत यत् सः तस्य राजनीतिकदलस्य, यदि कश्चित् स्यात्, सदस्यः वर्तते, येन सः स्वसदस्यः इति मत्वा निर्वाचनार्थं अभ्यर्थित्वेन वृतः आसीत् ।

(ख) सदनस्य कस्यचिदपि नामनिर्देशितसदस्यस्य विषये—

(प्रथमः) यदि सः तादृशसदस्यत्वाय नामनिर्देशनदिनाङ्के कस्यचिद्राजनीतिकदलस्य सदस्यः वर्तते, तर्हि सः तस्य राजनीतिकदलस्य सदस्यः वर्तते इति मन्येत;

(द्वितीयः) अन्यथा च, सः यथायथं ९९-तमानुच्छेदस्य, १८८-तमानुच्छेदस्य वा अपेक्षाणां अनुपालनात्परं स्वस्थानग्रहणदिनाङ्कात् षण्मासकालावधेः समाप्तेः पूर्वं यस्य राजनीतिकदलस्य यथायथं सदस्यत्वं स्वीकरोति, प्रथमतः सदस्यः भवति वा, तस्य सदस्यः वर्तते इति मन्येत ।

(२) सदनस्य कोपि निर्वाचितः सदस्यः यः कस्यचिद्राजनीतिकदलस्य अभ्यर्थित्वात् इतररूपेण निर्वाचितः आसीत्, यदि निर्वाचनात् परं कस्यचिद्राजनीतिकदलस्य सदस्यत्वं स्वीकरोति, तर्हि सः सदनस्य सदस्यत्वाय निरर्हः भवेत् ।

परिशिष्टम्—६

(३) सदनस्य कोपि नामनिर्देशितः सदस्यः सदनस्य सदस्यत्वाय निरर्हः भवेत्, यदि सः यथायथं ९९-तमानुच्छेदस्य १८८-तमानुच्छेदस्य वा अपेक्षाणां अनुपालनात्परं स्वस्थानग्रहणादिनाङ्कात् षण्मासकालावधेः समाप्तेः परं कस्यचिदपि राजनीतिकदलस्य सदस्यत्वं स्वीकरोति ।

(४) एतत्प्रच्छेदस्य पूर्वगामिषु उपबन्धेषु यत् किमपि सत्यपि, कस्यचित्तादृशस्य जनस्य विषये, यः संविधानस्य (द्विपञ्चाशत्तमं संशोधनं) अधिनियमः, १९८५ इत्येतस्य प्रारम्भसमये सदस्यः वर्तते (सः चेत् निर्वाचितः सदस्यः स्यात् नामनिर्देशितः सदस्यः वा स्यात्) —

(प्रथमः) यदि सः एतादृशात् प्रारम्भात् अव्यवहितपूर्वं कस्यचिद्राजनीतिकदलस्य सदस्यः आसीत्, तर्हि एतस्य प्रच्छेदस्य (१) उपप्रच्छेदस्य प्रयोजनानां अर्थे इदं मन्येत यत् सः तेन राजनीतिकदलेन अभ्यर्थित्वेन वृतो भूत्वा निर्वाचितः सदस्यः वर्तते;

(द्वितीयः) अन्यथा च, यथायथं एतस्य प्रच्छेदस्य (२) उपप्रच्छेदस्य प्रयोजनानां अर्थे इदं मन्येत यत सः कस्यचिद्राजनीतिकदलस्य अभ्यर्थित्वात् इतररूपेण निर्वाचितः सदस्यः वर्तते; अथवा एतस्य प्रच्छेदस्य (३) उपप्रच्छेदस्य प्रयोजनानां अर्थे इदं मन्येत यत् सः सदनस्य नामनिर्देशितः सदस्यः वर्तते ।

३. **दलपरिवर्तनस्य आधारेण सञ्जातायाः निरर्हतायाः दलस्य विभजने सति नानुप्रयोगः**—यदि सदनस्य कोपि सदस्यः अध्यर्थयति यत् सः, तस्य विधानमण्डलदलस्य अन्येपि केचन सदस्याश्च, तादृशस्य दलांशस्य प्रतिनिधित्वं कुर्वन्तं समूहं घटयन्ति यः तस्य राजनीतिकदलस्य विभजनकारणात् समुत्पद्यते तथा च यस्मिन् समूहे तद्विधानमण्डलस्य न्यूनात् न्यूनं तृतीयांशमिताः सदस्याः सन्ति, तदा—

(क) सः २-प्रच्छेदस्य (१) उपप्रच्छेदस्य अधीनं एतदाधारेण निरर्हः न भवेत् यत्—

(प्रथमः) सः स्वकीयस्य आद्यराजनीतिकदलस्य सदस्यतां स्वेच्छया अत्यजत्, अथवा

(द्वितीयः) सः तादृशदलेन, तेन तन्निमित्तं प्राधिकृतेन केनचित् जनेन, प्राधिकारिणा वा प्रदत्तस्य निदेशस्य विरुद्धं, तादृशस्य दलस्य, जनस्य, प्राधिकारिणः वा पूर्वानुज्ञां विना तस्मिन् सदने मतं दत्तवान्, मतदानात् विरतः वा अभवत्, तादृशं मतदानं, मतदानात्, सा विरतिः वा तेन दलेन, जनेन, प्राधिकारिणा वा तस्मात् मतदानदिनात् मतदानविरतेर्दिनात् वा पञ्चदशदिनकालावधौ न क्षम्यते स्म; तथा च

(ख) तादृशात् दलविभजनकालात् परं तादृशस्य दलांशस्य विषये एतत् मन्येत यत् सः २-प्रच्छेदस्य (१) उपप्रच्छेदस्य प्रयोजनानां अर्थे, तादृशः राजनीतिकदलः विद्यते यस्यः सः सदस्यः वर्तते; सः च एतत्प्रच्छेदस्य प्रयोजनानां अर्थे तस्य आद्यः राजनीतिकदलः विद्यते ।

४. **दलपरिवर्तनस्य आधारेण सञ्जातायाः निरर्हतायाः दलविलये सति नानुप्रयोगः**—(१) सदनस्य कोपि सदस्यः २-प्रच्छेदस्य (१) उपप्रच्छेदस्य अधीनं निरर्हः न भवेत् यदि तस्य आद्यः राजनीतिकदलः अन्यस्मिन् राजनीतिकदले विलीयते, सः च अध्यर्थयति यत् सः, आद्यराजनीतिकदलस्य अन्ये सदस्याश्च—

(क) यथायथं, तादृशस्य राजनीतिकदलस्य अथवा तादृशविलयानन्तरं घटितस्य नूतनस्य राजनीतिकदलयस्य सदस्यत्वं स्वीकुर्वन्ति; अथवा

(ख) तैः विलयः न स्वीक्रियते, तथा पृथग्भूतस्य समूहस्य रूपेण वर्तनं विनिश्चीयते,

तथा च तादृशात् विलयात् परं यथायथं तादृशस्य अन्यस्य राजनीतिकदलस्य, अथवा नूतनस्य राजनीतिकदलस्य, अथवा समूहस्य विषये एतत् मन्येत यत् सः दलः २-प्रच्छेदस्य (१) उपप्रच्छेदस्य प्रयोजनान अर्थे तादृशः राजनीतिकदलः विद्यते यस्य सः सदस्यः वर्तते तथा च सः दलः एव एतस्य उपप्रच्छेदस्य प्रयोजनानां अर्थे तस्य आद्यः राजनीतिकदलः विद्यते ।

**परिशिष्टम्—६**

(२) एतस्य प्रच्छेदस्य (१) उपप्रच्छेदस्य प्रयोजनानां अर्थे, सदनस्य कस्यचित् सदस्यस्य आद्यः राजनीतिकदलः अन्यस्मिन् विलीनः इति तदैव मन्येत यदा सम्बध्यमानस्य विधानमण्डलस्य सदस्यानां द्वाभ्यां तृतीयांशाभ्यां तादृशे विलये सहमतिः सञ्जायते ।

**५. विमुक्तिः**—एतस्यां अनुसूच्यां यत् किमपि सत्यपि यः कोपि जनः लोकसभायाः अध्यक्षरूपेण, उपाध्यक्षरूपेण वा, राज्यसभायाः उपसभापतिरूपेण वा, कस्यचिद्राज्यस्य विधानपरिषदः सभापतिरूपेण, उपसभापतिरूपेण वा कस्यचिद्राज्यस्य विधानसभायाः अध्यक्षरूपेण, उपाध्यक्षरूपेण वा निर्वाचितः भवति सः एतस्याः अनुसूच्याः अधीनं निरर्हः न भवेत्—

(क) यदि सः तादृशपदाय निर्वाचनात् परं तस्य राजनीतिकदलस्य सदस्यतां स्वेच्छया त्यजति यस्य सः तन्निर्वाचनात् अव्यवहितपूर्वं सदस्यः[1] आसीत्, ततः परं च यावत् तत् पदं तेन ध्रियते तावत् तस्मिन् राजनीतिकदले पुनः न प्रविशति अथवा अन्यस्य राजनीतिकदलस्य सदस्यत्वं न स्वीकरोति; अथवा

(ख) यदि सः तादृशाय पदाय निर्वाचनकारणात् तस्य राजनीतिकदलस्य सदस्यतां त्यजति यस्य सः तन्निर्वाचनात् अव्यवहितपूर्वं सदस्यः आसीत् तथा च तत्पदात् विरतौ तस्मिन् राजनीतिकदले पुनः प्रविशति ।

**६. दलपरिवर्तनस्य आधारेण सञ्जातां निरर्हतां विषयीकृत्य समुत्पन्नानां प्रश्नानां विनिश्चयः**—(१) यदि एषः प्रश्न समुत्पद्यते यत् सदनस्य कोपि सदस्यः एतस्याः अनुसूच्याः अधीनं निरर्हताग्रस्तः अस्ति न वा, तर्हि सः प्रश्नः यथायथं तस्य सदनस्य सभापतिना अध्यक्षेण वा कृताय विनिश्चयाय निर्देशितः भवेत्, तस्य विनिश्चयश्च अन्तिमः भवेत्—

परन्तु यदि एषः प्रश्नः समुत्पद्यते यत् सदनस्य सभापतिर्वा, अध्यक्षः वा निरर्हताग्रस्तः अस्ति न वा, तर्हि सः प्रश्नः तेन सदस्येन कृताय विनिश्चयाय निर्देशितः भवेत् यस्तेन सदनेन एतत् प्रयोजनार्थं निर्वाचितः स्यात्; तस्य विनिश्चयश्च अन्तिमः भवेत् ।

(२) एतस्याः अनुसूच्याः अधीनं कस्यचिदपि सदस्यस्य निरर्हताविषयके प्रश्ने एतत् प्रच्छेदस्य (१) उपप्रच्छेदस्य अधीनं कृतानां सर्वासां कार्यप्रवृत्तीनां विषये एवं मन्येत यथा ताः यथायथं १२२-तमानुच्छेदस्य अर्थानुरोधेन कृताः संसदः कार्यप्रवृत्तयः सन्ति, अथवा २१२-तमानुच्छेदस्य अर्थानुरोधेन कृताः राज्यविधानमण्डलस्य कार्यप्रवृत्तयः सन्ति ।

**७. न्यायालयानां अधिकारितायाः निषेधः**—अस्मिन् संविधाने यत् किमपि सत्यपि एतस्याः अनुसूच्याः अधीनं सदनस्य कस्यापि सदस्यस्य निरर्हतया सम्बध्यमाने कस्मिन्नपि विषये कस्यापि न्यायालयस्य कापि अधिकारिता न भवेत् ।

**८. नियमाः**—(१) एतत्प्रच्छेदस्य (२) उपप्रच्छेदस्य अधीनं, सदनस्य सभापतिः अध्यक्षः वा एतस्याः अनुसूच्याः उपबन्धान् कार्यान्वितान् कर्तुं नियमान् प्रणेतुं क्षमते; तथा च विशिष्टतया, पूर्वोक्तानां शक्तीनां व्यापकतायां प्रतिकूलं प्रभावं अकृत्वा च, तादृशेषु नियमेषु निम्नलिखितान् विषयान् अधिकृत्य उपबन्धाः क्रियेरन्, तद्यथा—

(क) सदनस्य सदस्याः येषां राजनीतिकदलानां सदस्याः सन्ति तत्सम्बध्यमानं पञ्जीकरणं अन्यथा अभिलेखनं वा विषयीकृत्य;

(ख) सदनस्य कञ्चिदपि सदस्यं विषयीकृत्य विधानमण्डलदलस्य नेत्रा स्वदलस्य उक्तसदस्यस्य विषये २-प्रच्छेदस्य (१) उपप्रच्छेदस्य (ख) खण्डे निर्दिष्टस्वरूपं क्षमाप्रदानं अधिकृत्य प्रतिवेदनं, यस्मिन् प्रतिवेदनं देयं तं कालावधिं, यस्मै प्राधिकारिणे प्रतिवेदनं देयं तं प्राधिकारिणं च विषयीकृत्य;

**परिशिष्टम् —६**

(ग) तादृशानि प्रतिवेदनानि यादृशानि कश्चिद्राजनीतिकदलः सदनस्य कस्यचित् सदस्यस्य स्वदले प्रवेशविषये दद्यात्, तादृशं च अधिकारिणं यादृशाय तानि प्रतिवेदनानि देयानि विषयीकृत्य; तथा च

(घ) ६-प्रच्छेदस्य (१) उपप्रच्छेदे निर्दिष्टस्य कस्यचित् प्रश्नस्य विनिश्चयाय प्रक्रियां विषयीकृत्य यस्यां अन्तर्भवति तस्य परिप्रश्नस्य प्रक्रिया यः तादृशस्य प्रश्नस्य विनिश्चयार्थं क्रियेत ।

(२) एतत्प्रच्छेदस्य (१) उपप्रच्छेदस्य अधीनं सभापतिः, अध्यक्षः वा प्रणीतं नियमं प्रणयनात्परं यावच्छक्यं शीघ्रं सदनस्य समक्षं सङ्कलितत्रिंशद्दिनकालावधिपर्यन्तं निधापयेत् । एषः कालावधिः एकस्मिन्नेव सत्रे, सत्रद्वये, निरभाविषु तदधिकेषु सत्रेषु वा पूर्णः भवितुं क्षमते । सः नियमः तस्य त्रिंशद्दिनकालावधेः समाप्तौ कार्यकरः भवेत् यदि तत्पूर्वमेव अन्तरणैः सह, तद्विना वा, सदनस्य अनुमोदनं, अननुमोदनं वा न लभते । यदि नियमः एवं अनुमोदनं लभते तर्हि यथायथं तस्मिन् रूपे यस्मिन् सः निधापितः आसीत् अथवा यथान्तरिते रूपे कार्यकरः भवेत् । यदि च नियमः अननुमोदनं लभते तर्हि अकार्यकरः भवेत् ।

(३) सदनस्य सभापतिः अध्यक्षः वा यथायथं १०५-तमानुच्छेदस्य १९४-तमानुच्छेदस्य वा उपबन्धेषु, तेन एतस्य संविधानस्य अधीनं प्राप्तासु अन्यासु शक्तिषु च प्रभावं अकुर्वन् एतत् निदेष्टुं क्षमते यत् यदि कश्चित् जनः एतत् प्रच्छेदस्य अधीनं प्रणीतानां नियमानां सुविमृश्य उल्लङ्घनं करोति तर्हि तद्विषये तया रीत्या कार्यप्रवृत्तयः करणीयाः यया रीत्या सदनस्य विशेषाधिकारस्य हननविषये कार्यप्रवृत्तयः क्रियन्ते ।' ।

# संस्कृताङ्ग्ल-पर्यायसूची

| संस्कृतशब्दः | सन्दर्भः | आङ्ग्लपर्यायः |
|---|---|---|
| अक्षमता | 369 | incompetency |
| अखण्डता | 19 (2), (3), (4) | integrity |
| अखिलभारतीयन्यायिकसेवा | 312 | All India Judicial Service |
| अखिलभारतीयसेवा | 312 (1) | All India Service |
| अग्निचूर्णम् | स० अनु० 1-5 | ammunition |
| अग्न्यायुधानि | स० अनु० 1-5 | firearms |
| अग्रदायः | 267 (1) (2) | imprest |
| अग्राह्यम् | 114(2) | inadmissible |
| अग्रिमधनम् | 267(1)(2) | advance |
| अङ्गीकारः | 366(13) | undertaking |
| अङ्गीकृ | 252(1) | adopt |
| अतिक्रमणम् | 20(1) | violation |
| अतिरिक्त— | 321 | additional |
| अतिरिक्तलाभकरप्रकारकः करः | 366(29) | excess profits tax |
| अधिकतमक्षेत्रसीमा | न० अनु० (26) | ceiling area |
| अधिकतमसीमा | 31 अ(1)(ङ)पारन्तुकः | ceiling limit |
| अधिकतमसीमा | न० अनु० (21),(31) | ceiling |
| अधिकारः | 13(2) | right |
| अधिकारपृच्छा | 32(2) | quo warranto |
| अधिकारिता | 32(3) | jurisdiction |
| अधिनियम् | | enact |
| अधिनियमः | 123(2) | Act |
| अधिनियमनम् | 147 | enactment |
| अधिनिवेशः | 6(ख) | dominion |
| अधिपत्रम् | 124(2) | warrant |
| अधिप्रमाणीकृ | 166(2) | authenticate |
| अधिरोपणम् | 110(1) (क) | imposition |
| अधिवक्ता | 217(2)(ख) | advocate |
| अधिवासः | 5 | domicile |
| अधिसूचना | 13(3)(क) | notification |
| अधीनम् | 107(5) | subject |
| अध्यक्षः | 56(2) | speaker |
| अभ्यर्थना | 320(3)(घ) | claim |
| अध्यादेशः | 13(3)(क) | ordinance |
| अननुमोदित— | 352(8) | disapproved |
| अनागतरक्षापत्रम् | स०अनु०1-91 | policy of insurance |
| अनियमितता | 122(1) | irregularity |
| अनिवार्यतया अर्जनम् | 30(1अ) | compulsory acquisition |
| अनिवासः | 326 | non-residence |

| | | |
|---|---|---|
| अनुकूलनम् | 35(ख) | adaptation |
| अनुग्रहः | 337(प्रा० टि०) | concession |
| अनुच्छेदः | 3 स्पष्टी०-1 | article |
| अनुदानम् | 113(2) | grant |
| अनुदानानां अभियाचना | 113(2) | demand for grants |
| अनुध्यै | 115(1)(क) | contemplate |
| अनुपस्थितिः | | absence |
| अनुपस्थित्यनुमतिः | 125(2) पारन्तुकः | leave of absence |
| अनुपालनम् | 256 | compliance |
| अनुपूरक— | 4 | supplemental |
| अनुपूरकः | 115(1)(क) | supplementary |
| अनुप्रयोगः | 33, 37 प्रा० टि० | application |
| अनुप्राणनम् | 38(1) | inform |
| अनुमतिः | 110(4) | assent |
| अनुमुद् | 130 | approve |
| अनुयोज्य— | स० अनु० 3-8 | actionable |
| अनुयोज्यदोषः | स० अनु० 3-8 | actionable wrong |
| अनुलग्नम् | 31अ पारन्तुकः | appurtenant |
| अनुशासनिक— | 312अ(1)(क) | disciplinary |
| अनुषक्तिः | 102(1)(घ) | adherence |
| अनुसमर्थनम् | 368(2) पारन्तुकः | ratifieatian |
| अनुसारम् | 22(5) | in pursuance of |
| अनुसूचितक्षेत्राणि | प० अनु० 5(1) | scheduled areas |
| अनुसूचितजनजातिः | 15(4) | scheduled tribe |
| अनुसूचितजातिः | 15(4) | scheduled caste |
| अनुसूची | 1(2) | schedule |
| अन्यदेशीयः | स० अनु० 1-17 | alien |
| अनुरूपम् | 228(ख) | in conformity with |
| अन्तःकरणम् | 25(1) | conscience |
| अन्तःकरणस्य स्वातन्त्र्यम् | 25(1) | freedom of conscience |
| अन्तरिमादेशः | 226(3) | interim order |
| अन्तिमव्यवस्थादानम् | 132(3) स्पष्टी० | final disposal |
| अन्यसङ्क्रामणम् | स० अनु० 2-18 | alienation |
| अन्वेषणं कृ | 61(4) | investigate |
| अन्वेषणम् | 61(4) | investigation |
| अपर— | 205(1)(क) | additional |
| अपरआपराधिकन्यायाधीशः | 236 | additional sessions judge |
| अपरन्यायाधीशः | 376(3) | additional judge |
| अपरमण्डलन्यायाधीशः | 236 | additional district judge |
| अपरमुख्यप्रान्तीयदण्डाधीशः | 236 | additional chief presidency magistrate |
| अपराधः | 20 | offence |
| अपराधः | 326 | crime |
| अपवादानुदानम् | 206(1)(ग) | exceptional grant |

| | | |
|---|---|---|
| अपेक्षा | 16(3) | requirement |
| अपेक्षित— | 280(2) | requisite |
| अप्राप्तवयस्क: | स० अनु० 3-5 | minor |
| अबाधं सञ्चरणम | 19(1)(घ) | move freely |
| अभिकर्ता | 31अ (1)(घ) | agent |
| अभिभाषणम् | 86 | address |
| अभियाचना | 110(2) | demand |
| अभियुक्त: जन: | 134(1)(क) | accused person |
| अभिरक्षा | 110(1)(ग) | custody |
| अभिलेखन्यायालय: | 129 | court of record |
| अभिवच् | 124 | plead |
| अभिव्यक्तिस्वातन्त्र्यम् | 19(1)(क) | freedom of expression |
| अभिव्यक्ते: साधनम् | 351 | medium of expression |
| अभिसमय: | 253 | convention |
| अभ्यर्थी | 320(2) | candidate |
| अभ्यावेदनं कृ | 22(5) | represent |
| अभ्यावेदनम् | 22(5) | representation |
| अभ्यावेदनम् | 320(3)(ग) | memorials |
| अर्जनम् | 11 | acquisition |
| अर्थोपायाग्रिमधनम् | 266(1) | ways and means advances |
| अर्प | 76(2) | assign |
| अर्हता | 19(6) | qualification |
| अल्पसङ्ख्यकवर्गा: | 29, 30 | minorities |
| अल्पीकृ | 11 | derogate |
| अल्पीकृ | 31इ | abridge |
| अवमान: | 19(2), 129 | contempt |
| अवशिष्टा: उपबन्धा: | 394 | remaining provisions |
| अवसित — | 101(4) पारन्तुक: | adjourned |
| अवसितसत्रं | 101(4) पारन्तुक: | prorogued |
| अवाप्तमान्यता | 347 | recognised |
| अवैध— | 326 | illegal |
| अव्यहितपूर्वम् | 195 | immediately before |
| अव्यवहितपूर्ववर्तिन् | 337 | immediately preceding |
| असङ्गतम् | 140 | inconsistent |
| असमानता | 38(2) | inequalities |
| असम्यक्तया विनिश्चित: | 133(2) | wrongly decided |
| असैनिक— | 144 | civil |
| असैनिकपदानि | 310 | civil posts |
| असैनिक सेवा | 310 | civil service |
| अस्थायिन: | भाग: 21-शीर्षके | temporary |
| अस्पृश्यता | 17 | untouchability |
| आकस्मिकता | 70 | contingency |
| आकस्मिकतानिधि: | 110(1)(ग) | contingency fund |
| आकाश: | अनु० स०-1-21 | air |

| | | |
|---|---|---|
| आक्रमणम् | 352(1) | aggression |
| आक्षेपनिवेनम् | 262(2) | complaint |
| आङ्ग्लभारतीयः | 366(2) | Anglo-Indian |
| आङ्ग्लभारतीयसमुदायः | 333 | Anglo-Indian community |
| आचरणम् | 121, 311(2) पारन्तुकः | conduct |
| आजीविकासु करः | स० अनु० 2-60 | prefession tax |
| आज्ञप्तिः | 112(3)(च) | dccree |
| आत्मसात्कारः | 351 | assimilation |
| आदेशः | 13(3)(क) | order |
| आदेशेन | 128 | by order |
| आनुपातिकप्रतिनिधित्वपद्धतिः | 55(3) | system of proportional representation |
| आनुषङ्गिकम् | 169(2) | incidental |
| आन्तरिकी अशान्तिः | 371अ(1)(ख) | internal disturbance |
| आन्ताराज्यिक— | 262(1), 269(3) | inter-state |
| आपराधिक— | 132(1) | criminal |
| आपराधिकः आरोपः | 311(2)(क) | criminal charge |
| आपराधिकन्यायाधीशः | 236 | Sessions Judge |
| आपातः | 83(2) पारन्तुकः | emergency |
| आयकरः | 270 | income tax |
| आयुधानि | स०अनु० 1-5 | arms |
| आरक्षणम् | 16(4) | reservation |
| आरक्षिबलम् | स० अनु० 1-80 | police force |
| आरोपः | 311(2) | charge |
| आर्थिकपरित्यागः | 39(च) | material abandonment |
| आर्थिकशास्तिः | 110(2) | pecuniary penalty |
| आवण्टितानि | 158(3) | allocated |
| आवर्तक— | 275(1) पारन्तुकः | recurring |
| आवेदनम् | 6(ख)(द्वि०) | application |
| आशयः | 90 पारन्तुकः | intention |
| आहिण्डनम् | स० अनु० 3-15 | vagrancy |
| आहूतं कृ | 85(1) | summon |
| इच्छापत्रहीनत्वम् | स० अनु० 3-5 | intestacy |
| उच्चतमन्यायालयः | 32(1) | Supreme Court |
| उच्चन्यायालयः | 112(3)(घ)(तृ) | High Court |
| उत्तराधिकारी | 156(3), 295(2) | successor |
| उत्प्रवासनम् | स० अनु०1-19 | emigration |
| उत्प्रेषणम् | 32(2) | certiorari |
| उद्घोषणा | 172(1) पारन्तुकः | proclamation |
| उद्दीपनम् | 19(2) | incitement |
| उद्देश्यम् | 356(1)(ग) | object |
| उन्मुक्तिः | 65(3) | immunity |
| उपकरः | 277 | cess |
| उपखण्डः | 366(27) | sub clause |

| | | |
|---|---|---|
| उपबन्धः | 4 | provision |
| उपराष्ट्रपतिः | 63 | Vice President |
| उपविधिः | 13(3)(क) | bye-law |
| उपवेशनम् | 100(1) | sitting |
| उपसभापतिः | 371अ(1)(घ) | vice chairman |
| उपसभापतिः | 11 अनु० इ(8) | deputy president |
| उपसभापतिः | 182 | deputy chairman |
| उपस्थातुं कार्यं कर्तुं च | 128 | sit and act as (a judge) |
| उपस्थापनम् | 200 पारन्तुकः | presentation |
| उपान्तरणम् | 372(2) | modification |
| उपाध्यक्षः | 181(1) | deputy speaker |
| उपायः | 257(3) | measure |
| उपायुक्तः | 371अ(1)(ध)(प्र०) पारन्तुकः | deputy commissioner |
| उल्लङ्घनेन | 13(2) | in contravention of |
| ऋणभाराः | 366(8) | debt charges |
| ऋणशोधनाक्षमता | स० अनु० 3-9 | bankruptcy |
| ऋणशोधनाशक्तः | 102(1)(ग) | insolvent |
| ऋणशोधनाशक्तता | स० अनु० 3-9 | insolvency |
| एकरूपता | 55(2) | uniformity |
| एकलसङ्क्रमणीयमतम् | 55(3) | single transferable vote |
| एकाकिन्यायाधीशः | 145(2) | single judge |
| एवं निरुद्धः | स० अनु० 1-9 | subjected to (preventive detention) |
| औद्योगिकविवादाः | स०अनु० 1-61 | industrial disputes |
| करणम् | 373 प्रा०टि० | make (order) |
| करणम् | 20(1) | commission |
| करणाय तात्पर्यितम् | 320(3)(घ) | purporting to be done |
| करस्य अधिरोपणम् | 199(1)(क) | imposition of tax |
| करस्य उत्सादनम् | 199(1)(क) | abolition of tax |
| करस्य परिवर्तनम् | 199(1)(क) | alteration of tax |
| करस्य परिहारः | 199(1)(क) | remission of tax |
| कर्तव्यताभारः | 49 | obligation |
| कर्त्तव्यम् | 37 | duty |
| कर्मकराणां प्रतिकरः | स० अनु० 3-24 | workmen's compensation |
| कर्मकराणां भागित्वम् | 43अ | participation of workers |
| कारणम् | 22(4)(क) | cause |
| कारागाराः | स० अनु० 2-4 | prisons |
| कारागारे निरोधः | 361(3) | imprisonment |
| कार्यकारिन्यायाधीशः | 376(3) | acting judge |
| कार्यपालिका | 50, 53 | executive |
| कार्यप्रवृत्तिः | 32(1) | proceedings |
| कार्यप्रवृत्तिः | 132(1), 228 | case |
| कार्यप्रवृतीनां रोधः | 145(1)(ज) | stay of proceedings |
| कार्यसञ्चालनम | 118(1) | conduct of business |

| | | |
|---|---|---|
| कृत्यानि | 258(1) | functions |
| कृषिऋणिता | स० अनु० 2-30 | agricultural indebtedness |
| कृषिभूमि: | स० अनु० 2-18 | agricultural land |
| कृषिसम्बन्धिन: उद्धारा: | स० अनु० 2-18 | agricultural loans |
| कृष्याय: | 270(1) | agricultural income |
| कृष्यायेषु कर: | स० अनु० 2-46 | agriculture income tax |
| केन्द्रीयविभाग: | स० अनु० 1-8 | central bureau |
| केन्द्रीयाधिनियम: | न० अनु० 63, 64 | central Act |
| क्रयेकर: | 269(1)(च) | purchase tax |
| क्षतिपूर्ति प्रदा | 34 | indemnify |
| क्षतिमूलकं निवृत्तिवेतनम् | द्वि अनु० भाग घ 9(1) | wound pension |
| क्षम: | 13(3)(ख), 102(1)(ख) | competent |
| क्षेत्रम् | 3(ख) | area |
| खण्ड: | 7 पारंतुक: | clause |
| खण्डन्यायालय: | 145(2) | division court |
| खननवसति: | स० अनु० 2-5 | mining settlement |
| खनिअधिकार: | स० अनु० 2-50 | mineral right |
| गणना | 279(2) | calculate |
| गणपूर्ति: | 100 प्रा० टि० | quorum |
| गणराज्यम् | प्रस्ता० | republic |
| 'गवर्नरजनरल' इत्याख्य: | 392(3) | governor general |
| गुप्तमतदानम् | 55(3) | secret ballot |
| गोपनीयता | 75(4) | secrecy |
| ग्राम: | ष० अनु० 4(1) | village |
| ग्रामपञ्चायतम् | 40 | village panchayat |
| ग्रामपदम् | न० अनु० (49) | village office |
| ग्रामपरिषद: | ष० अनु० 4(1) | village councils |
| ग्राह्यम् | 108(4) | admissible |
| घटनम् | 136(2) | constitute |
| घोषणा | 352(1) | declaration |
| चर्चा | 87(2) | discussion |
| जन: | 21, 233(1) | person |
| जनगणना | 55(3) स्पष्टी० | census |
| जना: | प्रस्ता० | people |
| जिज्ञासाभाव: | 51अ(ज) | spirit of enquiry |
| ज्ञा | 100(2) | discover |
| ज्ञापनम् | 340(3) | memorandum |
| ज्येष्ठता | 371ई(3)(ख) | seniority |
| तत्स्थानिप्रान्त: | 366(7) | corresponding province |
| तत्स्थानिराज्यम् | 366(7) | corresponding state |
| तत्स्थानीय— | 195, 294(क) | corresponding |
| तथ्यम् | 22(6) | fact |
| तदर्थन्यायाधीश: | 127 | ad-hoc judge |
| त्यागपत्रम् | 56(2) | resignation |

| | | |
|---|---|---|
| दण्ड् | 159 | punish |
| दण्डप्रक्रियासंहिता | स० अनु० 3-2 | Code of Criminal Procedure |
| दण्डादेश: | 161 | sentence |
| दण्डाधीश: | 22(2) | magistrate |
| दण्डाधीशस्य न्यायालय: | 22(2) | court of the magistrate |
| दत्तसाक्ष्यम् | 311(2) पारन्तुक: | evidence adduced |
| दाण्डिककार्यप्रवृत्ति: | 361(2) | criminal proceedings |
| दुरुपयोग: | 39 | abuse |
| दुर्भाव: | 361 अ(1) | malice |
| दृष्टाङ्क: | स० अनु० 1-19 | visa |
| देशीयकरणम् | स० अनु० 1-17 | naturalisation |
| देशीयराज्यम् | 366(15) | Indian state |
| दैहिकस्वतन्त्रता | 21 | personal liberty |
| दोषमुक्ति: | 134(1)(क) | acquittal |
| दोषसिद्धि: | 20 | conviction |
| द्यूतेषु कर: | स० अनु० 2-62 | gambling tax |
| द्वेष: | तृ० अनु० 8 | illwill |
| द्वैवार्षिक— | 325(4) | biennial |
| धनविधेयकम् | 107(1) | money bill |
| धर्मं अभ्युपगम् | 25(2) स्पष्टी० 2 | profess religion |
| धर्मस्य अबाधं अभ्युपगम: | 25 प्रां० टि० | free profession of religion |
| धर्मस्य अबाधं अभ्युपगमे, आचरणे प्रचारेच | 25(1) | freely to profess, practice and propagate religion |
| धर्मस्य स्वातन्त्र्यम् | 25 | freedom of religion |
| धारणम् | तृ० अनु० | uphold |
| धार्मिककार्याणां प्रबन्धे स्वतन्त्रता | 26 प्रा० टि० | freedom to manage religious affairs |
| धार्मिकसम्प्रदाय: | 26 | religious denominations |
| धार्मिकोपासना | 28(3) | religious worship |
| नागरिक: | 10 | citizen |
| नागरिकता | 11 | citizenship |
| नागरिकताधिकार: | 6 प्रा० टि०, 7 प्रा० टि० | right of citizenship |
| नामनिर्दिष्ट: | 127(1)(2) | designated |
| नावधिकरणम् | स० अनु० 1-95 | admiralty |
| नावधिकरणविषये अधिकारिता | स० अनु० 1-95 | admiralty jurisdiction |
| नि:शुल्का वैधिकसहायता | 39अ-प्रा० टि० | free legal aid |
| नि:सारणम् | न० अनु० (44) | eviction |
| निक्षेपनिधि: | 112(3)(ग) | sinking fund |
| निगम: | 19(6)(द्वि०) | corporation |
| निगमकर: | 366(6) | corporation tax |
| निगमित— | 317(4) | incorporated |
| निजकोश: | 291 | privy purse |
| निदेश: | 32(2), 324 | direction |
| निदेशकानि तत्वानि | भाग: 4 शीर्षके | directive principles |

| | | |
|---|---|---|
| निधि: | 229(3) | fund |
| नियन्त्रकमहालेखापरीक्षक: | 112(3)(ङ), 148 | Comptroller and Auditor General |
| नियन्त्रणम् | 12 | control |
| नियम: | 366(9) | rule |
| नियोजनम् | 98(2) | recruitment |
| निरन्तरम् | 75(5) | consecutive |
| निरर्ह: | 102(1) | disqualifiied |
| निरसनम् | 31आ | repeal |
| निराकृ | 33 | abrogate |
| निरायुधम् | 19(1)(ख) | without arms |
| निरोध: | 22 | detention |
| निर्णय: | 374(2) | judgment |
| निर्णायकं मतम् | 100(1) | casting vote |
| निर्देश: | 3 पारन्तुक:, 25(2)स्पष्टी०द्वि० | reference |
| निर्धारणम् | न० अनु० (23) | assessment |
| निर्धृ | ष० अनु० 8(1) | assess |
| निर्बन्धनम् | 15(2), 19(2), 34 | restriction |
| निर्योग्यता | 15(2) | disability |
| निर्वचनम् | 145(3) | interpretation |
| निर्वाचकगण: | 54, 66(1) | electoral college |
| निर्वाचकमण्डलम् | 171(3)(क) | electorate |
| निर्वाचनक्षेत्रम् | 81(1)(क) | constituency |
| निर्वाचननामावल्य: | 327 | elecoral rolls |
| निर्वाचनम् | 55(1) | election |
| निर्वाचनायुक्त: | 324 | election commissioner |
| निर्वाचनायोग: | 324 | election commission |
| निर्वाहवेतनम् | 43 | living wage |
| निलम्ब | 72(1) | suspend |
| निवार | 15(3), 19(2) | prevent |
| निवारकनिरोध: | 22(7)(क) | preventive detention |
| निवारणम् | 350 | redress |
| निवृत्ति: | 148(3) परन्तुक: | retirement |
| निवास: | 19(1)(ङ) | settle |
| निषिध् | 17 | forbid |
| निष्कासनम् | स० अनु० 1-19 | expulsion |
| निष्क्रान्तसम्पत्ति: | स० अनु० 3-41 | evacuee property |
| निष्ठा | 69, 102(1)(घ) | allegiance |
| निष्ठां अभिस्वीकृ | 102(1)(घ), 191(1)(घ) | acknowledgement of allegiance |
| निहिताम् | 53(1) | vest |
| नीति: | 30 | policy |
| नैतिकपरित्याग: | 39(च) | moral abandonment |
| नैतिकपरित्याग: आर्थिकपरित्यागश्च | 39(च) | moral and material abondonment |

| | | |
|---|---|---|
| नौसेना | 257(2) | naval force |
| न्यस् | 258(1) | entrust |
| न्याय: | प्रस्ता० | justice |
| न्यायनिर्णयनम | 262(1) | adjudication |
| न्यायपालिका | 50 | judiciary |
| न्यायप्रशासनम् | 371अ(1)(क)(तृ) | administration of justice |
| न्यायवादी | 227(3) | attorney |
| न्यायविषयककार्यप्रवृत्ति: | स० अनु० 3-5 | judicial proceeding |
| न्यायसम्बन्धिकृत्यम् | 260 | judicial function |
| न्यायसम्वन्धिसेवा | 235 | judicial service |
| न्यायसम्बन्धिसेवायां स्थितं पदम् | 236 | judicial post |
| न्यायाधीश: | 124(2अ) | judge |
| न्यायालय: | 145 | court |
| न्यायालय: | 372(2) | court of law |
| न्यायालय: न्यायाधिकरणं वा | 136 | court or tribunal |
| न्यायालयेन निर्णीयते | 317(3)(क) | is adjudged |
| न्यायिक— | 144 | judicial |
| न्यायिक: प्राधिकारी | 144 | judicial authority |
| न्यायिकपदम् | 217(2) स्पष्टी० (क) | judicial office |
| न्यायिकमुद्राङ्का: | स० अनु०3-44 | judicial stamps |
| न्यायिका: प्राधिकारिण: | 144 | judicial authorities |
| न्याय्यम् | 42 | just |
| पक्षपात: | तृ० अ० 8 | favour |
| पदपङ्क्तौ अवनत: | 311(2) | reduced in rank |
| पदम् | 16(4) | posts |
| पदानि | 351 | vocabulary |
| पदानुक्रम: | 323आ(3)(क) | hierarchy |
| पदावधि: | 56, 156 प्रा० टि० | term(of office) |
| पदेन | 64 | ex-officio |
| पद्धति: | 39अ | system |
| परमादेश: | 32(2) | mandamus |
| परम्परा | 51अ(च) | heritage |
| परिणिश्चि | 244अ(2) | to define |
| परित्याग: | 39 | abandonment |
| परिपत्रम् | स०अनु०1-19 | passport |
| परिभाषा | 12, 366 | definition |
| परिवर्तनम् | 3, 110(1)(क) | alteration |
| परिवर्तित: | 372 | altered |
| परिवृत् | 3(घ)(ङ) | alter |
| परिसीमनम् | 327 | delimitation |
| परिसीमा | 134(2) | limitatlon |
| परिहार: | 72 प्रा०टि०, 72(1), 161 | remission |
| पाठा: | 348(1)(ख) | texts |
| पात्रम् | 58(1) | eligible |

| | | |
|---|---|---|
| पारन्तुकः | 3 स्पष्टी० 1 | proviso |
| पारिणामिकः | 4(1), 315(3) | consequential |
| पारित— | 13(3)(ख) | passed (a law) |
| पारितः आदेश | 261(3) | pass order |
| पालनम् | 360(3) | observance |
| पालनम् | 71(2) | performance |
| पीठासीनः भू | 92(1) | preside |
| पुञ्जीकरणम् | 39(ग) | concentration |
| पुनः अधिनियमनम् | न० अनु० (35) | re-enactment |
| पुनः निर्वाचनम् | 57 | re-election |
| पुनः समायोजनम् | 170(3) | readjustment |
| पुनःस्थापनम् | 34 | restoration |
| पुनरवलोकनम् | 111 | reconsider |
| पुनर्घटनम् | 352(4) पारन्तुकः | reconstitution |
| पुनर्निवासः | 7 परन्तुकः | resettlement |
| पुनर्वासः | स० अनु० 3-27 | rehabilitation |
| पुनर्विचारं प्रार्थयन् | 132(3) स्पष्टी० | appellant |
| पुनर्विचारन्यायालयः | ष० अनु० 4(2) | court of appeal |
| पुनर्विचारप्रार्थना | 133(1), 134(2) | appeal |
| पुनर्विचारप्रार्थनायाः अधिकारः | 235 | right of appeal |
| पुनर्विचाराधिकारिता | 132 प्रा० टि० | appellate jurisdiction |
| पुनर्विलोकनम् | 137 | review |
| पुरःप्रशंसनम् | 198(3),(4) | recommendation |
| पुरःस्थापनम् | 3 पारन्तुकः | introduce (a bill) |
| पूर्वगामिन् | 34 | foregoing |
| पृष्ठाङ्कनम् | 110(4) | endorsement |
| पोषणम् | 26(क) | maintain |
| प्रक्रिया | 116(1)(क), 119 | procedure |
| प्रख्यापनम् | 123(1) | promulgation |
| प्रतिकरात्मक— | 222(2) | compensatory |
| प्रतिकूलं प्रभावम् | 32(3) | prejudice |
| प्रतिज्ञा | 60 | affirm |
| प्रतिनिधानम् | 81(1)(ख) | represent |
| प्रतिनिधित्वपत्रिका | स० अनु० 1-91 | proxies |
| प्रतिपालकाधिकरणम् | स० अनु० 1-34 | court of wards |
| प्रतिबन्धः | 98(2)(3), 106 | condition |
| प्रतिरक्षणं कृ | 60 | defend |
| प्रतिरक्षा | 22(1) | defence |
| प्रतिव्यक्तिकरः | स० अनु० 2-61 | capitation tax |
| प्रतिषेध— | 139 | prohibition (writ of) |
| प्रतिषेधः | 15 | prohibition |
| प्रतिसंहृ | 312अ(1)(क) | revoke |
| प्रत्ययानुदानम् | 116 प्रा० टि० | vote of credit |
| प्रत्यादा | 104 | recover |
| प्रत्याभूतिः | 292 | security |

| | | |
|---|---|---|
| प्रत्यायुज् | 357(1)(क) | delegate |
| प्रत्यक्षं निर्वाचनम् | 81, 170(1) | direct election |
| प्रत्यर्पणम् | स० अनु० 1-18 | extradition |
| प्रत्याभूतिः | 110(1)(ख) | guarantee |
| प्रथा | 13(3)(क) | usage |
| प्रधानमन्त्री | 74(1) | Prime Minister |
| प्रबन्धाभिकर्ता | 31 अ(1) (घ) | managing agent |
| प्रभुतायाः रक्षणम् | 51 | protect the sovereignty |
| प्रयतनम् | 38 | strive |
| प्रयोगः | 19(3) | exercise |
| प्रवर्तनम् | 32(1) | enforcement |
| प्रवर्तनम् | 370 | operation |
| प्रवर्तनात् प्रविरतः | 249(2),(3) | ceased to be in force |
| प्रवर्तमानः अनुवर्तेत | 249(2) पारन्तुकः | continue in force |
| प्रविरम् | 148(4) | cease |
| प्रविलम्बनम् | 161 | reprieve |
| प्रवृत्त- | 76(2) | in force |
| प्रवृत्तः | 227(3) पारन्तुकः | in force |
| प्रवृत्तः भू | 249(2) | remain in force |
| प्रवृत्तः भू | 394 | come into force |
| प्रवेशः | 370 | accession |
| प्रवेशः | 15(2)(क) | access |
| प्रवेशकरः | 366(28) | impost |
| प्रवेशलिखितम् | 370 | instrument of accession |
| प्रव्रज् | 6(ख)(1) | migrate |
| प्रव्रजनम् | स० अनु० 1-81 | migration |
| प्रव्रजिताः | 7 प्रा० टि० | migrants |
| प्रशासकः | 239(1), (2) | administrator |
| प्रश्नः | 132(1) | question |
| प्रश्नगतं कृ | 122(1) | call in question |
| प्रसंविद् | 131 पारन्तुकः | covenant |
| प्रस्तावः | 121 | motion |
| प्रस्तावना | प्रस्ता० | preamble |
| प्रादेशिकः आयुक्तः | 324(4) | regional commissioner |
| प्रादेशिकनिर्वाचनक्षेत्रम् | 81(2)(ख) | territorial constituency |
| प्रादेशिकपरिषत् | 371 अ(1)(घ)(i) | regional council |
| प्रादेशिकभाषाः | 345 शीर्षके | regional languages |
| प्राधिकरणम् | | authorisation |
| प्राधिकरणस्य लम्बनावस्थायाम् | 267(1) | pending authorisation |
| प्राधिकारिणः | 12, 22(5) | authorities |
| प्राधिकारी | 13(3)(ख) 16(3) | authority |
| प्राधिकृतं कृ | 22(4), 343(2) पारन्तुकः | authorise |
| प्राधिकृतः | 348(1)(ख) | authoritative |
| प्रातिभाव्यम् | 145(1)(घ) | bail |

| | | |
|---|---|---|
| प्राप्तः इति मतम् | 244 अ (2) (ग) | attributable |
| प्राप्तवयस्कमताधिकारः | 326 प्रा० टि० | adult sufferage |
| प्रारम्भः | 5 | commencement |
| प्रारम्भिक- | 131 प्रा० टि० | original |
| प्रिविकौंसिल | 395 | privy council |
| प्रोद्भू | 31अ (1) (ङ) | accrue |
| प्रोद्भूतः अधिकारः | 363 | right accruing |
| 'फेडरल' न्यायालयः | 112 (3) (घ) (द्वि), 374 | federal court |
| बन्दीप्रत्यक्षीकरणम् | 32 (2) | habeas corpus |
| बलं कार्यक्षमता च | 123 (2) | force and effect |
| बहुमतम् | 61 (2) (ख) | majority |
| बाधकम् | 336 (2) | bar |
| बालसुधारणालयः | स० अनु० द्वि०-4 | reformatory |
| बाह्याक्रमणम् | 352 (1) | external aggression |
| "बोर्स्टल" संस्था | स० अनु० 2-4 | borstal institution |
| भवनेषु करः | स० अनु० 2-99 | building tax |
| भविष्यनिधिः | 366 (17) | provident fund |
| भविष्यापणानि | 269 (1) (ङ) | future markets |
| भागकल्पनम् | 329 (क) | allotment |
| भागिता | स० अनु० 3-7 | partnership |
| भाटकन्यायालयः | स० अनु० 2-3 | rent court |
| भारतशासनम् | 320 (3) (घ) | government of India |
| भारताधिनिवेशे प्रवेशः | 370 (1) (ख) (i) | accession to dominion of India |
| भारतीयदण्डसंहिता | स० अनु० 3-1 | Indian Penal Code |
| भारतीयप्रशासनिकसेवा | 312 (2) | Indian Administrative Service |
| भारतीयारक्षि सेवा | 312 (2) | Indian Police Service |
| भारितत्वम् | 290 (क) | charge |
| भाषाकीयाल्पसङ्ख्यकाः | 350आ(1) | linguistic minorities |
| भुक्तिः | 296 पारन्तुकः | possession |
| भूतलक्षी | 371 आ (2) (घ) | retrospective |
| भूधृतिधारकः | 31अ (2) (ख) | tenure holder |
| भूमिषु करः | स०अनु० 2-49 | land tax |
| भूमेः अर्जनम् | न०अनु० (16) | land acquisition |
| भूमेः प्रापणम् | न०अनु० (15) | land acquisition |
| भूराजस्वः | 31अ (2) (ख) | land revenue |
| भौतिकसम्पत्तिः | 39 (ख) | material resource |
| मण्डलपरिषत् | ष० अनु०5 (1) | district council |
| मतदानम् | 55 (3) | ballot |
| मतदानाधिकारः | 31अ (1) (घ) | voting right |
| मतम् | 55 (2) | vote |
| मताधिकारः | 326 | suffrage |
| मध्यस्थनिर्णयः | 112 (3) (च) | award |
| मध्यस्थन्यायाधिकरणम् | 112 (3) (च) | arbitral tribunal |

| | | |
|---|---|---|
| मध्यस्थेन | 257(4) | by arbitrator |
| मनोरञ्जनेषु करः | स०अनु० 2-62 | amusement tax |
| मनोविकलता | स० अनु० 3-16 | mental deficiency |
| मन्त्रणा | 263(क) | advice |
| मन्त्रणापरिषत् | प०अनु०4(1),(2) | advisory council |
| मन्त्रणामण्डली | 22(4)(क) | advisory board |
| मन्त्रिपरिषत् | 74(1), 239(2) | council of ministers |
| मन्त्री | 74(2) | minister |
| महत्ता | 116(1)(ख) | magnitude |
| महाधिवक्ता | 165 | Advocate General |
| महान्यायवादी | 76 | Attorney General |
| महाप्रशासकः | स० अनु० तृ०11 | Administrator General |
| महाभियोगः | 56(1) पारन्तुकः(ख) | impeachment |
| महासमुद्रम् | स० अनु० 1-21 | high seas |
| मातृभाषा | 120(1) पारन्तुकः | mother tongue |
| मध्यस्थम् | 51(घ) | arbitration |
| मानवस्य दुर्व्यापारः | 23 | traffic in human beings |
| मानवोचिता (कर्मणः) दशाः | 42 | humane conditions |
| मानहानिः | 19(2) | defamation |
| मुख्यः | 363(2)(ख) | chief |
| मुख्यन्यायमूर्तिः | 124(1), 236(क) | Chief Justice |
| मुख्यप्रान्तीयदण्डाधीशः | 236(क) | Chief Presidency magistrate |
| मुख्यमन्त्री | 163, 164 | Chief Minister |
| मुख्यस्थानम् | 231(2)(ग) | principal seat |
| मुद्रा | 217(1) | seal |
| मुद्राङ्कशुल्कः | 268(1) | stamp duty |
| मूलकर्तव्यानि | 51अ | fundamental duties |
| मूलाधिकारः | 13 प्रा० टि० | fundamental right |
| मूल्यनियन्त्रणम् | स० अनु० 3-34 | price control |
| मोचनभारः | 112(3)(ग) | redemption charges |
| यन्त्रनोदितेषु यानेषु करः | स० अनु० 2-57 | vehicles tax |
| यायावरीयाः जनजातयः | स० अनु० 3-15 | nomadic tribes |
| युक्तियुक्तम् | 19(3) | reasonable |
| रक्षोपायः | 338(2) | safeguard |
| रचना | 171(2) | composition |
| रागः | तृ० अनु० 8 | affection |
| राजकोषहुण्डिका | 266(1) | treasury bill |
| राजगामित्वं | 96 | escheat |
| राजनयिक- | 8 | diplomatic |
| राजनीतिकः न्यायः | प्रस्ता० | polilical justice |
| राजपत्रम् | 366(19) | official gazette |
| राजभाषा | 210(1) | official language |
| राजस्वन्यायालयः | स० अनु० 2-3 | revenue court |
| राजस्वम् | 225 पारन्तुकः | revenue |

| | | |
|---|---|---|
| लोकसेवायोग: | 315 | public service commission |
| लोकस्वास्थ्यम् | 47 | public health |
| लोकहितम् | 31अ(1)(ग) | public interest |
| लोकाधिसूचना | 364(1) | public notification |
| लौकिक- | 25(2)(क) | secular |
| वणिक्पोतीय— | स० अनु० 1-25 | mercantile marine |
| वय: आप् | 217(i) | attain age |
| वयस् | 157, 316(2) | age |
| वर्गादिमूल: भेदभाव: | 51अ(ङ) | sectional diversities |
| वाक् स्वातन्त्र्यम् | 19(1)(क) | freedom of speech |
| वाणिज्य- | 8, स०अनु० 1-11 | consular |
| वाणिज्यदूतिक: | 8 | consular representative |
| वादहेतुक: | 226(2) | cause of action |
| वादी | 284 प्रा० टि० | suitor |
| वायुपथ: | 364(2)(ख) | airways |
| वार्धक्यम् | 41 | old age |
| वार्षिकवित्तविवरणम् | 112(1) | annual financial statement |
| वार्षिकी | 366(4) | annuity |
| विकलता | स०अनु०3-16 | deficiency |
| विकला: | स०अनु० 3-16 | deficients |
| विकासव्यय: | 371(2)(ख) | developmental expenditure |
| विक्रये कर: | 269(1)(च) | sales tax |
| विघटनम् | 107(4) | dissolution |
| वित्तायोग: | 264 | finance commission |
| वित्तीय: प्रत्यय: | 360(1) | financial credit |
| वित्तीयवर्षम् | 115(1) | financial year |
| वित्तीयविधेयक: | 107(1) | financial bill |
| वित्तीयविवरणम् | 112(2) | financial statement |
| वित्तीयविषयाणाम् | 112 | of financial matters |
| वित्तीयस्थायित्वम् | 360 | financial stability |
| वित्तीयौचित्यम् | 360(3) | financial propriety |
| विदेशा: | स०अनु० 1-14 | foreign countries |
| विद्यमान: विधि: | 366(10) | existing law |
| विद्यमानविधि: | 213(3) पारन्तुक: | existing law |
| विधा | 124(1) | prescribe |
| विधान— | 55(2), 168(2) | legislative |
| विधानपरिषत् | 196(1) | legislative council |
| विधानप्रक्रिया | 196 | legislative procedure |
| विधानम् | 35 प्रा०टि० | legislation |
| विधानमण्डलम् | 3 पारन्तुक: | legislature |
| विधानमण्डलस्य सदनम् | 59(1) | house of the legislature |
| विधानसभा | 171(3)(घ), 213(1) | legislative assembly |
| विधायिनी शक्ति: | 123 | legislative power |
| विधायीनि कृत्यानि | 260 | legislative functions |

| | | |
|---|---|---|
| विधि: | 4 | law |
| विधिकार्यप्रवृति: | 300(2)(ख) | legal proceedings |
| विधिना स्थापित: | 21 | established by law |
| विधिमान्य- | 189(2) | valid |
| विधिमान्यनिविदा | स० अनु० 1-36 | legal tender |
| विधिवेत्ता | 124(3)(ग) | jurist |
| विधिव्यवसायी | 22(1) | legal practitioner |
| विधिशक्ति: | 13(3)(क) | force of law |
| विधिसमक्षे समता | 14 | equality before law |
| विधीनां समसंरक्षणम् | 14 | equal protection of laws |
| विधे: अथवा व्यवस्थाया: | 371अ(1)(ख) | of law and order |
| विधेयकम् | 3 पारन्तुक: | bill |
| विधेयकस्य प्राप्ति: | 108(1)(घ) | reception of bill |
| विनियमनम् | 110(1)(क) | regulation |
| विनियुज् | 27, 268 प्रा० टि० | appropriate |
| विनियोग: | 114(3), 119 | appropriation |
| विनिश्चय: | 103(1) | decision |
| विभेद: | 23(2) | discrimination |
| विमत: निर्णय: | 145(5) | dissenting judgment |
| विमति: | 145(5) | dissent |
| विमानक्षेत्रम् | 364(1)(क), 2(ख) | aerodrome |
| विमानपरिवहणम् | 364(2)(ख) | air-navigation |
| विमानम् | 364(2)(ख) | air-craft |
| विमानयातायात: | स० अनु० 1-39 | air traffic |
| विमुक्त- | 285(1) | exempt |
| वियुज् | 21 | deprive |
| विरचनां कृ | 269(3) | formulate |
| विरुद्ध: | 213(3) पारन्तुक: | repugnant |
| विलयनम् | प्र० अनु० 1-11 | merger |
| विलासवस्तुषु कर: | स० अनु० 2-62 | luxuries tax |
| विलुप् | 371 ई(5) पारन्तुक: | annul |
| विलोपनम् | ष अनु० 15(1) | annulment |
| विवरणम् | 205 | statement |
| विवरणी | 227(2)(क) | returns |
| विवाद: | 262 | dispute |
| विशिष्ट: कर: | 366(28) | special tax |
| विशेषज्ञानम् | 80(3) | special knowledge |
| विशेषनिदेशा: | 350 शीर्षके | special directives |
| विशेषनिर्वाचकनामावलि: | 325 | special electoral roll |
| विशेषसमय: | 138(2) | special agreement |
| विशेषाधिकार: | 105(3) | privilege |
| विशेषाधिकारी | 338 | special officer |
| विशेषानुमति: | 136(1) | special leave |
| विशेषाभिभाषणम् | 87 प्रा० टि० | special address |

| | | |
|---|---|---|
| विशेषार्हता | 310(2) | special qualification |
| विशेषावधानता | 46 | special care |
| विशेषोपबन्धः | 15(3) | special provision |
| विषयीकरणम् | 218 | application |
| विष्टिः (बेगार) | 23(1) | forced labour |
| विस्फोटकम् | स० अनु० 1-5 | explosive |
| वृत्तिकर्म (अधिकारः) | 41 | right to work |
| वृद्धिः | 112(3)(ग), 202(3)(ग) | interest |
| वेलापत्तनप्राधिकरणम् | स० अनु० 1-27 | port authority |
| वैज्ञानिकदृष्टिकोणम् | 51अ(ज) | scientific temper |
| वैदेशिकअधिकारिता | 260 | foreign jurisdiction |
| वैदेशिकऋणानि | स० अनु० 1-37 | foreign loans |
| वैदेशिकः शत्रुः | 22(3)(क) | alien enemy |
| वैदेशिककार्याणि | स० अनु० 1-10 | foreign affairs |
| वैदेशिकराज्यम् | 367(3) | foreign state |
| वैधिक- | 39 अ, 131 | legal |
| वैयक्तिकरूपेण | 361(4) | personal capacity |
| व्यक्तिगतनिर्णयः | 371अ(1)(ख) | individual judgment |
| व्यपगतत्वम् | 296 | lapse |
| व्यपगम् | 107(3) | to lapse |
| व्यवधानम् | 174 | intervene |
| व्यवस्थादानम् | 132 स्पष्टी० | disposal |
| व्यवहारन्यायिकपदानि | 236(ख) | civil judicial posts |
| व्यवहारप्रक्रिया | स० अनु० 3-13 | civil procedure |
| व्यवहारप्रक्रियासंहिता | स० अनु 3-13 | Code of Civil Procedure |
| व्यवहारसंहिता | 44 | civil code |
| व्यवहृ | 235 | deal with |
| व्यापकता | 31आ | generality |
| व्यापारस्य, वाणिज्यस्य, समागमस्य च स्वतन्त्रता | 301 प्रा० टि० | freedom of trade, commerce and intercourse |
| व्यावृत्तिः | 305 प्रा० टि० | savings |
| शक्तिः | 321 | power |
| शपथं कारय | 164(3) | administer oath |
| शपथः | 60 | oath |
| शपथकरणं हस्ताङ्कितकरणं च | 124(6) | make and subscribe oath |
| शब्दः | 308 | expression |
| शरणार्थिनः | न० अनु० 15 | refugees |
| शाश्वतः उत्तराधिकारः | ष० अनु० 2(3) | perpetual succession |
| शासकः | 363(2)(ख) | ruler |
| शासनम् | 317(4), 320(3)(ग) | government |
| शासिनिकायः | 16(5) | governing body |
| शिक्षा | 350अ | instruction |
| शिक्षायाः अधिकारः | 41 | right to education |
| शिष्टजीवनस्तरः | 43 | decent standard of life |

